स्मर्त्तव्यश्चास्मिन्प्रसङ्गे कपालमूलिकं[1] नाम त्रिकोणम्। तस्य हि उत्तर-बाहुः शिरःपृष्ठदण्डिका गुर्वी। पार्श्वसीमा उत्तरतिरश्चीना। अधोबाहुः अधर-तिरश्चीना।

अस्य च त्रिकोणस्य भूमिः आद्यग्रीवाकशेरुकयोरन्तरालस्था स्नायुपट्टिका दन्तचूडायाः पश्चिमार्द्धञ्च। तस्मिंश्च त्रिकोणे दृश्या—मस्तिष्कमातृका नाम धमनी प्रथमानुगूनिका नाडी च। छाद्यते च तत् मेदःपुञ्जेन शिरोग्रीव-पृष्ठिकया च पेश्या।

ता एताः शिरोग्रीवपृष्ठस्थाः पेश्य उभयतो विंशतिर्व्याख्याताः।

अथ गलाभ्यन्तराः पेश्यः।

ताः अन्नमार्गं परितः स्थिता दश, स्वरयन्त्रीयाश्च सप्तदशेति समष्ट्या सप्तविंशतिसंख्याः। तत्र—अन्नमार्गं परितः एकैकतः पञ्च, यथा—कण्ठसंकोचनी अधरा उत्तरा मध्यमा चेति तिस्रः, शिकागलान्तरीया श्रुतिसुरङ्गाद्वारिका चेति द्वे।

स्वरयन्त्रं परितः सप्तदश। तासां श्वासमार्गद्वारिण्यौ नव यथा—एका मध्ये घाटान्तरीया नाम, चतस्रश्च एकैकतः—कृकाटघाटिके द्वे (पश्चिमा पार्श्वगा चेति) स्वस्तिकघाटिका, गोजिह्वाघाटिका चेति। स्वरतन्त्री-पेश्यश्च अष्टौ। यथा—अवटुघाटिका, अवटुकृकाटिका, अवटुगोजिह्विका, अनुतन्त्रीका चेति एकैकत-श्चतस्रः।

तासां विस्तरः अन्नमार्गप्रसङ्गे स्वरयन्त्रवर्णने च वक्ष्यते।

इति द्वितीयोऽध्यायः।

---

१। कपालमूलिकं त्रिकोणम्—Sub-occipital triangle.

# अथ तृतीयोऽध्यायः ।

अथातो मध्यकायपेशीवर्णनीयमध्यायं व्याख्यास्यामः ।

इह खलु एकादशोत्तरं शतं पेश्यो मध्यकाये। तासां सप्तसु स्थानेषु विभागः। तद्यथा—विंशतिः पृष्ठे (तासु द्वादश उत्तानाः, अष्टौ गम्भीराः, ताः पृष्ठवंशमुभयतः)। षट् कटिमुभयतः। चतुःपञ्चाशदुरसि। द्वादश उदरे। दश श्रोणिचक्रे ऽभ्यन्तरतः। सप्त उपस्थमूले। द्वे च गुदं परितः—इति।

पृष्ठपेश्यश्चेह शिरोग्रीवपश्चिमपेशीवर्जं वर्ण्यन्ते। बहिःश्रोणिप्रभवाश्च पेश्यो नेह गृह्यन्ते तासामधःशाखोपयोगित्वाद्विशेषतः।

## अथ पृष्ठपेश्यः।

तासाञ्चायं स्तरविभागः। प्रथमस्तरे द्वे द्वे पेश्यौ एकैकतः पृष्ठार्द्धच्छादिन्यौ—पृष्ठच्छदा कटिपार्श्वच्छदा च नाम। द्वितीयस्तरेऽपि द्वे द्वे— अंसापकर्षणी लघ्वी गुर्वी चेति। तृतीयस्तरेऽपि द्वे द्वे—पश्चिमारित्रा उत्तरा अधरा चेति। चतुर्थस्तरे एकैव एकैकतो बहुशाखा—त्रिकपृष्ठिका नाम। पञ्चमस्तरे द्वे द्वे— अर्द्धपृष्ठिका मेरुधारिणी चेति। षष्ठस्तरे पुनरेकैका बहुमूला—मेरुविवर्त्तनिका नाम। तत्र आद्यस्तरत्रयस्था उत्तानाः नाम, अन्त्यस्तरत्रयस्थाः गम्भीराः इत्युच्यन्ते। तत्र उत्तानपृष्ठपेश्यो यथा—( ७१ चित्रम् )

( प्रथमस्तरे ) पृष्ठच्छदा[१] ( पृष्ठप्रच्छदा वा ) नाम विशालायतमांसला पृष्ठदेशस्य उत्तरार्द्धच्छादनी पेशी त्रिकोणाकारा। सा इतरया स्वनामिकया संसक्ता चतुरस्राकारा दृश्यते ग्रीवांऽसपृष्ठपश्चिमतः। साऽसौ पश्चिमकपालस्य उत्तर-तोरणिकातः, ग्रीवाधराख्यस्नायुरज्ज्वाः, सप्तमग्रीवाकशेरुकायाः सकलपृष्ठकशेरु-काणाञ्च पृष्ठकण्टकेभ्यः सम्भूय, परितः प्रसरन्ती अक्षकास्थ्नः पश्चिमधारार्द्धे अंसफलकस्य कूट-प्राचीर-पश्चिमधारासु च निविशते, विवर्त्तते च अंसप्राचीर-मूले श्लेष्मधरकलापुटकव्यवधानेन। कार्य्यञ्चास्या एकाकिन्याः शिरसोंऽस-फलकस्य च पृष्ठवंशं प्रति कर्षणम्, स्वनामिकया मिलितायास्तु अंसशिरसोः

---

१। पृष्ठच्छदा—Trapezius.

[ ७१ चित्रम् ]

## पृष्ठगाः पेश्यः (उत्तानाः)




१ अंसाधरिका लघ्वी
२ अंसपृष्ठिका अधरा
३ अंसाधरिका गुर्वी
४ अंसापकर्षणी गुर्वी
५ उरश्छदा गुर्वी

पश्चात्कर्षणम् । अस्याः प्रचेष्टनं नागिन्याख्यनाड्याः तृतीयचतुर्थ्योरनुग्रीविकयोः शाखाभ्याञ्च ।

**कटिपार्श्वच्छदा**[1] (कटिप्रच्छदा वा) नाम पेशी (७१ चित्रम्) विशालायत-मांसला पृष्ठाऽधरार्द्धस्य कटिपार्श्वस्य च च्छादिनी । सा निम्नस्थपृष्ठकशेरुका-षट्कस्य कटिकशेरुकापञ्चकस्य त्रिकास्थ्नश्च पृष्ठकण्टकेभ्यः श्रोणिफलकस्य जघन-चूड़ातश्च कलामयैर्मूलैः संभूय तिर्य्यगूर्द्ध्वं गत्वा अंसफलकस्य अधःकोटौ त्रिचतुर-निम्नपर्शुकापार्श्वेषु च संबद्धा प्रगण्डास्थ्नः पिण्डकान्तरीयपरिखायाः अन्तस्तटे निविशते स्थूलायतेन कण्डराग्रेण । सेयमेकाकिनी स्वपार्श्वस्थबाहोः पश्चादधस्ताच्च कर्षणी, स्वसंज्ञया मिलिता तु उभयोरपि बाह्वोः पश्चादाकर्षणी उरोविस्तारणी च । वृक्षाद्यारोहणे तु स्थिरीकृतबाहोः पुरुषस्य शरीरनिम्नार्द्धकर्षणी च सैव । तस्याः प्रचेष्टनी नाड़ी द्वितीया अन्वंसिका नाम ।

(द्वितीयस्तरे) **अंसापकर्षणी**[2] **लघ्वी गुर्वी** चेति एकैकतो द्वे पेश्यौ, (७१ चित्रम्) पृष्ठवंशांऽसफलकयोरन्तरालस्थे चतुरस्राकारे । तयोर्लघ्वी ग्रीवा-धराख्यस्नायुरज्ज्वाः, अन्तिमग्रीवाकशेरुकायाः प्रथमपृष्ठकशेरुकायाश्च पृष्ठकण्टकाभ्यां संभूय अंसफलकवंशानुगधाराया मध्यभागे संबद्धा । अंसापकर्षणी गुर्वी तु द्वितीयादिपञ्चम्यन्तपृष्ठकशेरुकाकण्टकेभ्यः संभूय अंसफलकस्य वंशानुगधारायाः निम्नार्द्धे संबद्धा । अनयोश्च कार्यम् अंसफलकस्य ऊर्द्ध्वं पश्चाच्च कर्षणम् । प्रचेष्टनी नाडी तु अनुग्रीविकायाः पञ्चम्याः शाखा अंसपृष्ठगा नाम ।

[अन्याऽपि चात्र दृश्यते पेशी **अंसोन्नमनी**[3] नाम । सा प्राधान्याद्ग्रीवापेशीषु वर्णिता संख्याता चेति नेह पुनर्गण्यते ।]

(तृतीयस्तरे) **पश्चिमारित्रा**[4] **उत्तरा अधरा** चेति द्वे द्वे पेश्यौ एकैकतः । तयोरुत्तरा पेशी ग्रीवाधराख्यस्नायुरज्ज्वाः, सप्तमग्रीवाकशेरुकायाः द्वित्राणामग्रिमपृष्ठकशेरुकाणां पृष्ठकण्टकेभ्यश्च संभूय द्वितीयादिपञ्चम्यन्त-पर्शुकाणां पश्चिमार्द्धेषु चतुर्भिर्मुखैः संबद्धा । अधरा तु अन्तिमपृष्ठकशेरुका-द्वयस्य आद्यकटिकशेरुकात्रयस्य च पृष्ठकण्टकेभ्यः संभूय अन्तिमपर्शुकाचतुष्टयस्य

१ । कटिपार्श्वच्छदा—Latissimus Dorsi. २ । अंसापकर्षणी लघ्वी गुर्वी च—Rhomboideus minor and major. ३ । अंसोन्नमनी—Levator Scapulae (१६ पृष्ठे) ४ । पश्चिमारित्रा उत्तरा अधरा च—Serratus Posticus—Superior and Inferior.

पश्चिमार्द्धेषु चतुर्भिर्मुखैः संबध्यते। कार्यं पुनरुत्तरायाः स्वसंबद्धपर्शुकाणा-मूर्द्ध्वाकर्षणमुच्छ्वासकाले, अधरायास्तु स्वसंबद्धपर्शुकाणामवनमनं निःश्वास-काले। प्रचेष्टन्यो नाडयस्तु उत्तरायाः उत्तरा, अधरायाश्चाऽधरा अनु-पृष्ठिका नाम।

ता एताः एकैकतः षडिति द्वादश उत्ताना: पृष्ठपेश्यो व्याख्याताः।

तासां च विभागकरी दृढ़शुभ्रा गम्भीरप्रावरणी अधःस्था कटिपृष्ठप्रच्छदा नाम। सा कटिपेशीव्याख्याने व्याखेया।

( चतुर्थ स्तरे ) गम्भीरपृष्ठपेशीषु प्रधानभूता स्थूलमांसला पेशी एकैका **त्रिकपृष्ठिका**[१] नाम कटिपृष्ठधारिणी (७० चित्रम्)। सेयं त्रिकास्थ्नः कटिकशे-रुकापञ्चकस्य चरमपृष्ठकशेरुकाद्वयस्य च पृष्ठकण्टकेभ्यः, त्रिकास्थिपक्षतः, जघन-चूड़ापश्चार्द्धाच्च स्थूलायतकलामयैर्मूलैः संभूय ग्रीवाभिमुखं प्रसृता त्रिभिर्भागैः। तस्या आद्यो भागः पृष्ठवंशानुक्रमेण तिष्ठति धनुर्वक्रः, संबध्यते चासौ सकलपृष्ठकशेरुकाणां कटिकशेरुकाद्वयस्य च पृष्ठकण्टकेषु। सोऽयम् अनुवंशभागो[२] नाम। मध्यो भागः क्रमेण हीयमानाग्रः सर्वासामपि कटिपृष्ठकशेरुकाणां बाहुप्रवर्द्धनेषु पर्शुकादशकमूलेषु च संबद्धः, स मध्यपृष्ठिको[३] नाम, तस्य द्वावंशौ—पृष्ठगो ग्रीवागश्चेति। चरमस्तु भागो बाह्यतमः सर्वासामपि पर्शुकाणां कोणेषु संबद्धः, सोऽयम् अनुपार्श्विको[४] नाम। तस्य त्रयोंऽशाः,—कटिगः, पृष्ठगो ग्रीवागश्चेति।

कार्य्यं पुनस्त्रिक पृष्ठिकायाः पृष्ठवंशस्य धारणं पश्चात्कर्षणञ्च सर्वैर्भागैः। मध्यभागेन पुनः पर्शुकाकर्षणेन उच्छ्वास-सहायताकरणं च। अस्याः प्रचेष्ट्न्यो नाडयस्तु अनुपृष्ठिकानामनुकटिकानाञ्च नाडीनां शाखाः।

( पञ्चमस्तरे ) द्वे द्वे पेश्यौ एकेकतः—उत्तरार्द्धे पृष्ठार्द्धपृष्ठिका, अधरार्द्धे मेरुधारिणी चेति। तत्र—

**पृष्ठार्द्धपृष्ठिका**[५] नाम तन्वी पेशी (७० चित्रम्) पञ्चम्यादि द्वादश्यन्त-पृष्ठकशेरुकाणां बाहुप्रवर्द्धनेभ्यः संभूय चरमग्रीवाकशेरुकाद्वयस्य आदिमपृष्ठ-

---

१। त्रिकपृष्ठिका—Sacro-spinalis. २। तस्या अनुवंशभागः—Spinalis Dorsi : ३। मध्यपृष्ठिक भागः ( ग्रीवागः, पृष्ठगश्च )—Longissimus Dorsi & Cervicis ; ४। अनुपार्श्विक भागः—( ग्रीवागः, पृष्ठगः, कटिगश्च )—Ileo-costalis—Lumborum, Dorsalis & Cervicis. ५। पृष्ठार्द्धपृष्ठिका—Semispinalis Dorsi.

कशेरुचतुष्टयस्य च पृष्ठकण्टकेषु संलग्ना । इयमपि पूर्ववत् कार्या अनुपृष्ठिकनाडी-शाखाभिरनुप्राणिता च ।

**मेरुधारिणी**[1] नाम बहुशाखा मांसला पेशी (७० चित्रम्) सत्रिकपृष्ठवंशस्य पृष्ठकण्टकश्रेण्या एकैकतो वर्त्तमाना तत्पार्श्वस्थखाताऽपूरणी । सेयं कशेरुकाणां पृष्ठकण्टकेषु, बाहुप्रवर्द्धनकेषु, तदन्तरालेषु, श्रोणिफलकस्य पश्चिमोर्द्ध्वकूटे च संबद्धा । तस्याश्च शाखाः अधोऽधःस्थितद्वित्रकशेरुकापार्श्वतः संभूय उत्तरोत्तर त्रिचतुरकशेरुकाणां पृष्ठकण्टकेषु निविशन्ते—इति विचित्राऽस्याः प्रभव निवेश श्रृंखला । कार्य्यं चास्याः पृष्ठवंशस्य धारणं किञ्चिद्विवर्त्तनञ्च । प्रचेष्टन्यो नाड्यस्तु पूर्ववत् ।

( षष्ठस्तरे ) एकैका पेशी एकैकार्द्धे असंख्यप्रायशाखा, सेयं **मेरुविवर्त्तनिका**[2] नाम । तस्याः प्रधानाः शाखाः अधोऽधःकशेरुकाणां बाहु-प्रवर्द्धनकेभ्यः संभूय उत्तरोत्तरकशेरुपत्रकेषु मीनशल्कवत् परस्पराच्छादनेन संबद्धाः सर्वास्वपि पृष्ठकशेरुकासु । अपराश्च शाखाः पृष्ठकण्टकान्तरालेषु बाहुप्रवर्द्धनान्त-रालेषु च संबध्यन्ते । सेयं शाखाबाहुल्यदर्शनात् शाखासंख्याभिः संख्यायते कैश्चित् । इह तु लाघवादेकैवोच्यते । कार्य्यञ्चास्याः स्वनामव्याख्यातं, प्रचेष्टन्यो नाड्यश्च पूर्ववदेव ।

### अथ कटिपेश्यः ।

कटिपेश्यस्तावत् तिस्र एकैकतः । कटिपार्श्वे—कटिचतुरस्रा, कटिवंश-पुरस्तात्—कटिलम्बिनी दीर्घा ह्रस्वा चेति । कटिच्छदाख्या पेश्यपि कटिपृष्ठ-पार्श्वच्छादिनी, सा नेह गण्यते पृष्ठपेशीषु गणितत्वात् । द्रष्टव्या चात्र कटि-पृष्ठार्द्धच्छादिनी दृढस्नायुमयी सुगम्भीरा प्रावरणी कटिपृष्ठप्रच्छदा[3] नाम । तस्यास्त्रयो भागाः—पुरोभागो, मध्यभागः, पश्चिमभागश्चेति । तत्र पुरोभागः कटिकशेरुकाबाहुप्रवर्द्धनानां मूलेषु संबद्धः, मध्यभागस्तदग्रेषु । ताभ्याञ्च निर्मीयते कटिचतुरस्राख्यपेश्याः कञ्चुकम् । पश्चिमभागः पुनर्गम्भीरः पृष्ठपेशीनां सन्धारणः, स कटिकशेरुकाणां पृष्ठकण्टकेषु संबद्धः । साऽसौ प्रावरणी मध्यमचरमयोरुदर-च्छदाख्यपेश्योः पश्चिममूलभूतेति विशेषेण स्मर्त्तव्या ।

---

१ । मेरुधारिणी—Multifidus Spinæ. २ । मेरुविवर्त्तनिका—Rotatores—Inter-spinalis and Inter-transversalis. ३ । कटिपृष्ठप्रच्छदा प्रावरणी—Lumbo-dorsal Fascia.

( ७२ चित्रम् )

## कटि-जघनोदरीयाः पेश्यः ।

( औदर्य्ययन्त्रापसारणेन दर्शिताः )




१। शुण्डिका। २। श्रोणिगवाक्षिणी वहिःस्था। ३। कटिलम्बिनी दीर्घा ( कर्त्तितांशः )।

तत्र—**कटिचतुरस्रा**[१] नाम चतुरस्रप्राया मांसला पेशी (७२ चित्रम्) एकैकतः कटिपार्श्वे। सा पूर्वोक्तकटिजघनिकाख्यस्नायुरज्ज्वाः श्रोणिफलकस्य जघनचूडातश्च संभूय द्वादश्यां पर्शुकायाम् आदिमकटिकशेरुकाचतुष्टयस्य बाहुप्रवर्द्धनेषु च सन्निविष्टा। सेयं बृहदन्त्रस्य वृक्कस्य च पश्चिमतोऽवस्थिता, महाप्राचीराख्यपेश्याः बहिस्तोरणे कटिलम्बिन्याख्यपेश्याः बहिःसीम्नि द्रश्या। अस्याः कार्य्यमुच्छ्वासकर्मणः सहायता करणं, चरमपर्शुकाकर्षणेन महाप्राचीरामूलधारणेन च। प्रचेष्टन्यस्तु नाड्यो द्वादश्या औरसनाड्याः प्रथमद्वितीययोरनुकटिकनाड्योश्च शाखाः।

**कटिलम्बिनी दीर्घा ह्रस्वा**[२] चेति द्वे पेश्यौ (७२ चित्रम्) करिशुण्डाकारे कटिवंशपार्श्वतः उदरगुहायाः पश्चिमसीम्नि वर्त्तेते। तयो र्दीर्घा पेशी चरमपृष्ठकशेरुकायाः कटिकशेरुकापञ्चकस्य च पिण्डपुरोभागाद् बाहुप्रवर्द्धनेभ्यश्च संभूय तिर्य्यगधोगता श्रोणिपक्षिण्याख्यपेश्याः कण्डरया संमिलितमूला ऊर्वस्थ्नो लघुशिखरके निविशते। ह्रस्वा कटिलम्बिनी तु तदुत्सङ्गवर्त्तिनी तत्प्रभवैकदेशप्रभवा च। सा श्रोणिफलकस्य जघनकपालमूले वस्तिकण्ठिकैकदेशे निविष्टा। अनयोश्च कार्य्यं मध्यकायस्य अधोनमनमूर्द्ध्वकर्षणं वा। प्रचेष्टन्यौ नाड्यौ द्वितीया तृतीया च अनुकटिका नाम।

इदञ्च पेशीत्रितयं उदरगुहाव्यतिकरेण कोष्ठधरकलयाच्छादित मुदरगुहायाः बहिःपश्चिमसीमभूतम्। कटिलम्बिपेश्योः पुरस्ताच्च द्रश्या उदराभ्यन्तरत इमे विशेषा एकैकतः—वृक्कः, अधिवृक्कः, सिराधमन्यश्च तत्संबद्धाः, गवीनी,[३] ऊरुवृषणिका नाडी, अन्याश्च सिराधमन्यादयः। दक्षिणतस्तु ता एव, अधरा महासिरा च।

अथ उरःपेश्यः।

उरःपेश्यस्तावत् चतुःपञ्चाशदित्युक्तम्। तत्र उरःपुरःस्था एकैकतस्तिस्रः—अक्षकाधरा, उरःप्रच्छदा गुर्वी लघ्वी चेति। उरःपार्श्वे च एकैका—अग्निमारित्रा नाम। द्वादशानां पर्शुकानामन्तरालस्थिताश्च एकैकतः—एकादश बहिःस्थाः, एकादश चान्तःस्था इति द्वाविंशतिः। आसां समष्टिरुभयतः संख्यानेन द्वापञ्चाशत्। द्वे

१। कटिचतुरस्रा—Quadratus Lumborum २। कटिलम्बिनी दीर्घा ह्रस्वा च—Psoas major and minor. ३। गवीनी नाम मूत्रवहं स्रोतः, या वृक्काद्विनिर्गत्य वस्तिपार्श्वे प्रतिबद्धा—Ureter.

चापरे एकाकिन्यौ पेश्यौ -- उरःफलकपृष्ठेऽभ्यन्तरतः उरस्त्रिकोणिका, उदरोरसोर्मध्ये महाप्राचीरा चेति । ता एताश्चतुःपञ्चाशद् उरःपेश्यो निर्दिष्टाः ।

तत्र—**अन्नकाधरा**[२] नाम तन्वी पेशी प्रथमपर्शुकोपपर्शुकयोः संधानस्थानात्सम्भूय तिर्यग्गता अक्षकास्थ्नो ऽधस्तले संबद्धा । सेयं अंसफलकसंहितस्य अक्षकास्थ्नः अवनमनादंसावनमनकार्या । अस्याः प्रचेष्टनं पञ्चमषष्ठ्योरनुग्रीविकयोः शाखाभ्याम् ।

( ७३ चित्रम् )

## उरः पेश्यः ( उत्तानाः )




**उरश्छदा ( उरः प्रच्छदा वा ) गुर्वी**[३] नाम स्थूलमांसला तालवृन्ताकारा

२ । अन्नकाधरा—Subclavius. ३ । उरश्छदा गुर्वी—Pectoralis major.

पेशी उरसः पुरोभागार्द्धच्छादिनी (७३ चित्रम्)। सेयमक्षकास्थ्न आन्तरार्द्धादुरःफलकापार्श्वात् पञ्चभ्य उपपर्शुकाभ्यश्च संभूय क्रमशः संव्यूढा प्रगण्डास्थ्नः पिण्डकद्वयान्तरीय परिखाया बहिस्तटे निविशते। तस्याः कार्यमालिङ्गनादौ बाह्वोः संव्यूहनं, वृक्षारोहणादौ तु स्थिरीकृतबाहोः पुरुषस्य मध्यकायोत्कर्षणञ्च। व्यायामोपचितगात्रस्य च पुंसः इयमेव पेशी एकैकतो वक्षसि स्थूलोन्नतायता दृश्यते। प्रचेष्टनं त्वस्या 'औरसी' संज्ञाभ्यामग्रिम-मध्यमनाडीभ्याम्।

**उरश्छदा लघ्वी**[1] नाम त्रिकोणाकारा स्थूलमांसला पेशी (७४ चित्रम्) पूर्वोक्तायाः पश्चिमतो निगूढा। सेयं तृतीयचतुर्थपञ्चमीनां पर्शुकानां पुरोभागात्संभूय तिर्यग्गता अंसफलकस्य अंसतुण्डपुरोधारायां निविशते। अस्याः कार्यम् अंसावनमनं, स्थिरांसस्य पुंसो मध्यकायोत्कर्षणं वा। श्वासकष्टे सति स्थिरीकृतबाहोः पुरुषस्य उभाभ्यामपि उरश्छदाभ्यां उरःकर्षणादुच्छ्वासकर्मसहायता संपाद्यते।

**अग्रिमारित्रा**[2] महारित्रा वा नाम (७३।७४ चित्रम्) अरित्राकारमुखी प्रच्छदायता पेशी अंसफलकोरःपञ्जरयोरन्तराले वर्त्तते। सेयं पार्श्वदेशे अष्टाभ्य अग्रिमपर्शुकाभ्य अरित्राकारैर्मूलैः संभूय तिर्यक् पश्चात्प्रसृता अंसफलकस्य वंशानुगधारायाः पुरःसीम्नि संबद्धा। तस्याः कार्यमंसफलकस्य पश्चादूर्ध्वं च कर्षणम्। स्थिरांसस्य तु पुंसः पर्शुकोत्कर्षणम्। इयमेव पेशी पशूनां मध्यकायमग्रिमपादयोर्मध्ये समवलम्बयते। अस्याः प्रचेष्टनी नाडी—दीर्घा औरसी नाम।

**पर्शुकान्तरिकाः** नाम तनुह्रस्वायताः पेश्यो द्वादशानामपि पर्शुकानामन्तरालस्थाः। (७३।७६ चित्रयोः) ता उरःपञ्जरस्य एकैकार्द्धे एकादश बहिःस्थाः, तावत्यश्च अन्तस्थाः इति द्वाविंशतिः। तत्र—

**बहिःस्थाः पर्शुकान्तरिकाः**[3] सर्वासां पर्शुकानामधोधारातः संभूय अधोऽधःस्थानां पर्शुकानामूर्द्ध्वधारासु निविशन्ते। तासां तन्तवः पुरस्तिरश्चीनाः।

**अन्तःस्थाः पर्शुकान्तरिकाः**[4] पुनः पर्शुकानामधोधारास्थपरिखान्तस्तटेभ्यः उपपर्शुकाभ्यश्च संभूय अधोऽधः पर्शुकोपपर्शुकानामूर्द्ध्वधारासु संबद्धाः।

---

१। उरश्छदा लघ्वी—Pectoralis minor. २। अग्रिमारित्रा—Serratus Anterior Serratus magnus). ३। पर्शुकान्तरिका बहिःस्था—Intercostal External. ४। पर्शुकान्तरिका अन्तस्थाः—Intercostal Internal.

( ७४ चित्रम् )

## मध्यकाय पुरःस्थाः पेश्यः ( गम्भीराः )।



तासां तन्तवः पश्चिमतिरश्चीनाः । अन्तर्बहिःस्थानां पर्शुकान्तरिकाख्य पेशीनामन्तरालस्थासु पर्शुकानुगाख्यपरिखासु च दृश्यन्ते तदाख्याः सिरा-धमनी-नाड्यः । संपद्यते च ताभिरेव पोषणं प्रवेष्टनं च पर्शुकान्तरिकानां पेशीनाम् । कार्यन्तु तासामुरःपञ्जरस्य धारणम्, उच्छ्वासनिःश्वासकाले प्रचलन्तीनां पर्शुकोपपर्शुकानां संयमनञ्च । केचितु मन्यन्ते ताभिर्बहिःस्थाभिः पर्शुकोत्कर्षणम्, अन्तस्थाभिश्च पर्शुकावनमनं उच्छ्वास-निःश्वासकाले भवत्येव स्तोकेनेति ।

**उरस्त्रिकोणिका**[१] नाम एकाकिनी पेशी उरःफलकस्य पश्चादुभयतः स्थिता त्रिकोणाकारा तन्निम्नार्द्धसंभवा च । सा मध्यरेखामुभयतस्तिर्यक्प्रसृता द्वितीयादिषष्ठ्यन्तानामुपपर्शुकानां पृष्ठतो निविशते पञ्चभिरग्रैः । साऽसौ सोपपर्शुकस्य उरःफलकस्य अन्तराकर्षणी निःश्वासकाले । अनुप्राण्यते च सा पर्शुकानुगाभिरेव नाडीभिः ।

**महाप्राचीरा**[२] नाम (७५ चित्रम्) उरोगुहाभूमिभूता उदरगुहाच्छदिभूता वा विशालसर्पफणायता पेशी या मध्येकोष्ठमवतिष्ठते । सेयमूर्द्ध्वं कूर्मपृष्ठा, अधस्तात् कोरोदरा, मध्यभागे तु समतलप्राया । सा समन्तात् परिधौ मूलभागे च मांसमयी, अर्द्धचन्द्राकारेण त्रिपत्राकारेण दृढकलामयेन मध्यभागेनोपलक्षिता च । तत्र परिधिभागो मूलद्वयञ्चास्याः प्रभवस्थानम्, मध्यभागस्तु कलामयो निवेश इति वैचित्र्यम् । ततश्च परिधौ मूलयोश्च संकोचं भजन्तीयं पेशी मध्यभागं परिधिञ्च बलादधः कर्षतीति क्रियावैशेष्यमस्याः ।

स चास्याः परिधिः पुरस्तादग्रपत्राख्ये उरःफलकनिम्नस्थे तरुणास्थ्नि तदेककतश्च षट्सु सप्तसु वा निम्नपर्शुकासु तदुपपर्शुकासु च संबद्धः । मूलद्वयं चास्याः मांसस्नायुभूयिष्ठं संबध्यते पश्चिमतो द्वित्रेषु अग्रिमकटिकशेरुकापिण्डेषु । तत्र वामं मूलं तनुह्रस्वं आद्यकटिकशेरुद्वये संलग्नं, दक्षिणं तु स्थूलदीर्घं कटिकशेरुकात्रये । एकैकतश्च मूलद्वयस्य द्वे द्वे तोरणे दृढस्नायुसूत्रमये, ते अपि महाप्राचीरायाः प्रभवभूते । तत्र पृष्ठवंशसंलग्नमन्तःसीम्नि अन्तस्तोरणं, बहिःसीम्नि बहिस्तोरणम् । तयोराद्यं अग्रिमकटिकशेरुकायाः पिण्डादारभ्य बाहुप्रवर्द्धनान्तं गतं, तेन निर्गच्छति दीर्घा कटिलम्बिनी नाम पेशी । अन्त्यं (बहिस्तोरणम्) पूर्वोक्तबाहुप्रवर्द्धनाद् द्वादशपर्शुकान्तं यावत्प्रसृतं, तेन निर्गच्छति

---

१ । उरस्त्रिकोणिका—Transversus Thoracis (Triangularis Sterni). २ । महाप्राचीरा—Diaphragm.

कटिचतुरस्रा पेशी, महानाडी च ईडापिङ्गलयोरन्यतरा ( वामेन ईडा, दक्षिणेन पिङ्गला ) ।

महच्छिद्राणि चात्र पेश्यां त्रीण्येव पश्चिमतः । तद्यथा किञ्चिद्-

( ७५ चित्रम् )

## महाप्राचीरा पेशी ।




[ क—महाप्राचीराया दक्षिणांशः । ख—तस्या एव वामांशः ]

दक्षिणतो महासिराच्छिद्रम्, तद् अधरमहासिराया उरसि प्रवेशाय । मध्यरेखायाम् ऊर्द्ध्वभागे अन्ननालविवरम्, तद् अन्ननालस्य आमाशयप्रवेशाय ; अधोभागे महाधमनीच्छिद्रम् मूलद्वयान्तरालस्थं, तद् महाधमन्या उदरगुहाप्रवेशाय । च

आद्येन छिद्रेण अधरां महासिरामनुगच्छति अनुकोष्ठिकाख्यनाड्याः शाखा। अन्त्येन महाधमनीमनुवर्त्तते दक्षिणा पुरोवंशिका नाम सिरा, रसवहा नाम प्रणालिका च। मूलद्वयं च निर्भिद्य गताश्चतस्रो मणिपूरिकाख्या नाडयः, वामा च पुरोवंशिकाख्या सिरा। परितश्च महाच्छिद्राणि दृश्यन्ते संदंशाकारा मांसतन्तवः पेशीदार्ढ्याय।

व्यतिकरः[1] पुनर्महाप्राचीराया इत्थं दृश्यः। तस्या ऊर्द्ध्वतले उभयतः संसज्येते फुस्फुसधराख्य कलाकोषयोः परिसरीयभागौ, मध्ये तु पेशीकेन्द्रस्थे कलामयपत्रके हृदयधराख्यकलाकोषस्य मूलम्। अधस्तलं पुनरस्याः उदरधराख्यकलया भूम्ना समाच्छन्नम्। तदुत्सङ्गे दक्षिणतो यकृद्दक्षिणपिण्डं, दक्षिणवृक्कशिखरञ्च साधिवृक्कम्। वामतो यकृद्वामपिण्डं, आमाशयशीर्षकं, प्लीहा, वामवृक्कस्य शिखरञ्च साधिवृक्कम्।

कार्य्यं तावन्महाप्राचीरायाः प्राधान्येन श्वासवायोराकर्षणसाधनम्। तच्चेत्थं संपद्यते—परिधिमूलसंकोचेन अधोऽवनमितेयं पेशी उरोगुहायतनं वर्द्धयति, तेन अवकाशलाभात् स्वतः प्रविशता वायुना स्फारीभवतः फुस्फुसाविति। दीर्घश्वासग्रहणे तु तत्सहायकीभवन्ति अपरा अपि औरस्यः पेश्यः। अन्यच्चास्याः कार्य्यं क्षुत्कास-हास्य-रोदन-जृम्भण-वमनादौ मल-मूत्र-गर्भोत्सर्गार्थं प्रवाहणे च स्पष्टम्। सर्वाणि हि तानि कार्याणि उच्छ्वासपूर्वं प्रवर्त्तन्ते, परिणमन्ति च औदर्य्यपेशीसाहाय्यकेन महाप्राचीरायाः संकोचेन। प्रचेष्टन्यो नाडयस्तु महाप्राचीरायाः-- अनुकोष्ठिका नाडी दक्षिणा वामा च, पञ्चषाश्च पर्शुकानुगानां शाखाः।

इति चतुःपञ्चाशदुरः पेश्यो व्याख्याताः।

## अथ उदरपेश्यः॥

ता मध्यरेखामेकैकतः पञ्च। तद्यथा—उदरच्छदास्तिस्रः—आदिमा मध्यमा अन्तिमा चेति। मध्यरेखासंलग्ने च द्वे--उदरदण्डिका, वस्तिचूडिका चेति। मध्यरेखा च दृढशुभ्रतनुकण्डरामयी, सा उदरसीवनी[2] नाम। तत्र—

**उदरच्छदा आदिमा**[3] नाम (७४ चित्रम्) बाह्यतमा प्रच्छदायतमांसला पेशी। सा निम्नस्थात् पर्शुकाष्टकादष्टाभि र्मांसलैर्मूलैः अग्रिमारित्रोरश्छदयोर्मूलान्तरालनिबद्धैः संभूय तिरश्चीनैरधोऽन्तर्मुखैः मांसतन्तुभिरुदरस्य पुरःपार्श्वयोः

१। व्यतिकरः—सम्पर्कः (Relation). २। उदरसीवनी—Linea Alba. ३। उदरच्छदा आदिमा—Obliqus Externus.

( ७६ चित्रम् )

## उदरपेश्यः ( गम्भीराः ) ।




[ ५।६।७।८।९।१०।११।१२ अङ्काः पर्शुकोपपर्शुकासन्धान सूचकाः । तदन्तरालेषु च दृश्याः पर्शुकान्तरिका अन्तःस्थाः नाम पेश्यः ]

( क—वंक्षणिका नाम स्नायुः । ख—बहिर्वंक्षणीयं च्छिद्रम् । ग—वृषणबन्धनी । )

प्रसृता । निविशते च सा श्रोणिफलकस्य जघनधाराबहिस्तटार्द्धे मांसलभागेन ; अग्रपत्राख्ये तरुणास्थ्नि, सेवनीकण्डरायां, भगास्थ्नो मुण्डे, वस्तिकण्ठिकायाञ्च

कलाकण्डराभागेन । कलाकण्डरा चेयमूर्द्ध्वं पुरस्तात् पर्शुकामूलेषु सम्बद्धा गुर्व्या उरश्छदायाः कलाकण्डरया एकीभूता, अधस्ताद् भगास्थिमुण्डोपकण्ठे त्रिकोणप्रायेण च्छिद्रेण उपलक्षिता च। तच्च च्छिद्रं वहिर्वंक्षणीयं[१] नाम त्वक्कलावृतं पुंसो वृषणबन्धन्या निर्गमाय, स्त्रियास्तु गर्भाशयबन्धन्या धारणाय। अथास्याः कलाकण्डरायाः अधोधारा जघनकपालस्य पुरःकूटाद् भगास्थिकण्टकं यावत् संबद्धा निम्नतः शून्या, सा वंक्षणिका[२] स्नायुरज्जुरित्युच्यते। तदधःस्थञ्च त्रिकोणं कुहरम्—वंक्षणदरीसंज्ञम्। तस्य बाह्यार्द्धेन विनिर्गता श्रोणिपक्षिणी, दीर्घा कटिलम्बिनी च पेशी। आन्तरार्द्धेन पुनः पुरःसक्थिका नाम नाडी, और्वी धमनी सिरा च।

उदरच्छदाया आदिमायाः पश्चिमधारा तु विमुक्ताग्रा, कटित्रिकोणस्य संमुखीनभुजरूपा।

**उदरच्छदा मध्यमा**[३] (७४ चित्रम्) नाम तन्वायता पेशी पूर्वोक्तया पेश्या समावृता। सेयमधस्तात् श्रोणिफलकस्य जघनधाराबहिस्तटात्, वंक्षणिकाख्यस्नायुरज्ज्वाः पश्चार्द्धाच्च संभूय पश्चात् कटिपृष्ठप्रच्छदाख्यया गम्भीरप्रावरण्या एकीभूता, ऊर्द्ध्वमधो मध्ये च तिरश्चीनतन्तुभिर्मध्यरेखां प्रति प्रसृता। निविशते तु सा धनुर्वक्रैः कतिचित्स्नायुसूत्रैः वक्ष्यमाणायाश्चरमोदरच्छदाया अधोमूलैरेकतां गतैर्भगास्थिमुण्डे वस्तिकण्ठिकायाञ्च। तैश्च निर्मीयते वंक्षणसुरङ्गायाश्छदिभागः पश्चिमभागश्च। मध्यरेखायां निवेशस्तु तस्याः उदरसेवन्याख्य कण्डरायां स्तरद्वयविभक्तेन कलाकण्डराभागेन। तेन च निर्मीयते उदरदण्डिकाख्यपेश्याः कञ्चुकम्। ऊर्द्ध्वं निवेशस्तु तस्या अधस्तने उपपर्शुकाचतुष्टये मांसलैर्मूलैः।

**उदरच्छदा चरमा**[४] नाम (७६ चित्रम्) अभ्यन्तरतमा उदरच्छादिनी पेशी। सेयमधस्ताद् वंक्षणिकाख्यस्नायुरज्ज्वाः पश्चार्द्धतः, श्रोणिफलकस्य जघनधारान्तस्तटाच्च संभूय पश्चात् कटिपृष्ठप्रच्छदाख्यया गम्भीरप्रावरण्या एकीभूता, मध्यरेखां प्रति ऋजुप्रायैस्तन्तुभिः प्रसृता च। ऊर्द्ध्वं चास्याः प्रभवः षड्भ्यः अधरोपपर्शुकाभ्यो महाप्राचीरापरिधिप्रविष्टैर्मांसलमूलैः। निविशते च सा मध्यरेखां प्रति उदरसेवन्याख्यकण्डरायाम् अधश्च मध्यमोदरच्छदासाधारणैर्मूलैः

---

१। Ext. Abdominal Ring. २। Inguinal ligament (of Poupart.)
३। उदरच्छदा मध्यमा—Internal Oblique. ४। उदरच्छदा चरमा—Transversalis.

पूर्ववत्। छिद्रं तु तत्राधिकं भगमुण्डपार्श्वतः अन्तर्वंक्षणीयं[१] नाम, दृश्यते च तदाश्रित्य वंक्षणीयसुरङ्गां प्रविशन्ती पुंसो वृषणबन्धनी, स्त्रियास्तु गर्भाशयबन्धनी।

वंक्षणसुरङ्गा[२] चेयमूर्द्ध्वं वहिःसीम्नि वहिर्वंक्षणीयच्छिद्रादारभ्य तिर्यगधस्ताद् वंक्षणिकाख्यस्नायुरज्जोरनुक्रमेण मध्यरेखां प्रति प्रसृता—अन्तर्वंक्षणीयं छिद्रं यावत्। निर्मीयते च तस्याः पश्चिमभागः आदिमया उदरच्छदया, पुरोभागः चरमया उदरच्छदया, छदिभागः मध्यमाया उदरच्छदाया अधोधारया, भूमिभागश्च वंक्षणिकाख्यस्नायुरज्ज्वा—इति समासेन तस्याश्चतुःसीमकं व्याख्यातम्। अन्त्रवृद्धिरोगे च अनेनैव सुरङ्गापथेन अवतरति द्विगुणीभूतमन्त्रमण्डकोषे।

**फलकोषकर्षणी**[३] नाम तनुसूत्रा पेशी उदरच्छदाया आदिमायाः कतिचिन्मांसतन्तूनादाय निर्मिता। सा एकैकतो वृषणबन्धन्या अनुक्रमेण पाशाकारैः सूत्रैः फलकोषेऽवतीर्णा। तस्याः कार्यं फलकोषस्य ऊर्द्ध्वकर्षणम्। प्रचेष्टनी नाडी ऊरुवृषणिका नाम।

द्रष्टव्या चात्र प्रसङ्गे चरमाया उदरच्छदाया अभ्यन्तरदेशच्छादनी कला उदरान्तश्छदा[४] नाम। सा उदरधराख्यमहाकलातो मेदःस्तरेण पृथक्कृता, पश्चात् कटिवंशमुभयतो मेदःस्तरे निलीना च। सेयमूर्द्ध्वं महाप्राचीरायास्तलदेशे प्रसृता, अधश्च श्रोणिगुहान्तरीयया कलया मिलिता।

व्यतिकरस्तावद् उदरच्छदानां पेशीनां ७७ चित्रे द्रष्टव्यः।

कार्य्यं तावदुदरच्छदानां पेशीनां सामान्यतः—औदर्य्याशयानां धारणम्, स्वमांससंकोचनेन तत्प्रपीडणं च। किञ्च, महाप्राचीराया उत्क्षेपणेन श्वासवायुनिरसनमपि तासां प्रधानं कर्म्म, प्रवाहणञ्च निरुद्धश्वासस्य। निःश्वासकर्मसहायकत्वाच्च क्षुत्कास-हास्य-जृम्भणादि कर्मस्वपि स्फुटं तासां सहकारित्वम्।

प्रचेष्टनं तु तिसृणामपि तासामधरौरसीसंज्ञकनाडीनां शाखाभिः। शेषद्वयस्य तु प्रथमानुकटिकायाः शाखाभिश्च।

**उदरदण्डिका**[५] नाम दीर्घमांसला पेशी मध्यरेखापार्श्वे एकैकतः

१। अन्तर्वंक्षणीयं छिद्रं—Internal Abdominal Ring २। वंक्षणसुरङ्गा—Inguinal Canal. ३। फलकोषकर्षणी—Cremaster muscle. ४। Tranversalis Fascia. ५। उदरदण्डिका—Rectus Abdominis

( ७७ चित्रम् )

## औदर्य्य पेशीनां व्यतिकरः

( अनुप्रस्थच्छेदेन दर्शितः ) ।




(७६ चित्रम्) सा संकोचकाले दण्डवद् अवतिष्ठते उदरसेवन्या एकैकतः इति तथासंज्ञा। सेयमस्ताद्भगास्थिसन्धाने द्वाभ्यां कण्डराभ्यां संभूय ऊर्द्ध्वं गता, मध्यरेखायामुदरसेवनीकण्डराया एकैकतः संसज्यते, ऊर्द्ध्वञ्च पर्शुकातोरणार्द्धे। आच्छादयति च तां मध्यमाया उदरच्छदाख्य पेश्याः कलाकण्डरा, या द्विधात्मानं विभज्य पुरः पश्चाद्गमनेन तस्याः कञ्चुकीभूता। अनुप्रस्थञ्चात्र दृश्यन्ते तिस्रो रेखाः अर्द्धचन्द्रप्रायाः स्नायुसूत्रमध्यः, ता अर्द्धेन्दुलेखा नाम। अथास्या उदरदण्डिकायाः कञ्चुकमध्ये तन्निम्नार्द्धपुरोभागे दृश्यते अपरा मन्दिरचूडाकारा क्षुद्रपेशी **वस्तिचूडिका**[१] नाम। (७६ चित्रम्) सेयं भगास्थि-सन्धानात् संभूय उदरसेवन्यां संबद्धा।

१। वस्तिचूडिका—Pyramidalis.

उदरदण्डिकायाः कार्य्यं, प्रचेष्ट्न्यो नाड्यश्च उदरच्छदावत् । विशेषतश्च संकोचमापद्यमाना सा मध्यकायं पुरो नमयति धनुर्वत् । वस्तिचूडिकायास्तु कार्य्यमुदरसेवनीसंज्ञायाः कण्डराया उत्तंसनम् । प्रचेष्ट्नी नाडी द्वादश्याः औरसनाड्याः शाखा ।

ता एताः एकैकतः पञ्चेति दश उदरपेश्यो व्याख्याताः ।

इदञ्चात्र स्मर्त्तव्यम् । यः खलु पृष्ठोदरपेशीमध्यवर्ती कटिपार्श्वतः त्रिकोणाकारः अवकाशः, स कटित्रिकोण[1] संज्ञः । तस्य पुरःसीमा आदिमाया उदरच्छदायाः पश्चिमधारा, पश्चिम सीमा तु कटिपार्श्वच्छदायाः पार्श्विकी धारा । ते च धारे ऊर्द्ध्वं संमिलन्त्यौ त्रिकोणं कल्पयतः, अधःसीमस्थेन श्रोणिफलकस्य जघनचूडाप्रदेशेन सार्द्धम् । तस्य भूमिस्तु अभ्यन्तरत उदरच्छदा मध्यमा । बाह्यावरणं त्वक्सहिताः प्रावरण्यः । अनेन च त्रिकोणेन तत्पार्श्वीयो वृक्को बृहदन्त्रांशश्च स्पर्शेन परीक्षितुं शक्यौ—इति विशेषेण वृक्कादिरोगपरीक्षाद्वारमेतत् ।

### अथ श्रोणिचक्राभ्यन्तरीयाः पेश्यः ।

ताः पञ्च पञ्च एकैकतः—श्रोणिचक्रान्तश्छादन्या मांसधरया कलया समावृताः । साऽसौ कला श्रोणिगुहान्तरीया[2] नाम । सा च उपरिष्टात् उदरान्तश्छदया कलया, अधश्च वस्तिगुहान्तश्छदया मिलिता । संबध्यते चासौ ऊर्द्ध्वसीम्नि जघनधाराद्वये कटिवंशपुरोभागे च, अधस्तात् वस्तिकण्ठिकायां त्रिकोष्ठे च । एवञ्च प्रसृता प्रच्छादयतीयं जघनोदरान्तः श्रोणिपक्षिण्यौ पेश्यौ, पृष्ठवंशपुरतश्च कटिलम्बिन्याख्यपेशीसहितं कटिवंशपुरोभागम् । धारयति च सा वस्तिकण्ठिका पार्श्वयोः श्रोणिगुहाप्रविष्टे अधिश्रोणिके बाह्ये नाम स्थूलधमन्यौ सिरे च । वंक्षणदेशे च सैव वंक्षणदरीभूमिभूता ऊरुकञ्चुकया मिलिता ।

**श्रोणिपक्षिणी**[3] नाम श्रोणिगुहायाः पक्षापूरणी मांसलायता पेशी (७२ चित्रम्) । सेयं श्रोणिफलकस्य जघनोदरात्, जघनचूडातः, त्रिकास्थिपक्षैकदेशात् कटिजघनिका-त्रिकजघनिकाख्य स्नाय्वोश्च संभूय दीर्घायाः कटिलम्बिन्याः कण्डरया एकीभूतमूला, वंक्षणिकाख्य स्नायुरज्जोरधःस्थितया वंक्षणदर्य्या निर्गत्य ऊवस्थ्नो

---

१। कटित्रिकोणम्—Lumbar Triangle (of Petit). २। श्रोणिगुहान्तरीया कला—Pelvic fascia. ३। श्रोणिपक्षिणी—Iliacus.

लघुशिखरके निविशते। तस्याः कार्य्यं मध्यकायस्य अवनमनम्—ऊरोर्वा ऊर्द्ध्व-कर्षणम्। प्रचेष्टनी नाडी तु और्वी नाम।

**श्रोणिगवाक्षिणी अन्तःस्था**[1] नाम मांसला पेशी श्रोणिगवाक्ष-विवराभ्यन्तरपरिधेः तदाच्छादिकलायाश्च संभूता। सेयं कुकुन्दरकूटान्तः-प्रदेशे संलग्नैकदेशा कुकुन्दरद्वारेण अधो विनिर्गत्य ऊर्वस्थ्नो महाशिखरके निविशते। एवञ्च वस्तिगुहायाः पुरःप्राचीरभूतेयं पेशी। तस्याः कार्यं ऊर्वस्थ्नो बहिर्विवर्त्तनम्। प्रचेष्टनं तु पञ्चम्या अनुकटिकया नाड्या, प्रथमद्वितीयाभ्या-मनुत्रिकाभ्याञ्च।

**शुण्डिका**[2] नाम करिशुण्डाकारा पेशी (७२ चित्रम्) त्रिकास्थ्नः पुरोभागात् त्रिभिर्मूलैः संभूय श्रोणिफलकस्य गृध्रसीद्वारपरिधौ गुर्व्यां कुकुन्दरसंयोजन्यां स्नायौ च संसक्तमूला गृध्रसीद्वारेण विनिर्गत्य ऊर्वस्थ्नो महाशिखरके निविशते। तस्याः कार्य्यं ऊर्वस्थ्नो बहिर्विवर्त्तनम्, वस्तिगुहाभूमिधारणञ्च सह वक्ष्यमाणाभ्यां पेशी-भ्याम्। प्रचेष्टन्यो नाड्यस्तु प्रथमद्वितीययोरनुत्रिकनाड्योः शाखा।

**पायुधारणी**[3] नाम प्रसृतिनिभा पेशी पायोरेकैकतः (७८ चित्रम्)। सा इतरया स्वनामिकया मध्यरेखायां मिलित्वा अञ्जलिसमाकारा पायोर्वस्तेरुपस्थमूलस्य च धारणाय कल्पते।

सेयं भगास्थ्नः पश्चिमप्रदेशात् कुकुन्दरकण्टकात् वस्तिगुहान्तरीयायाः कलायाश्च संभूय पायुं परितः (स्त्रियास्तु योनिं परितोऽपि) प्रसृता सीवन्या-मनुत्रिकाग्रे च संबद्धा। कार्यन्त्वस्याः गुदोपस्थवस्तिधारणं, पायुकर्षणं च पायुसंकोचन्याख्यपेशी सहायायाः।

प्रचेष्टनं त्वस्याः चतुर्थ्या अनुत्रिकाख्यनाड्याः गुदोपस्थिकनाड्याश्च शाखाभ्याम्।

**अनुत्रिकिणी**[4] नाम पेशी अस्या एव सहकारिणी पश्चाद्वर्त्तिनी च। सेयं श्रोणिफलकस्य कुकुन्दरकण्टकात्, त्रिकानुत्रिकपुरःसन्धानात्, लघ्व्यास्त्रिक-कुकुन्दरिकायाः स्नायोश्च संभूय अनुत्रिकास्थ्नः पुरोभागे, एकैकतः त्रिकास्थि-मूले च संबद्धा। सेयमनुत्रिकास्थ्नो धारणी वस्तिगुहाद्वारस्य च्छादनी च

---

१। श्रोणिगवाक्षिणी अन्तःस्था—Obturator Internus. २। शुण्डिका—Pyriformis. ३। पायुधारणी—Levator Ani. ४। अनुत्रिकिणी—Coccygeus.

( ७८ चित्रम् )

शिश्न-गुद-मूलाधारपीठस्थाः पेश्यः ।



पश्चिमतः । अस्याः प्रवेष्टनं चतुर्थपञ्चमानुत्रिकनाड्योः शाखाभिः । ता एताः एकैकतः श्रोणिचक्राभ्यन्तरीयाः पञ्च पेश्यो व्याख्याताः । तासां मध्ये आद्यत्रितयं बहिर्विनिर्गतमूत्रसंवरन्याय । चरमत्रितयं तु बाह्यया गुदसंकोचन्याख्य पेश्या सहितं वस्तिगुहाद्वारस्य अधःपिधानभूतम् ।

द्रष्टव्या चात्र प्रसङ्गे वस्तिगुहान्तरीया[1] नाम कला वस्तिगुहान्तश्छादनी । सा ऊर्ध्वं वस्तिकरिठकाख्यरेखायाम्, अधश्च वस्तिगुहाद्वारं परितः संसक्ता । तस्यास्त्रयो भागाः—बाह्यो मध्य आभ्यन्तरश्चेति । तत्र बाह्यो भागः एकैकतः श्रोणिगवाक्षिणीमन्तःस्थां नाम पेशीं संछाद्य अधःप्रसृतः कुकुन्दरपिण्ड-कूटयोः संसक्तः अनुकुकुन्दरिकां नाम सुरङ्गिकामारचयति, सा गुदोपस्थिकाख्यनाडी-सिरा-धमनीनां धारणाय । संसज्यते चासौ त्रिकोणप्रावरणी संज्ञाया वस्तिगुहाद्वारच्छादिन्याः कलाया उत्तरस्तरेण । मध्यो भागः स्तरद्वयेन पायुधारण्याख्यपेशी-द्वयं छादयति धारयति च । आन्तरो भागः पायुं वस्तिं पौरुषग्रन्थिं शुक्राधारिका-द्वयञ्च संवेष्ट्य धारयति ।

वस्तिगुहाद्वारस्य च तथापिहितस्य चतुरस्राकारस्तलदेशो मूलाधारपीठं मूलाधारचतुरस्रं[2] वा नाम । तस्यैताः सीमाः अस्थिस्नायुनिर्मिताः । पुरःसीमा कोणाकारा—भगतोरणं नाम—तद्भगास्थिसंधानस्याधस्त्रिकोणप्रायम्, तदेकैकतः पार्श्वसीमा—भगकुकुन्दरास्थ्नोः अधरशृङ्गद्वयम् परस्परसंसक्तं, कुकुन्दर-पिण्डम्, त्रिककुकुन्दरिका गुर्वी नाम स्नायुरज्जुश्च । पश्चिमसीमा अनुत्रिकाग्रम् । लौकिकदृष्ट्या तु मूलाधारपीठस्य त्वङ्मांसनिर्मिताः सीमाः—पुरस्तात् पुरुषस्य अण्डकोषः स्त्रियास्तु योनिः, उभयतो वंक्षणद्वयम्, पश्चिमतो नितम्बद्वयञ्चेति ।

इदञ्च मूलाधारचतुरस्रं कुकुन्दरपिण्डयोः संयोजन्या कल्पितरेखया त्रिकोणद्वये विभज्यते वर्णनासौकर्याय । तत्र पुरोवर्त्ति त्रिकोणं औपस्थिकं त्रिकोणं[3] नाम । तत् स्त्रीपुंसोरुपस्थधारणम् । पश्चिमत्रिकोणं पुनः पायव्यत्रिकोणं[4] नाम, तत् पायुधारणम् । पायूपस्थयोरन्तराले च स्वाभाविकी स्नायुमयी संयोगरेखा त्वचि परिस्फुटा सेवनी[5] नाम । तदूर्ध्वस्था च तनुकण्डरा सेवनी-सूत्रिका संज्ञा ।

---

१। वस्तिगुहान्तरीया कला—Endopelvic part of Pelvic fascia. २। मूलाधारपीठं (चतुरस्रं वा)—Perineum or Perineal Quadrangle. ३। औपस्थिकं त्रिकोणम्—Urogenital Triangle. ४। पायव्य त्रिकोणम्—Anal Triangle. ५। Perineal Raphe.

अत्र च प्रसङ्गे स्मर्त्तव्यं भगन्दररोगायतनं खातं—गुदकौकुन्दरं[1] नाम। तच्च गुदस्य एकैकतः त्रिकोणविलप्रायं परितः कलावृतं मेदःपूर्णञ्च। तस्य मध्यरेखाभिमुखी सीमा गुदसंकोचनी बाह्या नाम पेशी, गुदवेष्टनी कला च। पार्श्वसीमा कुकुन्दरपिण्डं वस्तिगुहान्तरीया कला च। पश्चिमसीमा पुनः त्रिककुकुन्दरिका गुर्वी नाम स्नायुरज्जुः, नितम्बपिण्डिका गुर्वी नाम पेशी च। अस्मिंश्च खातेऽवतिष्ठन्ते गुदोपस्थिका नाम नाडी, धमनी-सिराश्च गुदान्तिकाः। कुकुन्दरपिण्डोत्सङ्गे च तत्रैव गुदोपस्थिका नाम नाडी, धमनीसिरे च स्नायुमयमार्गस्थे।

अथ मूलाधारचतुरस्रस्थाः पेश्यः।

ताः पुरः औपस्थिकत्रिकोणे सप्त। पश्चिमतः पायव्यत्रिकोणे च द्वे। तद्यथा—औपस्थिकत्रिकोणे **उपस्थसंकोचन्यौ**[2] नाम उपस्थपार्श्वस्थे द्वे पेश्यौ (७८ चित्रम्) ते पुंसः शिश्नमूलमुभयतः सेवनीसूत्रिकायां परस्पर संसक्ते शिश्नमूलं संवेष्टयतः। तयोः कार्यं मूत्रप्रसेकस्य संकोचनम् मूत्रणकर्मान्ते परिस्फुटम्। ते एव स्त्रियाः योनिद्वारपार्श्वस्थे तत्संकोचनकार्ये। अनयोः प्रचेष्टनं गुदोपस्थिकाख्य-नाड्योः शाखाभ्याम्।

**शिश्नप्रहर्षिण्यौ**[3] नाम द्वे पेश्यौ (७८ चित्रम्) कुकुन्दरास्थ्नः पिण्डादधर-शृङ्गाच्च संभूय पुंसः शिश्नमूलमुभयतः संबद्धे। ते एव स्त्रियाः भगशीर्षके भगशिश्निकामुभयतः संसक्ते तनुतराकारे।

तयोः कार्यं तुल्यं स्वनामव्याख्यातम्। प्रचेष्टन्यौ नाड्यौ पूर्ववत्।

**उपस्थमूलच्छदा अग्रिमा पश्चिमा**[4] चेति द्वे पेश्यौ (७८ चित्रम्)। तयोरग्रिमा उत्ताना कुकुन्दरपिण्डात् संभूय गुदपुरस्तात् सेवन्यां संवद्धा। पश्चिमा तु गम्भीरा कुकुन्दरास्थ्नोऽधरशृङ्गात् संभूय किञ्चिदग्रत उपस्थमूले सेवनीकण्डरायां मध्यरेखागतायां संवद्धा। मध्ये चानयोः स्तरद्वययुता दृढकला त्रिकोणप्रावरणी नाम नाडीसिरादिधरा वक्ष्यमाणा। कार्य्यन्तु तयोः सेवन्या उत्तंसनं

---

१। गुदकौकुन्दरं खातं—Ischio-rectal fossa. २। उपस्थसंकोचनी -Bulbo-cavernosus (Ejaculator Urinæ). ३। शिश्नप्रहर्षिणी—Ischio-cavernosusus (Erector penis). ४। उपस्थमूलच्छदा अग्रिमा पश्चिमा च—Transversus Perinei Superficialis and Profundus.

सेवनीसंबद्धानामितरपेशीनां क्रियासौकर्याय । प्रचेष्टनं पुनः गुदोपस्थिकयोर्नाड्योः शाखाभिः ।

**मूत्रद्वारसंकोचनी**[१] नाम पेशी मूत्रस्रोतसः कलामयं भागमभितः संबद्धा । तस्याः बाह्यं मूलमेकैकतः कुकुन्दरास्थ्नः अधरशृङ्गे संसक्तम् । क्रिया च स्वनामव्याख्याता । प्रचेष्टनी नाडी पूर्ववत् ।

स्मर्तव्या चात्र प्रसङ्गे औपस्थिकत्रिकोणच्छादिनी कला त्रिकोण प्रावरणी नाम ( ७८ चित्रम् ) । सा साधारण्या गम्भीरप्रावरण्या अंशभूता तत्प्रदेशे स्तरद्वये विभक्ता पश्चिमाम् उपस्थमूलच्छदां पेशीं मध्ये धारयति । दृश्यन्ते च तदन्तराले गम्भीरा उपस्थपृष्ठिका नाम सिरा नाडी च, मूत्रस्रोतसः कलामयो भागः, मूत्रद्वार-संकोचनी पेशी, गुदोपस्थिकाख्याः सूक्ष्माः मूत्रस्रोतोगाः सिराधमन्यो ग्रन्थयश्च । तस्याश्च कलायाः उत्तरस्तरं वस्तिगुहान्तरीयकलाया बाह्यभागेन उभयोः पार्श्वयोर्मिलितम् ।

अथ पायव्य त्रिकोणस्थे पेश्यौ ।

ते **गुदसंकोचनी बाह्या आभ्यन्तरा**[२] चेति ( ७८ चित्रम् ) । तयोर्बाह्या गुदोष्ठमभितो अञ्जलिवदवस्थिता । सा पश्चिमतः अनुत्रिकाग्रात् संभूय गुदमुभयतः प्रसृता सेवनीसूत्रिकायां संबद्धा । तस्या एव त्वाचं भागं केचित् गुदत्वक्संकोचनीं नाम पृथक् पेशीमाहुः ।

आभ्यन्तरा गुदसंकोचनी तु अस्या एव द्व्यङ्गुलादूर्ध्वमधरगुदं संवेष्ट्य स्थिता चक्राकारा । सा स्वतन्त्रमांसतन्तुभूयिष्ठा विशेषतो गुदसंवरणी ।

अनयोः कार्यं स्वनामव्याख्यातम् । नियतसंकुचितावस्था तु विशेषः । प्रचेष्टन्यौ नाड्यौ तु गुदोपस्थिकयोः शाखे बाह्यायाः पेश्याः । आभ्यन्तरायास्तु गुदवत् । प्राचां संमतं गुदवलित्रयं तु गुदवर्णने प्रतिपादयिष्यामः ।

तदेतदेकादशोत्तरं शतं पेशीनां मध्यकाये व्याख्यातम् ।

इति तृतीयोऽध्यायः ।

---

१ । मूत्रद्वारसंकोचनी—Sphincter Urethrae membranacae. २ । गुदसंकोचनी बाह्या आभ्यन्तरा च—Sphincter Ani Externus and Internus.

# चतुर्थोऽध्यायः ।

अथात ऊर्द्ध्व शाखीय पेशी वर्णनीयं नामाध्यायं व्याख्यास्यामः ।

इह खलु अक्षकास्थिसहितमंसफलकम् अंसचक्रं नाम। तच्च दृढस्नायुभिः सन्नद्धं परस्परं, प्रगण्डास्थ्ना चेत्यवोचाम। तस्य च अंसचक्रस्य समग्रबाहुसहितस्य ऊर्ध्वशाखेति संज्ञा पेश्यध्याये। अंसचक्रेण बाहुसम्बन्धस्य गरीयस्त्वात्, अंस-पेशीनाञ्च भूम्ना बाहुपेशीष्वनुप्रवेशात् प्रगण्डास्थ्नि निवेशाच्च। दशानाञ्च ग्रीवोरःपृष्ठपेशीनामिह ग्रहणं, संयोगसम्बन्धात्। संख्याने तु नेह ता अधि-क्रियन्ते तासाम् उक्तचरत्वात्, प्राधान्येन मध्यकायनिष्ठत्वाच्च। प्रधाना अंस-पेश्यस्तु संख्यायन्त इहैव, तासामनुक्तचरत्वात्, प्राधान्येन बाहुसम्बन्धाच्च। एवञ्च साकल्येन एकोनषष्टिरिह पेशीनामेकैकस्यामूर्द्ध्वशाखायां द्रष्टव्या। संख्यानकाले तु दशकवर्जनादेकोनपञ्चाशदिति उभयोरष्टानवतिः पेश्यः संख्याताः।

अथासामेकोनषष्टिपेशीनां सप्तधा विभागः। तद्यथा—

ऊर्द्ध्वशाखायाः पृष्ठेन संयोजन्यश्चतस्रः, उरसा च चतस्रः। अंसग्रीवा-संयोजन्यौ द्वे। अंसबाहुसंयोजन्यः सप्त। प्रगण्डीयास्तिस्रः। प्रकोष्ठीया विंशतिः। पाणौ एकोनविंशतिरिति।

(१) तत्र ऊर्द्ध्वशाखायाः पृष्ठेन संयोजन्यश्चतस्रः पेश्यो यथा—पृष्ठ-च्छदा, कटिपार्श्वच्छदा, अंसापकर्षणी गुर्वी लघ्वी चेति। तासामाद्ये बाहु-पृष्ठसंयोजन्यौ, अन्त्ये तु अंसपृष्ठसंयोजन्यौ। सर्वाश्च ताः पृष्ठपेशीवर्णने वर्णिताः।

(२) ऊर्द्ध्वशाखाया उरसा संयोजन्यश्चतस्रः पेश्यो यथा—उरश्छदा गुर्वी, लघ्वी सैव, अक्षकाधरा, अग्रिमारित्रा चेति। तासामाद्ये उरोबाहुसंयोजन्यौ, तृतीया अक्षकोरःसंयोजनी, चतुर्थी अंसफलकोरःसंयोजनी। सर्वाश्च ता उरः-पेशीवर्णने वर्णिताः।

(३) ग्रीवांऽससंयोजन्यौ द्वे पेश्यौ— अंसोन्नमनी अंसकण्ठिका चेति।

[ ७६ चित्रम् ]

## अंस-प्रगण्डीयाः पेश्यः ।



ते यथाक्रमं पुरः पश्चाच्च अंसफलकमूर्द्धमाक्रम्य धारयतः। वर्णिते च ते ग्रीवापेशीषु।

( तदेतत् पेशीदशकं न गृह्यते समष्टिसंख्याने, उक्तपूर्वत्वात्। )

अथ प्रधाना अंसपेश्यः।

ताः सप्त अंस-बाहु संयोजन्यः। तद्यथा—

**अंसच्छदा**[1] ( अंसपिण्डिका ) वा नाम बाहुमूलच्छादिनी स्थूलमांसला पेशी बाह्वंससन्धिमावृत्य अवतिष्ठते ( ७९ चित्रम् ) बाहुकञ्चुकाख्य दृढप्रावरण्या रक्षिता। सेयं मक्षकास्थ्नः पार्श्विकार्द्धात् अंसफलकस्य कूटप्राचीरयोश्च सम्भूय तिर्यक् प्रसृता प्रगण्डास्थ्नो मध्यनलकपार्श्वे निविशते स्थूलकण्डरामूलेन। अस्याः कार्यं बाहोरुन्नमनं मध्यकायसामकोण्येन, अपकर्षणं च स्तोकेन। प्रचेष्टनन्तु पञ्चम्या षष्ठ्या चानुग्रीविकया अनुकक्षाख्यनाडीप्रवेणीमुखेन।

**अंसान्तरिका**[2] नाम पेशी (७४ चित्रम् ) अंसफलकस्य अंसकपालिकोदरात् सम्भूय प्रगण्डास्थ्नो लघुपिण्डके निविशते, तस्याः कार्य्यं प्रगण्डास्थिमुण्डस्य मध्यरेखां प्रति पृष्ठतश्च विवर्त्तनम्। प्रचेष्टनी तु नाडी अन्वंसिका नाम।

**अंसपृष्ठिका उत्तरा अधरा**[3] चेति द्वे पेश्यौ ( ८० चित्रम् ) अंसफलकप्राचीरस्य उत्तराधरप्रदेशस्थे। ते अंसकपालिकापृष्ठात् सम्भूय प्रगण्डास्थ्नो महापिण्डके निविशेते। तयोराद्या बाहोरुत्तोलनी, अन्त्या बाहोर्बहिर्विवर्त्तनी। प्रचेष्टनी तु नाडी उभयोरपि अन्वंसिका नाम।

**अंसाधरिका गुर्वी लघ्वी**[4] चेति द्वे पेश्यौ ( ८० चित्रम् ) अंसफलकस्य कक्षानुगधाराया उत्तराधरार्द्धाभ्यां सम्भूय प्रगण्डास्थ्नो महापिण्डके निविशेते। तयोः कार्यं प्रगण्डास्थ्नो बहिर्विवर्त्तनम्, पृष्ठतः कर्षणं च। प्रचेष्टनी तु नाडी प्रथमाया अन्वंसिका, द्वितीयाया पञ्चमी अनुग्रीविका।

**काकोष्ठिका**[5] नाम पेशी ( ७९ चित्रम् ) अंसफलकस्य तुण्डात् सम्भूय प्रगण्डास्थ्नो मध्यनलकान्तःसीम्नि संबद्धा। सेयं बाहोः पुरोविवर्त्तनी, उरोदेशं प्रति कर्षणी च। तस्याः प्रचेष्टनी नाडी पेशीत्वगन्तिका बाहवी नाम।

---

१। अंसच्छदा—Deltoid. २। अंसान्तरिका—Subscapularis. ३। अंसपृष्ठिका उत्तरा अधरा च—Supraspinatus and Infraspinatus. ४। अंसाधरिका लघ्वी गुर्वी च—Teres major and minor. ५। काकोष्ठिका—Coraco-brachialis.

( ८० चित्रम् )

## अंस-बाहु-पृष्ठगाः पेश्यः ।




१। प्रगण्डास्थिमुण्ड पुरोभागः
२। अंसफलकस्य प्राचीरिका
३। अंसफलकस्य कोणः
४। कटिपार्श्वच्छदायाः काण्डरामात्रम्
५। कूर्परदेशः

अथ कक्षादरी ।

स्मर्त्तव्यं चात्र प्रसङ्गे कक्षान्तःस्थितं मन्दिरचूडाकारं कुहरं, कक्षादरी कक्षाकुहरं[१] वा नाम । तस्याः शिखरभागो ग्रीवामूलाभिमुखः स अक्षकांऽसफलक-

१। Axillary fossa.

प्रथमपर्शुकानामन्तरालस्थः। तमाश्रित्य प्रवर्त्तते 'कक्षाधरा' नाम धमनी सिरा च, नाडीप्रवेणी च 'कक्षानुगा' नाम। तस्यास्तलदेश स्त्रिकोणाकारः, स उरःपार्श्वं प्रति समायतः, बाहुपार्श्वे तनूकृतः कोणाकारश्च। स कक्षाप्रच्छदाख्यया गम्भीर-प्रावरण्या प्रावृतः। तस्याः पुरःप्राचीरमुरश्छदाख्यां पेशीभ्यां निर्म्मीयते। पश्चिमप्राचीरं पुनः—अंसान्तरिका, अंसाधरिका, कटिपार्श्वच्छदेति पेशीत्रयेण। तस्या अन्तःसीम्नि दृश्याः प्रथमाद्याश्चतस्रः पर्शुकास्तदन्तरालस्थपेशीभिरग्रिमा-रित्राख्य पेश्या च सहिताः। बहिःसीम्नि तु प्रगण्डास्थ्न ऊर्द्ध्वभागः, द्विशिरस्कया काकोष्ठिकया च पेश्या सहितः।

अत्र च कक्षादर्य्यां दृश्याः—कक्षाधराख्ये सिराधमन्यौ, कक्षानुगाख्या नाडी-प्रवेणी सशाखा, लसीकाग्रन्थयो बहवः, मेदोराशिश्च तदन्तरालाऽपूरणः।

अथ प्रगण्डीयाः पेश्यः।

तास्तिस्र एव। तद्यथा—

**द्विशिरस्का बाहवी**[१] नाम प्रगण्डपुरःस्था पेशी (७६ चित्रम्) द्वाभ्यां प्रभवाभ्यामुपलक्षिता। सैव प्राचां बाहुपिण्डिका नाम। तस्याः दृढकण्डरामयी दीर्घशिखा अंसफलकस्य अंसकूटशिखरात् सम्भूय अंसोदूखलिकाख्यं स्नायुकोषं निर्भिद्य अधःप्रसृता। ह्रस्वशिखा तु अंसतुण्डात् काकोष्ठिकया सह सम्भूय दीर्घशिखामनुवर्त्तते बाहुमध्यतः। शिखाद्वयं च क्रमेण कूर्परान्तं यावन्मांसली-भूय मिलितमेकीभूतकण्डरान्तेन बहिःप्रकोष्ठास्थ्न ऊर्द्ध्वप्रान्तपुरःस्थे अर्बुदाख्ये उत्सेधे निविशते। तद्बन्धनश्चात्र तिरश्चीनप्रावरणीभागः स्नायुमयो द्व्यङ्गुलायतः, कूर्परपट्टिका नाम। तयाऽच्छाद्यते बाहवी नाम धमनी, तदग्रशाखासहिता। द्विशिरस्कायाः कार्यं बाहोः संकोचनं कूर्परसन्धौ। प्रचेष्टनं पुनः पञ्चम्या षष्ठ्या च अनुग्रीविकया नाड्या, पेशीत्वगन्तिकां बाहवीं नाम नाडीमाश्रित्य।

**कूर्परद्वारिका**[२] नाम मांसला पेशी (७६ चित्रम्) द्विशिरस्कायाः पश्चादन्तःसीम्नि चावस्थिता। सेयं प्रगण्डास्थ्नो निम्नार्द्धपुरोभागात् सम्भूय कूर्परसन्धिमाच्छादयन्ती अन्तःप्रकोष्ठास्थ्नः चञ्चुप्रवर्द्धने निविशते। तस्याः कार्यं पूर्ववत्। प्रचेष्टनं तु बहिर्बाहुकया पेशीत्वगन्तिकया च नाड्या।

---

१। द्विशिरस्का बाहवी—Biceps Brachialis. २। कूर्परद्वारिका—Brachialis.

( ८१ चित्रम् )

## वाम प्रकोष्ठपुरःस्थाः पेश्यः ( उत्तानाः ) ।



**त्रिशिरस्का**[१] नाम दीर्घमांसला पेशी प्रगण्डपृष्ठतो वर्त्तते ( ८० चित्रम् )। तस्यास्त्रीणि शिरांसि मांसलप्रायाणि। तेषां बाह्यान्तःसीमस्थं शिरोद्वयं प्रगण्डास्थ्नो मध्यनलकपश्चिमस्थायाः सीतायास्तटद्वयात् सम्भवति, तन्मध्यस्थं तु शिरो दीर्घतमम् अंसफलकस्य अंसपीठाधःप्रदेशादुत्तिष्ठति। तेषां च संयोगेन एकीभावो बाहुपृष्ठे, कलाकण्डरामयश्च निवेशः अन्तःप्रकोष्ठास्थ्नः कूर्परकूटपृष्ठे। कार्यं पुनरस्याः संकुचितस्य बाहोः प्रसारणं कूर्परसन्धौ। प्रचेष्टनी नाडी बहिर्बाहुका नाम।

अथ प्रकोष्ठीयाः पेश्यः।

तासां पुरोवर्त्तिन्यः अष्टौ, पश्चिमस्थाश्च द्वादशेति विंशतिरेकैकस्मिन् प्रकोष्ठे। तास्वपि पुरःस्थाः—उत्तानाः पञ्च, गम्भीरास्तिस्रः। पश्चिमस्थाः—उत्तानाः सप्त, गम्भीराः पञ्च। तद्यथा—

( प्रकोष्ठपुरःस्था उत्तानाः )

**करविवर्त्तनी दीर्घा**[२] नाम पेशी ( ८१ चित्रम् ) प्रगण्डास्थ्नः अधःप्रान्तीयाद् आन्तरार्बुदात् अन्तःप्रकोष्ठास्थ्नः चञ्चुप्रवर्द्धनान्तःसीमतश्च मूलद्वयेन सम्भूय तिर्यग्गता बहिःप्रकोष्ठास्थ्नो मध्यभागे पश्चिमतो निविशते। अस्याः कार्य्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाडी तु मध्यप्रकोष्ठिका नाम, साऽस्याः मूलद्वयान्तराले प्रविष्टा।

**मणिबन्ध-संकोचनी बहिःस्था**[३] नाम पेशी ( ८१ चित्रम् ) तस्या एव अन्तःसीम्नि वर्त्तते। सा प्रगण्डास्थ्नः अधःप्रान्तीयादान्तरार्बुदात् पेशीपञ्चकसाधारणेन कण्डरामूलेन सम्भूय तर्जनीमूलशलाकाया मूलपुरोभागे निविशते। तस्याः कार्यं स्वनाम-व्याख्यातम्। प्रचेष्टनी तु नाडी मध्यप्रकोष्ठिका नाम।

**करतल प्रसारणी**[४] नाम तनुदीर्घा पेशी ( ८१ चित्रम् ) तस्या अप्यन्तःसीम्नि दृश्यते। तस्याः प्रभवः पूर्ववत्, निवेशस्तु कङ्कणिकाख्यस्नायौ करतलिकाख्यस्नायौ च। कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाडी पूर्ववत्।

---

१। Triceps Brachii. २। Pronator Teres. ३। Flexor Carpi Radialis. ४। Palmaris Longus.

( ८२ चित्रम् )

## वाम प्रकोष्ठपुरःस्थाः पेश्यः (गम्भीराः)।




[ अङ्गुली संकोचन्या अग्रपर्व्विकायाः काण्डरा चतुष्टयम् अङ्गुली चतुष्टये दृश्यम् । ]

**मणिबन्धसंकोचनी अन्तःस्था**[1] नाम दीर्घमांसला पेशी (८१ चित्रम्) प्रकोष्ठस्य चरमान्तःसीमस्था। तस्याः प्रभवः—एकेन मूलेन पूर्ववत्, अपरेण अन्तःप्रकोष्ठास्थ्नः कूर्परकूटान्तर्देशात् ऊर्द्ध्वप्रान्तपश्चिमधाराद्धाच्च। निवेशस्तु अङ्कुशक-वर्तुलकाख्ययोः कूर्चास्थ्नोः, पञ्चममूलशलाकायाम्, कङ्कणिकाख्यस्नायौ च। कार्यं पुनरस्याः स्वनामव्याख्यातम्। प्रचेष्टनी नाडी तु अन्तःप्रकोष्ठिका नाम।

**अङ्गुलीसंकोचनी मध्यपर्विका**[2] नाम पृथुला पेशी (८१ चित्रम्) पूर्वोक्त पेशीचतुष्टयेनावृता। तस्याः प्रभवस्त्रिभिर्मूलैर्द्व्यः। तत्रैकं मूलं पूर्वोक्तपेशीचतुष्टयसाधारणं प्रगण्डास्थ्नोऽधःप्रान्ते सम्बद्धम्, अपरं मूलद्वयं अन्तर्बहिः प्रकोष्ठास्थ्नोरूर्द्ध्वप्रान्तपार्श्वयोः। निवेशस्तु तस्य चतुर्भिः कण्डराग्रैरङ्गुलीचतुष्टयस्य मध्यपर्वपार्श्वयोः। तानि च कण्डराग्राणि निर्भिद्य अग्रे प्रसृताः अङ्गुलीसंकोचन्या अग्रपर्विकायाः कण्डराः। अस्याः कार्य्यमङ्गुलीचतुष्टयस्य मध्यपर्वाकर्षणेन संकोचनम्। प्रचेष्टनी नाडी तु मध्यप्रकोष्ठिका नाम।

(अथ प्रकोष्ठपुरःस्था गम्भीराः पेश्यः।)

**अङ्गुलीसंकोचनी अग्रपर्विका**[3] नाम पृथुमूला पेशी (८२ चित्रम्) पूर्वोक्तपेशीपञ्चकेनावृता प्रकोष्ठान्तःसीम्नि वर्त्तते। सेयमन्तःप्रकोष्ठास्थ्नः चञ्चुप्रवर्द्धनमूलात्, मध्यनलकस्य पादोनसमग्रपुरोभागात्, प्रकोष्ठान्तरालायाः कलायाश्च सम्भूय अधः प्रसृता कण्डराचतुष्टये विभज्यते। निविशते च सा अङ्गुलीसंकोचन्या मध्यपर्विकायाः कण्डराचतुष्टयं स्वकण्डराभिः निर्भिद्य अङ्गुलीनामग्रपर्वसु। अस्याः कार्य्यमङ्गुल्यग्रपर्वाकर्षणेन अङ्गुलिसंकोचनम्। प्रचेष्टनं तु अन्तःप्रकोष्ठिकया नाड्या, अग्रिमप्रकोष्ठान्तरालाया मध्यप्रकोष्ठिकाख्य-शाखया च।

**अङ्गुष्ठ संकोचनी दीर्घा**[4] नाम पेशी (८२ चित्रम्) पूर्वोक्तायाः सहकारिणी प्रकोष्ठबहिःसीमस्था। सा बहिःप्रकोष्ठास्थ्नः उत्तरार्द्धपुरोभागात् प्रकोष्ठान्तरालायाः कलायाश्च सम्भूय अङ्गुष्ठाग्रपर्वमूले दीर्घकण्डरया सम्बद्धा। तस्या कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाडी तु मध्यप्रकोष्ठिकाया अग्रिमप्रकोष्ठान्तराला नाम शाखा।

---

१। Flexor Carpli Ulnaris. २। Flexor Sublimis Digitorum. ३। Flexor Profundus Digitorum. ४। Flexor Pollicis Longus.

( ८३ चित्रम् )

# प्रकोष्ठ पश्चिमाः पेश्यः ।



**करविवर्त्तनी चतुरस्रा**[1] नाम ( ८२ चित्रम् ) प्रकोष्ठाधोभाग-पुरस्तादायता ह्रस्वा गम्भीरतमा च पेशी । सा उभयोरपि प्रकोष्ठास्थ्नोऽधः-प्रान्तयोः तिर्य्यक् प्रतिबद्धा । तस्याः कार्य्यं करतलस्य पश्चाद्विवर्त्तनम् । प्रचेष्टनी नाडी मध्यप्रकोष्ठिकायाः अग्रिमा प्रकोष्ठान्तराला नाम शाखा ।

ता एता अष्टौ प्रकोष्ठपुरःस्थाः पेश्यः ।

( अथ प्रकोष्ठपश्चिमा उत्ताना: पेश्यः । )

**करोत्तानना दीर्घा**[2] नाम स्थूलमांसलमध्या वेमसमाकारा पेशी ( ८३ चित्रम् ) । सा प्रकोष्ठपश्चिमप्रभवाऽपि तद्बहिःसीम्नि स्फुटतरं दृश्या सेयं प्रगण्डास्थ्नो बाह्यार्बुदात् सम्भूय बहिःप्रकोष्ठास्थ्नो बहिर्मणिकमूले दीर्घकण्डरया सम्बद्धा । सा स्वनामोद्दिष्टकार्याऽपि कूर्परद्धारिकया सह प्रचेष्टमाना बाहोरपि सङ्कोचनी । तस्याः प्रचेष्टनी नाडी बहिःप्रकोष्ठिका नाम ।

**मणिबन्धापकर्षणी दीर्घा**[3] **ह्रस्वा**[4] चेति द्वे पेश्यौ ( ८३ चित्रम् ) प्रगण्डास्थ्नोऽधःप्रान्तीयाद् बाह्यार्बुदात्, बहिःस्थायाः कूर्परसन्धिबन्धन्याः स्नायोश्च समानकण्डरामूलेन सम्भवतः । निवेशस्तु दीर्घायाः तर्जनीमूलशलाकामुले, ह्रस्वायाः पुनः मध्यमामूलशलाकामूले । क्रिया तावदुभयोरपि मणिबन्धस्य पश्चात् कर्षणम् । प्रचेष्टनी नाडी दीर्घाया बहिःप्रकोष्ठिका नाम, ह्रस्वायाः पुनः प्रकोष्ठान्तराला पश्चिमा ।

**अङ्गुलिप्रसारणी साधारणी**[5] नाम प्रकोष्ठपश्चिमपेशीषु (८३ चित्रम् ) मध्यवर्त्तिनी पेशी प्रगण्डास्थ्नोऽधःप्रान्तीयाद्बाह्याद्बदार्बुहिःस्थायाः कूर्परसन्धि-बन्धन्याः स्नायोश्च साधारणकण्डरामूलेन सम्भूय मणिबन्धादूर्द्ध्वं कण्डराचतुष्टये विभज्यमाना अङ्गुलीचतुष्टयस्य अग्र-मध्यपर्वणां पृष्ठतः सम्बद्धा । ताश्च कण्डराः अङ्गुलिसन्धीनां पृष्ठगस्नायुकार्यं साधयन्तीति विशेषः । तस्याः क्रिया स्वनामव्याख्याता । प्रचेष्टनी नाडी प्रकोष्ठान्तराला पश्चिमा नाम ।

---

१ । Pronator quadratus. २ । Brachio-radialis. ३ । Extensor Carpi Radialis Longus. ४ । Extensor Carpi Radialis Brevis. ५ । Extensor Digitorum Communis.

**कनिष्ठाप्रसारणी**[१] नाम तन्वी पेशी ( ८३ चित्रम् ) पूर्वस्याः सहचरी पूर्ववन्मूलेन सम्भूय कनिष्ठाङ्गुल्या मध्याग्रपर्वपृष्ठतः पूर्ववत् संबद्धा, पूर्वस्याः पेश्याः कनिष्ठान्तिककण्डरया मिलिता च। क्रिया त्वस्याः स्वनामव्याख्याता। प्रचेष्टनी नाडी पूर्ववत्।

**मणिबन्धापकर्षणी करभिका**[२] नाम स्थूलमांसला पेशी ( ८३ चित्रम् ) प्रगण्डास्थ्नः आन्तरार्बुदोपकण्ठतः अन्तःप्रकोष्ठास्थ्नो मध्यनलक-पश्चिमधारार्द्धाच्च सम्भूय अन्तर्मणिकपश्चिमसीतामार्गेण मणिबन्धादधः प्रसृता कनिष्ठामूलशलाकामूले ( करभदेशे ) सम्बद्धा च। अस्याः कार्यं स्वनाम-व्याख्यातम्, मणिबन्धस्य मध्यरेखां प्रति कर्षणञ्चापरम्। प्रचेष्टनी तु नाडी प्रकोष्ठान्तराला पश्चिमा नाम।

**कूर्परपृष्ठिका**[३] नाम ह्रस्वत्रिकोणप्राया पेशी ( ८३ चित्रम् ) प्रगण्डास्थ्नो वाह्यार्बुदात् सम्भूय अन्तःप्रकोष्ठास्थ्नः कूर्परकूटपृष्ठे स्तोकेन मध्यनलकपृष्ठे च तिर्य्यक् सम्बद्धा। सा त्रिशिरस्कायाः सहकारिणी कूर्परसन्धेः प्रसारणकार्या। तस्याः प्रचेष्टनी नाडी बहिर्बाहुकायाः शाखा।

( अथ प्रकोष्ठपश्चिमा गम्भीरा पेश्यः। )

**करोत्ताननी ह्रस्वा**[४] नाम पेशी ( ८२ चित्रम् ) प्रगण्डास्थ्नो वाह्यार्बुदात्, कूर्परसन्धिबन्धन्या मुण्डवेष्टनिकाख्यस्नाय्वोः बहिपार्श्विकाख्यस्नाय्वोः, कूर्परकूट-बहिर्धारातश्च सम्भूय तिर्य्यक् प्रसृता बहिःप्रकोष्ठास्थ्नो ग्रीवायां सम्बद्धा। अस्याः कार्य्यं करस्य उत्तानीकरणं स्तोकेन, प्रकोष्ठास्थ्नो बहिर्विवर्त्तनात्। प्रचेष्टनी नाडी प्रकोष्ठान्तराला पश्चिमा नाम, सा च पेशीं निर्भिद्य प्रसृतेति विशेषः।

**अङ्गुष्ठापकर्षणी दीर्घा**[५] नाम सुमांसला पेशी ( ८३ चित्रम् ) पूर्वोक्तपेश्याच्छादिता प्रकोष्ठास्थ्नो मध्यनलकपश्चिमदेशात् प्रकोष्ठान्तरालायाः कलायाश्च सम्भूता। सेयं मणिबन्धादूर्द्ध्वं कण्डरीभूयाऽङ्गुष्ठमूलशलाकामूले निविशते। तस्याः कार्यमङ्गुष्ठस्य बहिर्मुखं कर्षणम्। प्रचेष्टनी नाडी प्रकोष्ठान्तराला पश्चिमा नाम।

---

१। Extensor Digiti Quinti Proprius २। Extensor Carpi Ulnaris.
३। Anconeus. ४। Supinator. ५। Abductor Pollicis Longus.

**अङ्गुष्ठप्रसारणी ह्रस्वा**[१] नाम पेशी (८३ चित्रम्) पूर्वस्या उत्सङ्गे स्थिता। सेयं बहिःप्रकोष्ठास्थ्नो मध्यनलकपश्चिमभागात् प्रकोष्ठान्तरालकलायाश्च सम्भूयाऽङ्गुष्ठपश्चिमपर्वमूले सम्बद्धा। अस्याः कार्य्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाडी पूववत्।

**अङ्गुष्ठप्रसारणी दीर्घा**[२] नाम पेशी (८३ चित्रम्) तस्या अप्यन्तःसीम्नि दृश्यते। सेयमन्तःप्रकोष्ठास्थ्नो मध्यनलकपश्चिमतः सम्भूयाऽङ्गुष्ठाग्रिमपर्वमूले निविशते। अस्याः कार्य्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाडी पूर्ववत्।

**तर्जनीप्रसारणी**[३] नाम तनुदीर्घा पेशी (८३ चित्रम्) पूर्ववत् सम्भूय तर्जन्या मध्यमपश्चिमपर्वणोर्निविशते। सेयमङ्गुलीप्रसारणीपेश्या स्तर्जन्यागतकण्डरायाः सहचरीभूता। अस्या अपि कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाडी पूर्ववत्।

### अथ प्रसङ्गान्मणिबन्धीयाः स्नायुपट्टिकाः।

मणिबन्धव्यतिकरेण प्रसरन्तीनां कण्डराणां शिराधमनीनाडीनां श्लेष्मधरकलानाञ्च कण्डरानुगानां सन्धारण्यः स्नायुपट्टिकाश्चात्र तिस्रो द्रष्टव्याः। ता गम्भीरायाः प्रकोष्ठ प्रावरण्याः सान्द्रीभूता विभागा एवेति सुवचम्। ताश्च प्रकोष्ठाधरीया अग्रिमा, प्रकोष्ठाधरीया पश्चिमा, कङ्कणिका चेति। तत्र—

**प्रकोष्ठाधरीया अग्रिमा**[४] नाम स्नायुपट्टिका (८१ चित्रम्) प्रकोष्ठास्थ्नोरधःप्रान्तयोरनुप्रस्थं सम्बद्धा पुरतो मणिबन्धादूर्द्ध्वम्। सा अङ्गुलीसंकोचन्यादिपेशीनां कण्डराधारणी।

**प्रकोष्ठाधरीया पश्चिमा**[५] नाम स्नायुपट्टिका (८३ चित्रम्) प्रकोष्ठास्थ्नोरधःप्रान्तयोरनुप्रस्थं सम्बद्धा पश्चिमतः। तस्याः प्रतानाः वर्त्तुलकोपलकयोः कूर्चास्थ्नोरपि पृष्ठतः सन्नद्धाः। सेयं प्रसारण्याख्यपेशीनां कण्डराधारणी। ते चैते स्नायुपट्टिके उत्ताने।

---

१। Extensor Pollicis Brevis. २। Extensor Pollicis Longus. ३। Extensor Indicis Proprius. ४। Volar Carpal Ligament. ५। Dorsal Carpal Ligament.

( ८४ चित्रम् )

## दक्षिण करतलिका स्नायुः कण्डराश्च ।



**कङ्कणिका**[1] नाम गम्भीरा स्नायुपट्टिका ( ८४ चित्रम् ) कूर्चास्थ्नां पुरतो मणिबन्धानुप्रस्थं प्रतता। सेयमन्तःसीम्नि फणधरवर्त्तुलकाभ्यां, बहिःसीम्नि च नौनिभपर्याणकाभ्यां सम्बद्धा। सा च कूर्चास्थिसंघातकृतं कोरोदरं स्थानमाच्छादयन्ती कण्डरासुरङ्गामारचयति। तां हि सुरङ्गामाश्रित्य करतले प्रसरन्ति अङ्गुलीसंकोचन्याख्यपेशीद्वयस्य अष्टौ कण्डराः, दीर्घाया अङ्गुष्ठ-संकोचन्याः कण्डरा, मध्यप्रकोष्ठिका नाम नाडी च। मणिबन्धसंकोचन्या बहिःस्थायाश्च कण्डरा कङ्कणिकां निर्भिद्य पर्य्याणकमध्यवर्त्तिन्या सीतया विवर्त्तते। कङ्कणिकापुरस्तलमाश्रित्य च प्रसृता अन्तःप्रकोष्ठिका नाम सिरा, धमनी, नाडी च, अन्तर्मध्यप्रकोष्ठिकयोर्नाडयोस्त्वाचशाखाश्च। सम्बध्येते चात्र करतलप्रसारण्या दीर्घायाः, मणिबन्धसंकोचन्या अन्तःस्थायाश्च कण्डरे। एषा च कङ्कणिका स्नायुः क्षुद्राणां अङ्गुष्ठकनिष्ठापेशीनां प्रभवभूता, करतलिकाख्य-प्रावरण्या वक्ष्यमाणया संसक्ता। सर्वाश्च ताः कण्डरा अनुवर्त्तन्ते कण्डरानुगा नाम दीर्घकञ्चुकाकाराः श्लेष्मधराः कलाः, कण्डराणां साधुप्रवर्त्तनाय।

## अथ करपेश्यः।

ता एकोनविंशतिः। तद्यथा—करतले अङ्गुष्ठमूलं परितश्चतस्रः, कनिष्ठामूलं परितश्च चतस्र—इत्यष्टौ ; अङ्गुलीमूलशलाकान्तराले अग्रिमाः सप्त, पश्चिमाश्चतस्र इत्येकादश।

करपृष्ठे तु प्रसरन्तः प्रसारणी-पेशीनां कण्डराप्रतानाः स्वस्तिकाकारेण सन्निविष्टा अङ्गुलीसन्धीन् द्रढयन्ति। मांसला तु पेशी तत्र नास्त्येव।

आदौ चेह द्रष्टव्या सर्वासां करपेशीनां करतलीयसिराधमन्यादीनां च समाच्छादनी सुदृढा प्रावरणी **करतलिका**[2] नाम स्नायुः ( ८४ चित्रम् )। तस्याः मूलभागः कङ्कणिकाख्यस्नायौ सम्बद्धः, करतलप्रसारण्या दीर्घायाः कण्डरान्ते च। सेयं प्रायः समग्रं करतलमाच्छादयन्त्यपि मध्ये दृढतरत्रिकोणांशेन उपलक्षिता, पार्श्वयोश्च दृढशाखाद्वयेन। अन्ते च सा विभज्यते पञ्चाङ्गुली-मूलगतासु पञ्चसु प्रशाखासु। तत्र अङ्गुष्ठमूलगा प्रशाखा तनुतमा, अपरास्तु दृढाः परस्परसंसक्ताश्च अङ्गुलीमूलगैः स्नायुप्रतानैः। तैराच्छाद्यन्ते अङ्गुली-संकोचन्याख्यपेश्याः कण्डरान्ताः।

---

१। Transverse Carpal Ligament. २। Palmer apponeuroses.

( ८५ चित्रम् )

## वामकरतलस्थाः पेश्यः ।



अथ अङ्गुष्ठ मूलगाः पेश्यः ।

**अङ्गुष्ठापकर्षणी ह्रस्वा**[1] नाम ह्रस्वमांसला पेशी (८५ चित्रम्) नौनिभपर्याणकयोर्मूलतः कङ्कणिकाख्यस्नायोश्च सम्भूय अङ्गुष्ठपश्चिमपर्वमूले सम्बद्धा। सेयमङ्गुष्ठस्य बहिःकर्षणी। तस्याः प्रचेष्टनी नाडी मध्यप्रकोष्ठिका नाम।

**अङ्गुष्ठजापिनी**[2] नाम पेशी (८५ चित्रम्) अङ्गुष्ठमूलबहिःसीम्नि वर्त्तते। सा पर्याणकाख्यकूर्चास्थ्नः पुरोभागात् कङ्कणिकाख्य स्नायोश्च सम्भूय अङ्गुष्ठमूल शलाकाया बहिःसीम्नि सम्बद्धा। सेयमङ्गुष्ठसंकोचनाकर्षणाभ्यां जपकर्म्मसाधनी। तस्याः प्रचेष्टनी नाड़ी पूर्ववत्।

**अङ्गुष्ठसंकोचनी ह्रस्वा**[3] नाम पेशी (८२।८५ चित्रम्) कङ्कणिकाख्य-स्नायोः सम्भूय अङ्गुष्ठपश्चिमपर्वणः पार्श्वयोः चणकास्थियुतेन कण्डराद्वयेन सम्बद्धा। अस्याश्च पेश्याः कार्य्यं स्वनामव्याख्यातम्। प्रचेष्टन्यौ नाड्यौ मध्यप्रकोष्ठिका अन्तःप्रकोष्ठिका चेति।

**अङ्गुष्ठमूलकर्षणी**[4] नाम द्विधा विभक्ता पेशी (८५ चित्रम्) मध्यकूटाख्यकूर्चास्थ्नः, तर्जनीमध्यमामूलशलाकयोः मूलपार्श्वाभ्यां, कङ्कणिकाख्य-स्नायोश्च सम्भूय अङ्गुष्ठपश्चिमपर्वान्तःसीम्नि चणकास्थियुतया कण्डरया सम्बद्धा। तस्याः कार्य्यं स्वनामव्याख्यातम्। प्रचेष्टनी तु नाडी अन्तः-प्रकोष्ठिका नाम।

ता एताश्चतस्रः पेश्यः स्फुटां मांसपिण्डिकामारचयन्ति अङ्गुष्ठमूले पुरतः। सेयमङ्गुष्ठ पिण्डिका नाम।

अथ कनिष्ठा मूलगाः पेश्यः।

**करभसङ्कोचनी**[5] नाम तिरश्चीना पेशी (८५ चित्रम्) कङ्कणिकाख्य-स्नायोः करतलिकाख्यस्नायोश्च सम्भूय करभदेशे मणिबन्धाधःस्थायां त्वचि संबद्धा। तस्याः क्रिया स्वनाम व्याख्याता। प्रचेष्टनी नाडी तु अन्तः-प्रकोष्ठिका नाम।

---

१। Abductor Pollicis Brevis. २। Opponens Pollicis. ३। Flexor Pollicis Brevis. ४। Adductor Pollicis. ५। Plantaris Brevis.

**कनिष्ठापकर्षणी**[१] नाम पेशी ( ८५ चित्रम् ) वर्त्तुलकाख्यकूर्चास्थ्नः मणिबन्धसङ्कोचन्या अन्तःस्थायाः कण्डरातश्च सम्भूय कनिष्ठापश्चिमपर्वमूले सम्बद्धा । तस्याः कार्य्यं स्वनाम व्याख्यातम् । प्रचेष्टनी नाडी पूर्ववत् ।

**कनिष्ठासङ्कोचनी**[२] नाम पेशी ( ८५ चित्रम् ) फणधराख्यकूर्चास्थ्नः फणाग्रात् कङ्कणिकाख्य स्नायोश्च सम्भूय कनिष्ठापश्चिमपर्वमूले पूर्वया सह सम्बद्धा । तस्याः कार्य्यं स्वनाम व्याख्यातम् । प्रचेष्टनी नाडी पूर्ववत् ।

**कनिष्ठामूलकर्षणी**[३] नाम पेशी ( ८५ चित्रम् ) पूर्ववत्प्रभवा कनिष्ठामूलशलाकाऽन्तःसीम्नि सम्बद्धा, स्वनामव्याख्यातकार्या च । तस्याः प्रचेष्टनी नाडी पूर्ववत् ।

एताश्च चतस्रः पेश्यः कनिष्ठामूले करभपिण्डिकां नाम पेशीसङ्घातं निष्पादयन्ति।

अथ अङ्गुलीमूलशलाकान्तरालस्थाः पेश्यः ।

ता एकादश यथा—अनुकण्डरिका श्चतस्रः । शलाकान्तरीया अग्रिमास्तिस्रः, पश्चिमाश्च चतस्र इति । तत्र—

**अनुकण्डरिका**[४] नाम दीर्घजलौकाकाराः पेश्यः ( ८५ चित्रम् ) करतले अङ्गुलीसंकोचन्या अग्रपर्विकायाः कण्डराचतुष्टयात् सम्भूय अङ्गुलीमूलमाश्लिष्य करपृष्ठतो गताभिः स्वकण्डराभिः अङ्गुलीप्रसारण्याः साधारण्याः कण्डरासु सम्बद्धाः । तासां कार्य्यमङ्गुलीपश्चिमनलकानामाकर्षणम् । प्रचेष्टन्यो नाड्यस्तु अन्तर्मध्यप्रकोष्ठिकयोः शाखाः ।

**अग्रिमाः शलाकान्तरीया**[५] नाम तिस्रः पेश्यः अङ्गुष्ठेतराणामङ्गुलीनां मूलशलाकान्तरालेषु वर्त्तन्ते । ताः मध्यमावर्जमपरासां मूलशलाकानां पार्श्वेभ्यः सम्भूय तत्तदङ्गुलीनां पश्चिमनलकमूलेषु सम्बद्धाः । तासां कार्य्यमङ्गुलीनां संव्यूहनम् । प्रचेष्टनी नाडी अन्तः प्रकोष्ठिका नाम ।

---

१ । Abductor Digiti quinti. २ । Flexor Digiti Quinti Brevis. ३ । Opponens Digiti Quinti. ४ । Lumbricales. ५ । Planter Inter-ossei.

**पश्चिमाः शलाकान्तरीया**[1] नाम चतस्रः पेश्यः शरपुंखाकाराः पञ्चानामपि अङ्गुलीमूलशलाकानां पार्श्वेभ्यः सम्भूताः। तासामेकैकस्या मूलद्वयं मूलशलाकयोः स्वपार्श्वस्थयोः पार्श्वाभ्यां सम्भवति। निविशन्ते च तासां कण्डरा इत्थम्। मध्यमाङ्गुल्याः पश्चिमनलकमुभयतो द्वे, तर्जन्यनामिकयोर्बहिरन्तःसीम्नोश्च द्वे इति। तासां कार्यमङ्गुलीनां विस्फारणम्। प्रचेष्टनी तु नाडी पूर्ववत्।

ता एताः करपेश्यो व्याख्याताः। समाप्यन्ते चैतावता ऊर्ध्वशाखा पेश्यः।

इति चतुर्थोऽध्यायः।

---

# पञ्चमोऽध्यायः।

अथातः अधःशाखीयपेशीवर्णनीयमध्यायं व्याख्यास्यामः।

इह खलु अष्टपञ्चाशत् पेश्योऽधःशाखायामेकैकस्यां सम्बध्यन्ते। ताः स्थानप्राधान्येन पञ्चधा विभज्यन्ते। तद्यथा—जघनोदरीये द्वे। नितम्बीया नव। और्व्यः पञ्चदश। जङ्घागता स्त्रयोदश। पादगता उनविंशतिरिति।

तत्र जघनोदरीये द्वे, बस्तिगुहान्तःसम्भूते नितम्बमूलगे च द्वे—प्राधान्येन श्रोणिचक्राभ्यन्तरे तिष्ठन्ति। ताश्चतस्रो मध्यकाये संख्याताः। तस्मात् समष्टि संख्याने चतुःपञ्चाशदेव अधःशाखीयाः पेश्यः।

सर्वाश्च ता बाह्यप्रावरण्या सुदृढया आन्तरप्रावरण्या च समावृताः। तत्र आन्तरप्रावरण्या जघनोरुनितम्बच्छादनो दृढकञ्चुकाकारो भाग ऊरुकञ्चुका नाम (८६ चित्रम्)। सा ऊर्द्ध्वसीम्नि—त्रिकानुत्रिकयोः, बहिःपार्श्वे—जघनधारायां च, पुरस्ताद्—वंक्षणिकाख्यस्नायुरज्वां भगास्थ्न उत्तरशृङ्गे च, अन्तःपार्श्वे—श्रोणिगवाक्षपुरःपरिधौ कुकुन्दरपिण्डे त्रिककुकुन्दरिकाख्यस्नायुरज्वां च सम्बद्धा। सा ऊरुनितम्बपेशीराच्छादयन्ती अधःसीम्नि जानुसन्धिं परितः संसक्ता। मिलिता च साऽधस्ताद् जङ्घाच्छादन्या प्रावरण्या। तस्याश्च

---

१। Dorsal Inter-ossei.

( ८६ चित्रम् )

## ऊरूदर पार्श्विकाः पेश्यः (उत्तानाः)।



ऊरुकञ्चुकायाः नितम्बच्छादनो भागः क्वचिन्नितम्बप्रावरणीतिनाम्ना निर्दिश्यते। ताञ्च ऊरुकञ्चुकां बहिःसीम्नि कर्षति धारयति चाग्रे वक्ष्यमाणा ऊरुकञ्चुकाकर्षणी नाम पेशी। पुरस्ताच्च कञ्चुकायां सुमहच्छिद्रं तिरश्चीनठकाराकारं, तत् **अनुवंक्षणच्छिद्रं** नाम। तेन प्रविशति अनुवंक्षणिकाख्याः स्थूलोत्तानसिरा ऊर्वन्तः। पश्चाच्च ऊरुकञ्चुकातोऽन्तःप्रविष्टे पेश्यन्तरालगते स्थूलकले, ते ऊर्वस्थिपृष्ठस्थायां चतुर्भुजप्राकारिकाख्यरेखायां संसक्ते। अथ जघनोदरीये द्वे पेश्यौ—कटिलम्बिनी दीर्घा श्रोणिपक्षिणी चेति। ते वर्णितपूर्वे।

अथ नितम्बीयाः पेश्यः।

**नितम्बपिण्डिका गरिष्ठा**[1] नाम स्थूलमांसला तालवृन्तायतना पेशी नितम्बनिर्मापणी (८६।८७ चित्रयोः)। सेयं श्रोणिफलकस्य जघनपृष्ठधारातः त्रिकानुत्रिकपार्श्वाभ्यां गुर्व्या त्रिकुकुन्दराख्यस्नायोः सन्निहितमांसधरकलायाश्च विशालायतमांसलैर्मूलैः सम्भूय क्रमेण दृढस्थूलायतकण्डरायां परिणमन्ती, ऊर्वस्थिपृष्ठे प्राकारिकाख्यरेखायाः पश्चिमोर्द्ध्वधारायां निविशते। सम्बध्यते च सा ऊरुकञ्चुकाख्यप्रावरण्यां स्तोकेन। विवर्त्तते च तस्याः कण्डरा ऊर्वस्थ्नो महाशिखरकपार्श्वे श्लेष्मधरकलापुटव्यवधानेन। तस्याः कार्य्यं त्रिविधम्। ऊर्वस्थ्नः प्रसारणं बहिर्विवर्त्तनं चेति प्रथमम्। दण्डाकारेण तिष्ठतः पुरुषस्य मध्यकायानुपूर्व्या सक्थ्नो धारणं द्वितीयम्। पुरोऽवनतमध्यस्य तिष्ठतः पुरुषस्य श्रोणिकर्षणेन पुनः शरीरसरलीकरणं तृतीयम्। प्रचेष्टनी तु नाडी अधरा जाघनी नाम।

**नितम्बपिण्डिका मध्यमा**[2] नाम तादृश्येव पेशी (८७ चित्रम्) पूर्वोक्तपेश्या भूम्ना समावृता। सेयं जघनपृष्ठधाराभ्यां सन्निहितमांसधरकलातश्च आयतमांसलैर्मूलैः सम्भूय क्रमेन कण्डरायां परिणमन्ती ऊर्वस्थ्नो महाशिखरक-पृष्ठे निविशते। विवर्त्तते च तस्या अपि कण्डरा श्लेष्मधरकलापुटव्यव-धानेन तदुपकण्ठे। तस्याः कार्य्यम् ऊर्वस्थ्नो विवर्त्तनम्, शरीरस्य ऋजुभावेन धारणञ्च। प्रचेष्टनी तु नाडी उत्तरा जाघनी नाम।

---

१। Gluteus Maximus. २। Gluteus Medius.

( ८७ चित्रम् )

# सक्थि पश्चिमाः पेश्यः (उत्तानाः)।



**नितम्बपिण्डिका लघिष्ठा**[1] नाम (८६ चित्रम्) तादृश्येव स्वल्पायतना पेशी पूर्वोक्तपेशीभ्यां समावृता। सेयं जघनपृष्ठतः सम्भूय ऊर्वस्थ्नो महाशिखरकपुरोभागे निविशते। तस्याः कार्य्यं प्रचेष्टनी च नाडी पूर्ववत्।

**शुण्डिका**[2] नाम पेशी (८८ चित्रम्) गरिष्ठया नितम्बपिण्डिकयाच्छादिता मध्यकाये वर्णितपूर्वा संख्यातपूर्वा च।

**श्रोणिगवाक्षिणी अन्तःस्था**[3] नाम पेशी (८८ चित्रम्) वक्ष्यमाणाभ्यां यमलाख्यपेशीभ्यां मध्ये धृता पूर्वं वर्णितस्वरूपा संख्यातपूर्वा च।

**यमलाख्ये** द्वे पेश्यौ—**उत्तरा अधरा** चेति। ते (८८ चित्रम्) क्रमेण श्रोणिफलकस्य कुकुन्दरकण्टकपिण्डाभ्यां सम्भूय अन्तःस्थायाः श्रोणिगवाक्षिण्या ऊर्ध्वाधःप्रदेशाभ्यां सम्मिलितप्राये ऊर्वस्थ्नो महशिखरके निविशेते। तयोः कार्य्यम् ऊर्वस्थ्नो वहिर्विवर्त्तनम्। प्रचेष्टनं तु पञ्चम्या अनुकटिकया, आद्याभ्यां अनुत्रिकाभ्यां च।

**ऊरुचतुरस्रा**[4] नाम चतुरस्रप्राया ह्रस्वमांसला पेशी (८८ चित्रम्) श्रोणिफलकस्य कुकुन्दरपिण्डात् संभूय ऊर्वस्थ्नो महाशिखरकमूलपृष्ठे अनुप्रस्थं सम्बद्धा। तस्याः कार्य्यम् ऊर्वस्थ्नो वहिर्विवर्त्तनम्। प्रचेष्टनं पञ्चमानुकटिकया नाड्या प्रथमानुत्रिकया च।

**श्रोणिगवाक्षिणी बहिःस्था**[5] नाम त्रिकोणप्राया पेशी श्रोणिफलकस्य पुरोभागच्छादनी। सेयं श्रोणिगवाक्षपरिधिबहिर्देशात् तद् गवाक्षप्रावरण्याः कलायाश्च सम्भूय ऊर्वस्थ्नो महाशिखरपृष्ठस्थे कोटरे सम्बद्धा। तस्याः कार्य्यं पूर्ववत्। प्रचेष्टनी तु नाडी वंक्षणिका नाम।

अथ ऊरुपेश्यः।

ताश्च पञ्चदश, त्रिधा विभक्ताः। और्व्यः अग्रिमाः सप्त, अन्तःसीमस्थाः पञ्च, पश्चिमा स्तिस्र इति।

---

१। Gluteus Minimus. २। Pyriformis. ३। Obturator Internus.
४। Quadratus Femoris. ५। Obturator Externus.

( ८८ चित्रम् )

## नितम्बोरुपश्चिमाः पेश्यः ( गम्भीराः )।



तत्र अग्रिमा ऊरुपेश्यो यथा—

ऊरुकञ्चुकाकर्षणी[१] नाम तनुमांसला पेशी (८६ चित्रम्) श्रोणिफलकस्य जघनधारातः अग्रिमोर्द्ध्वजघनकूटतश्च सम्भूय ऊरुकञ्चुकाख्य प्रावरण्यां तिर्य्यक् सम्बद्धा। तस्याः कार्य्यं ऊरुप्रसारण्यन्ते शिथिलीभूतस्य ऊरुकञ्चुकस्य आकर्षणम्। प्रचेष्टनी तु नाडी उत्तरा जाघनी नाम।

दीर्घायामा[२] नाम तन्वी पेशी (८६ चित्रम्) दीर्घतमा शरीरे। सा श्रोणिफलकस्य अग्रिमोर्द्ध्वतनाज्जघनकूटात् तदधःस्थात् खाताद्र्धाच्च सम्भूय तिर्य्यग् गता जङ्घास्थ्न ऊर्द्ध्वप्रान्तान्तःसीम्नि निविशते। तस्याः कार्य्यं ऊरोर्वहिर्विवर्त्तनम्, जङ्घायास्तिर्य्यगाकर्षणञ्च। प्रचेष्टनी नाडी अग्रिमा और्वी नाम।

उरुदण्डिका[३] नाम स्थूलमध्या सुमांसला पेशी (८६ चित्रम्) ऊरुमध्ये पुरस्तादवतिष्ठते। सेयं श्रोणिफलकस्य अग्रिमाधस्तनजघनकूटात् वंक्षणोदूखलपरिधेरूर्द्ध्वदेशाच्च कण्डरामूलाभ्यां सम्भूय जानुकपालिकाया बहिर्धारायां उरुपिण्डिकासाधारण्या कण्डरया निविशते। तस्याः कार्यं जङ्घाप्रसारणम्। प्रचेष्टनी तु नाडी अग्रिमा और्वी नाम।

उरुप्रसारणी बाह्या[४] नाम पेशी (८८ चित्रम्) उरुप्रसारणीषु स्थूलतमा। सा ऊरोः पुरस्ताद्व बहिःसीम्नि च दृश्यते। सेयमूर्वस्थ्नो महाशिखराग्रिमधारातः प्राकारिकाख्यरेखातश्च सम्भूय जानुकपालिकाया बहिर्धारायां सम्बध्यते उरुपिण्डिकासाधारण्या कण्डरया। तस्याः कार्य्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाडी अग्रिमा और्वी नाम।

उरुप्रसारणी अन्तःस्था[५] नाम पेशी (८६ चित्रम्) ऊर्वस्थ्नः अग्रिमशिखरान्तरालरेखातः, प्राकारिकाख्य चतुर्भुजरेखाया अन्तःसीमस्थभुजद्वयाच्च सम्भूय गरिष्ठाया ऊरुसंव्यूहन्याख्यपेश्याः कलाकण्डरातो लब्धावयवा ऊरुपिण्डिकासाधारण्या कण्डरया जानुकपालिकाबहिर्धारायां निविशते। तस्याः कार्य्यादिकं पूर्ववत्।

---

१। Tensor Vaginae Femoris. २। Sartorius ३। Rectus Femoris. ४। Vastus Externus ५। Vastus Internus.

( ८६ चित्रम् )

## जघनोरुपुरःस्थाः पेश्यः।



**उरुप्रसारणी मध्यस्था**[1] नाम पेशी ( ८८ चित्रम् ) उभयोर्मध्यतः पुरस्तादवतिष्ठते ऊरुदण्डिकया समावृता। सेयं ऊर्वस्थिनलकस्य अग्रिमोत्तरार्द्धात् सम्भूय पूर्ववत् ऊरुपिण्डिकासाधारण्या कण्डरया निविशते। तस्याश्च कार्य्यादिकं पूर्ववत्।

एवं च ऊरुप्रसारण्याख्यपेशीचतुष्टयस्य निवेशकण्डरा पूर्वोक्तदिशा 'प्रसारणी'पेशीनां साधारणी, सेयमुरुपिण्डिकाकण्डरा नाम। केचित्तु जानुकपालवन्धनीं नाम स्नायुरज्जुमेव जङ्घास्थिपुरोभागसंसक्ता उरुप्रसारणीनां साधारणीं कण्डरां मन्यन्ते, जानुकपालिकाञ्च तत्कण्डरोद्भवं सुवृहच्चणकास्थीति। ( द्रश्यतां जानुसन्धिचित्रम् )।

**जानुकोषकर्षणी**[2] नाम तनुगम्भीरा पेशी ऊर्वस्थिनलकस्य अग्रिमाधःप्रदेशात् सम्भूय जानुसन्धिकोषस्य शिरसि सम्बद्धा। तस्याः कार्य्यं जानुप्रसारणे सति शिथिलीभूतस्य सन्धिकोषस्य ऊर्द्ध्वकर्षणेन उत्तंसनम्। प्रचेष्टनी तु नाडी अग्रिमा और्वी नाम।

अन्तः सीमस्था ऊरुपेश्यो यथा—

**ऊर्वन्तःपट्टिका**[3] नाम तनुमांसला दीर्घा पेशी ( ८८ चित्रम् ) ऊरोरन्तःसीम्नि उत्तानतमा। सेयं भगास्थिसन्धानपार्श्वतः सम्भूय जानुसन्धिमुल्लङ्घयन्ती जङ्घास्थ्नः ऊर्द्ध्वप्रान्तान्तःसीम्नि निविशते, दीर्घायामायाः कण्डरया मिलिता। अस्याः कार्य्यं जङ्घास्थ्नः अन्तर्विवर्त्तनं सङ्कोचनञ्च। प्रचेष्टनी नाडी वंक्षणिका नाम।

**कङ्कतिका**[4] नाम आयतचतुरस्रा ह्रस्वपेशी ( ८६ चित्रम् ) श्रोणिफलकस्य वस्तिकण्ठिकाख्यरेखातः सम्भूय तिरश्चीनगत्या ऊर्वस्थिपृष्ठे लघुशिखरकाधः सन्निविष्टा। तस्याः कार्य्यं ऊर्वस्थ्नः संन्यूहनं बहिर्विवर्त्तनं च। प्रचेष्टनी नाडी अनुवंक्षणिका, अग्रिमा और्वी च।

---

१। Vastus Medius. २। Articulares Genu ( Subcrureus. )
३। Gracilis. ४। Pectineus.

( १० चित्रम् )

# जङ्घापुरःपार्श्विका पेश्यः ।



**ऊरुसंव्यूहनी दीर्घा**[1] नाम त्रिकोणायतमांसला पेशी ( ८६ चित्रम् ) भगास्थिपुरोभागात् कण्डरामूलेन सम्भूय क्रमेणायतीभूता ऊर्वस्थिपृष्ठे प्राकारिकाख्यरेखाया मध्यभागे सम्बद्धा । तस्याः कार्य्यम् ऊर्वस्थ्नो मध्यरेखां प्रति आकर्षणं ( संव्यूहनम् ), वंक्षणसन्धिसंकोचनम्, वहिर्विवर्त्तनञ्च । प्रचेष्टनी तु नाडी वंक्षणिका नाम ।

**ऊरुसंव्यूहनी ह्रस्वा**[2] नाम तादृश्येव पेशी ( ८६ चित्रम् ) पूर्वोक्ताया ऊर्द्ध्वं वर्त्तते । सा भगास्थ्नो मुण्डादधरशृङ्गाच्च कण्डरामूलेन समुत्थिता क्रमेण मांसला ऊर्वस्थ्नः प्राकारिकाख्यरेखाया ऊर्द्ध्वभागे सम्बद्धा । तस्याः कार्य्यादिकं पूर्ववत् । ताञ्च निर्भिद्य गता गम्भीरोरुकाख्यधमन्याः शाखा शाखाद्वयं वा ।

**ऊरुसंव्यूहनी गरिष्ठा**[3] नाम विशालायतमांसला त्रिकोणप्राया पेशी ( ८६ चित्रम् ) पूर्वोक्तयोः पेश्योः पृष्ठतोऽधस्ताच्च वर्त्तते । सेयं श्रोणिगवाक्षस्य पुरःपरिधेः कुकुन्दरपिण्डाच्च कण्डरामूलेन सम्भूय क्रमेण मांसलायता ऊर्वस्थ्नः पृष्ठे प्रायः समग्रायां प्राकारिकाख्यरेखायां तदधःप्रान्तस्थे आन्तरोपार्वुदे च सम्बद्धा । चत्वारि चास्यां पेश्यां छिद्राणि द्रष्टव्यानि । तत्रोर्द्ध्वतनं छिद्रत्रयं गम्भीरोरुकाया धमन्याः शाखात्रयस्य पश्चाद् गमनाय । अधस्तनं तु छिद्रं बृहत्तमम्, और्व्या धमन्याः सिरायाश्च निर्गमाय । तस्याः कार्य्यं ऊरुसंव्यूहनम् । प्रचेष्टन्यौ तु नाड्यौ—महागृध्रसी वंक्षणिका चेति ।

अथ पश्चिमा ऊरु पेश्यः ।

**द्विशिरस्का और्वी**[4] नाम स्थूलमांसला पेशी ( ८७।८८ चित्रयोः ) ऊरुपश्चिमतः पिण्डिकाकारा । तस्या द्वे शिरसी शिखे वा कण्डरात्मिके । तत्र दीर्घा शिखा श्रोणिफलकस्य कुकुन्दरपिण्डात् सम्भूता जानुकर्षण्याः कण्डराकलायाः मूलेन मिलितप्राया । ह्रस्वा शिखा प्राकारिकाख्यरेखाया बहिस्तटात् पेश्यन्तरालायाः कलायाश्च सम्भूता । शिखाद्वयं च ऊरुमध्यपृष्ठत एकीभूय अनुजङ्घास्थ्नो बहिःसीम्नि निविशते । तस्याः कार्य्यं जङ्घायाः संकोचनम्, बहिर्विवर्त्तनञ्च । प्रचेष्टनी नाडी—महागृध्रसी नाम ।

---

१ । Adductor Longus. २ । Adductor Brevis. ३ । Adductor Magnus. ४ । Biceps Femoris.

**जानुकर्षणी कण्डराकल्पा**[१] नाम स्वल्पमांसला दीर्घा पेशी ( ८७ चित्रम् ) श्रोणिफलकस्य कुकुन्दरपिण्डादेव सम्भूय जङ्घास्थ्न उर्द्ध्व-प्रान्ताऽन्तःसीम्नि सम्बद्धा । तस्याश्च निवेशकण्डरा स्नायुमयीभिः शाखाभि-र्द्दृढीकरोति जानुसन्धिबन्धनीं स्नायुराजिम् । तस्याः कार्य्यं जङ्घायाः सङ्कोचनमन्तर्विवर्त्तनञ्च ।

**जानुकर्षणी कलाकल्पा**[२] नाम पेशी ( ८७ चित्रम् ) पूर्ववत्-प्रभवनिवेशा ऊरुपृष्ठे तदन्तःसीम्नि च वर्त्तते । तस्याः कलाकल्पेति संज्ञा दृढकलामयप्रभवत्वात् । तस्याश्च निवेशकण्डरायाः पूर्ववत् प्रसरन्ति शाखाः जानुसन्धिदार्ढ्याय, तास्वेका शाखा जानुसन्धेः पश्चात् तिर्य्यक् सम्बद्धा जङ्घापश्चिमां सिरां धमनीश्चावृणोति । कार्य्यादिकञ्च पूर्ववत् ।

अथ जङ्घागताः पेश्यः ।

तास्त्रयोदश, जङ्घास्थिद्वयेन तदन्तरालस्थया कलया च इत्थं विभक्ताः— अग्रिमाश्चतस्रः, पश्चिमाः सप्त, बहिःपार्श्वगे द्वे चेति । अन्तःपार्श्वं पुरोधारा च जङ्घास्थ्नः त्वचोऽधस्तादनुभूयेते, तत्र सर्वथा पेश्यभावः । अथाऽसु पेशीषु—

**जङ्घापुरोगा**[३] नाम मांसला पेशी ( ९० चित्रम् ) जङ्घायाः पुरस्ताद् बहिःपार्श्वे च वर्त्तते । सेयं जङ्घास्थ्नो बहिःकन्दात् मध्यनलकबहिःपार्श्वतः जङ्घान्तरालायाः कलायाश्च सम्भूय मध्ये स्थूलमांसला, अन्ते च कण्डरीभूता, पादतले अन्तःकोणकाख्यकूर्चास्थ्नि पादाङ्गुष्ठमूलशलाकामूले च तिर्य्यङ् निविशते । प्राक् च निवेशात् वक्ष्यमाणयोरूर्द्ध्वगुल्फिका-गुल्फस्वस्तिकाख्ययोः स्नायुपट्टिकयोरधःस्थेन अन्तःसुरङ्गापथेन पादतलाभिमुखं प्रसृताऽसौ कण्डरा । कार्य्यन्तु पेश्याः—पादस्य अन्तर्विवर्त्तनं गुल्फसन्धिसंकोचनं च । अस्याः प्रचेष्टनी नाडी – पुरोजङ्घिका गम्भीरा नाम ।

**पादाङ्गुष्ठप्रसारणी दीर्घा**[४] नाम तनु पेशी ( ९० चित्रम् ) पूर्वोक्तया पेश्या प्रच्छन्ना अनुजङ्घास्थ्नो मध्यार्द्धात् जङ्घान्तरालाख्यकलायाश्च सम्भूय

---

१ । Semi-tendinosus. २ । Semi-membranosus. ३ । Tibialis Anterior. ४ । Extensor Hallucis Longus.

शेषार्द्धे कण्डरामयी पूर्वोक्तस्नायुपट्टिकाद्वयाधःस्थेन मध्यसुरङ्गापथेन निर्गता पादाङ्गुष्ठस्य अग्रिमपर्वपृष्ठे निविशते। तस्याः कार्य्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाडी पूर्ववत्।

**पादाङ्गुलीप्रसारणी दीर्घा**[1] नाम पेशी (९० चित्रम्) जङ्घास्थ्नो बहिःकन्दात्, अनुजङ्घास्थ्नो मध्यनलकात् जङ्घान्तरालाख्यकलायाश्च सम्भूय पूर्ववत् स्नायुपट्टिकाद्वयाधःस्थेन बहिःसुरङ्गापथेन निष्क्रान्ता पादाङ्गुलीचतुष्टयस्य अग्रिम-मध्यमपर्वपृष्ठतो निविशते, पादपृष्ठे चतुर्धा विभक्ताभिः कण्डराभिः। तस्या कार्य्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाडी च पूर्ववत्।

**पादविवर्त्तनी तृतीया**[2] नाम पेशी (९० चित्रम्) पूर्वोक्तया मिलितमूला जङ्घाबहिःपार्श्वतो वर्त्तते। सा अनुजङ्घास्थ्नो निम्नपादांशबहिस्तलात् जङ्घान्तरालकलायाश्च सम्भूय पूर्वोक्तायाः सहचरीभूय तथैव निष्क्रान्ता, पादकनिष्ठामूलशलाकामूले निविशते कण्डराग्रेण। तस्याः कार्य्यं पादस्य बहिर्विवर्त्तनं, गुल्फसन्धेः संकोचनं च। प्रचेष्टनी नाडी तु पूर्ववत्।

जङ्घापश्चिमाः पेश्यः पुनः सप्त, जङ्घान्तरालायाः कलायाः पृष्ठतः। तासु पिण्डिकाख्या स्तिस्र उत्तानाः, अपरास्तु चतस्रो गम्भीराः। तद्यथा—

**जङ्घापिण्डिका गुर्वी**[3] नाम स्थूलमांसला पेशी (८७।८८ चित्रयोः) प्राधान्येन जङ्घापिण्डिकानिर्मापणी। सा द्वाभ्यां मूलाभ्यां ऊर्वस्थ्नो महार्बुदद्वयस्य पृष्ठतः सम्भूय साधारणया पिण्डिकाकण्डरया पार्ष्णिमूलपृष्ठे निविशते। तस्याः कार्य्यं पार्ष्णिमूलकर्षणम्। प्रचेष्टनी नाडी—अधिजङ्घिका नाम।

**जङ्घापिण्डिका लघ्वी**[4] नाम स्वल्पमांसला पेशी (८७ चित्रम्) पूर्वोक्तयाऽच्छादिता, अनुजङ्घास्थ्नः ऊर्द्ध्वप्रान्तात्, मध्यनलकोर्द्ध्वांशात्, जङ्घास्थि-काण्डपृष्ठस्थायास्तिरश्चीनरेखायाश्च सम्भूय पूर्ववत् साधारणया पिण्डिका-कण्डरया पार्ष्णिमूलपृष्ठे निविशते। तस्याः कार्य्यं पूर्ववत्। प्रचेष्टनी नाडी—अधिजङ्घिका अनुजङ्घिका च।

---

१। Extensor Digitorum Longus. २। Peroneus Tertius.
३। Gastrocnemius. ४। Soleus.

**जङ्घापिण्डिका तृतीया**[१] नाम दीर्घकण्डराप्राया पेशी ( ८७ चित्रम् ) पूर्वस्याः सहकारिणी। सा ऊर्वस्थ्नो बाह्यमहार्बुदोपकण्ठात् सम्भूय पूर्ववत् साधारण्या कण्डरया मिलिता। तस्याः कार्य्यं पूर्ववत्। प्रचेष्टनी नाडी अधिजङ्घिकैव। इदं च पेशीत्रयं जङ्घापिण्डिकेति पिण्डिकेति वा कथ्यते।

अथ गम्भीरा जङ्घापश्चिमाः पेश्यः ।

**जानुपृष्ठिका**[२] नाम स्वल्पमांसा त्रिकोणप्राया पेशी ( ९० चित्रम् ) जानुसन्धिपृष्ठतः तिरश्चीनभावेन वर्त्तते। सा ऊर्वस्थ्नो बाह्यमहार्बुदपार्श्वतः स्वनामस्नायोश्च सम्भूय जङ्घास्थ्नो मध्यनलकपृष्ठे तिरश्चीनरेखोर्द्धं निविशते। तस्याः कार्य्यं जानुसन्धिसंकोचनम्, जङ्घास्थ्नः किञ्चिदन्तर्विवर्त्तनेन सहितम्। प्रचेष्टनी नाडी अधिजङ्घिका नाम।

**पादाङ्गुष्ठसङ्कोचनी दीर्घा**[३] नाम पेशी ( ९२ चित्रम् ) जङ्घापृष्ठतोऽन्तःसीम्नि वर्त्तते। सा अनुजङ्घास्थ्नो मध्यनलकपृष्ठतो जङ्घान्तरालकलायाश्च सम्भूय क्रमेण कण्डरीभूता, जङ्घास्थ्नः अन्तर्गुल्फपश्चिमया सीतया प्रसृता वक्ष्यमाणया अन्तर्गुल्फिकया स्नायुपट्टिकया च्छाद्यते। ततः पार्ष्णिकूर्चशिरसोः सीताभ्यां निष्क्रान्ता पादतलमतिक्रम्य पादाङ्गुष्ठस्य अग्रिमपर्वमूले निविशते। तस्याः कार्य्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाडी अनुजङ्घिका नाम।

**पादाङ्गुलिसंकोचनी दीर्घा**[४] नाम पेशी ( ८७।९३ चित्रयोः ) जङ्घास्थ्नः पृष्ठतो वर्त्तते, तन्मध्यनलकपृष्ठात् सम्भूता। तस्याः कण्डरा अन्तर्गुल्फपश्चिमया सीतया जङ्घानुगाख्यपेश्याः कण्डरासहचरी पूर्ववत् स्नायुपट्टिकयाऽच्छादिता। ततः पादतले पूर्वोक्तां पेशीं तिर्य्यगुल्लङ्घ्यकण्डरा चतुष्टये विभक्ता। निविशन्ते च तानि कण्डरामुखानि पादाङ्गुलिसंकोचन्या ह्स्वायाः कण्डराचतुष्टयं निर्भिद्य पादाङ्गुलीचतुष्टयस्य अग्रिमपर्वमूलेषु। तस्याः कार्य्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाड़ी अनुजङ्घिका नाम।

---

१। Plantaris. २। Popliteus. ३। Flexor Hallucis Longus ४। Flexor Digitorum Longus.

**जङ्घानुगा**[1] नाम पेशी (६३ चित्रम्) पूर्वोक्तपेश्योर्मध्ये गम्भीरमवस्थिता शरपुंखाकारा मांसला च। सेयं द्वाभ्यां मूलाभ्यां जङ्घास्थ्नः काण्डपृष्ठात्, अनुजङ्घास्थ्नः काण्डान्तरालाच्च सम्भवति, मूलद्वयान्तराले च तस्याः पुरस्ताद्विनिर्गता अग्रजङ्घिका नाम धमनी सिरा च। मिलितमूलायाश्च तस्या अधस्तादपरोऽपि प्रभवो जङ्घान्तरालाख्यायां कलायाम्। तस्याश्च कण्डरा अन्तर्गुल्फपश्चिमया सीतया प्रसृता पूर्ववत् स्नायुपट्टिकया च्छादिता नौनिभान्तःकोणकयो-र्निविशते। सन्ति चापरा अपि तत्कण्डरायाः शाखानिवेशा ये कोणकद्वये पार्ष्णिघनयोः द्वितीयतृतीयचतुर्थमूलशलाकामूलेषु च सम्बध्यन्ते। तस्याः कार्य्यं पादतलाकर्षणं पादस्य अन्तर्विवर्त्तनञ्च। धारयति च सा पादान्तरीयसीमां धनुर्वक्रभावेन, शरीरभारग्रहणाय। तस्याः प्रचेष्टनी नाडी अनुजङ्घिका नाम।

अथ जङ्घाबहिःसीमस्थे पेश्यौ।

**पादविवर्त्तनी दीर्घा**[2] नाम पेशी (६० चित्रम्) अनुजङ्घास्थ्नः ऊर्द्ध्वप्रान्तात् मध्यनलकपार्श्वाच्च सम्भूता। सा जङ्घान्तरालकलायामपि प्रतिबद्धमूला बहिर्गुल्फपश्चिमया सीतया घनाख्यकूर्चास्थिगतया सीतया च प्रसृत्य, पादतलं तिर्य्यग्गुल्लङ्घ्य अन्तःकोणके अङ्गुष्ठमूलशलाकामूले च निविशते। तस्याः कार्य्यं पादतलसंकोचनम्, पादस्य बहिर्विवर्त्तनञ्च। प्रचेष्टनी नाडी—पुरोजङ्घिका उत्ताना नाम।

**पादविवर्त्तनी ह्रस्वा**[3] नाम तनुपेशी (६० चित्रम्) अनुजङ्घास्थ्नः काण्डबहिस्तलात् सम्भूय पूर्ववत् सीतया प्रसृता पादकनिष्ठामूलशलाकाया मूलपृष्ठे सम्बद्धा। तस्याः कार्य्यं पादतलस्य संकोचनं बहिर्विवर्त्तनं च स्तोकेन। प्रचेष्टनी नाडी पूर्ववत्।

अत्र च प्रसङ्गे द्रष्टव्यास्तिस्रः स्नायुपट्टिकाः (गम्भीर प्रावरण्याः सान्द्रीभूतभागाः)। ताः जंघायाः पुरःस्थानामन्तर्बहिःसीमस्थानाञ्च कण्डराणां सन्धारण्यः। ताः—ऊर्द्ध्वगुल्फिका, गुल्फस्वस्तिका, अन्तर्गुल्फिका चेति

---

१। Tibialis Posterior. २। Peroneus Longus ३। Peroneus Brevis.

संज्ञायन्ते। तासामाद्या गुल्फयोरूर्द्ध्वं स्थिता जङ्घाऽनुजंघास्थ्नोरनुप्रस्थं सम्बद्धा, सा पूर्वोक्तानां जङ्घापुरोगानां कण्डराणां पृथक्सुरङ्गासु प्रविष्टाना माच्छादनी सन्धारणी च। द्वितीया गुल्फस्वस्तिका नाम स्नायुपट्टिका स्वस्तिकाकारा सन्दंशाकारा वा, सा गुल्फसन्धेः पुरो बहिश्च संसक्ता। साऽसौ पूर्वोक्तपेशीनां सिराधमनीनाडीनाञ्च पुरस्तात् सन्धारणी। तृतीया अन्तर्गुल्फिका नाम स्नायुपट्टिका पार्ष्णिगुल्फयोरन्तराले संसक्ता। सा तदधःस्थामस्थिभूमिं सुरङ्गासु विभजते। ताभिश्च सुरङ्गाभिः दीर्घायाः पादाङ्गुष्ठसंकोचन्याः पादाङ्गुली संकोचन्या जंघानुगायाश्चेति पेशीत्रयस्य कण्डरान्तानां, पश्चिमजङ्घिकाख्यसिराधमनी नाडीनाञ्च प्रसरः।

### अथ पादपेश्यः।

ता एकोनविंशतिरित्थम्। पादपृष्ठे एका, पादतले स्तरचतुष्टये अष्टादशेति। तत्र—पादपृष्ठे—

**पादाङ्गुलिप्रसारणी ह्रस्वा**[१] नाम पेशी (६० चित्रम्) दीर्घायाः पादाङ्गुलीप्रसारण्याः कण्डराभिराच्छादिता। सा पार्ष्णिसंज्ञस्य कूर्चास्थ्नः पुरःपार्श्वभागाभ्यां पार्ष्णिकूर्च्चशिरः-सन्धायिन्याः बाह्यस्नायोश्च सम्भूय कण्डरान्तेन तिर्य्यक् पादपृष्ठे प्रसृता, चतुर्षु कण्डरामुखेषु विभक्ता। तेषाञ्च कण्डरामुखानां प्रथममङ्गुष्ठपश्चिमपर्वपृष्ठे सम्बद्धम्, अपरत्रयं तु पादाङ्गुलीप्रसारण्या दीर्घायास्तिसृषु कण्डरासु। तस्याः कार्य्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाडी पुरोजङ्घिका नाम।

पादतलस्थास्तु सर्वाः पेश्यः पादतलिकाख्यया गम्भीरप्रावरण्याऽच्छाद्यन्ते धार्य्यन्ते च। सा पार्ष्णेरान्तरार्वुदे सम्बद्धमूला शाखात्रयवती च। तत्र मध्यमा शाखा दृढतमा, मूले रज्वाकारा, अग्रे च पत्राकारा। सा पञ्चभिः प्रशाखाभिः पञ्चाङ्गुलिमूलेषु संसक्ता। पार्श्विके तु शाखे पार्श्विकपादपेशीनां संरक्षिण्यौ, पादपृष्ठिकाख्यगम्भीर प्रावरण्या मिलिते च।

---

१। Extensor Digitorum Brevis.

अथ पादतले प्रथमस्तरे तिस्रः पेश्यः । तद् यथा —

**पादाङ्गुष्ठापकर्षणी**[१] नाम पेशी ( ६१ चित्रम् ) पादान्तरसीम्नि वर्त्तते शरपुंखाकारा । सेयं पार्ष्णेरान्तरार्बुदात् आन्तरवलयिकाख्यस्नायोः पादतलिकाख्यप्रावरण्याश्च सम्भूय पादाङ्गुष्ठपश्चिमपर्वणः आन्तरसीम्नि सम्बद्धा । तस्याः कार्य्यं स्वनामव्याख्यातम् । प्रचेष्टनी नाडी आन्तरा पादतलीया नाम ।

( ६१ चित्रम् )

## पादतले प्रथमस्तरस्थाः पेश्यः ।




१ । Abductor Hallucis.

**पादाङ्गुलिसंकोचनी ह्रस्वा**[१] नाम स्थूलमांसलोदरा पेशी (६१ चित्रम्) पादतलमध्ये पादतलिकाख्यप्रावरण्या संसक्ता वर्त्तते। सेयं कण्डरासूत्रेण पाष्णितलपुरोभागादुत्थिता अग्रे कण्डरा चतुष्टयेन पादाङ्गुलि-चतुष्टयस्य मध्यमपर्वसु सम्बध्यते। ताश्च कण्डरा निभिद्य प्रसृताः पादाङ्गुलिसंकोचन्या दीर्घायाः कण्डराः। तस्याः कार्य्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाडी पूर्ववत्।

**पादकनिष्ठापकर्षणी**[२] नाम तनुमांसला पेशी (६१ चित्रम्) पादतलस्य बहिःसीम्नि वर्त्तते। सेयं पार्ष्णिमूलपार्श्वात्, पादतलिकाख्यप्रावरण्याश्च सम्भूय पादकनिष्ठापश्चिमपर्वणि सम्बद्धा। तस्याः कार्य्यं स्वनाम-व्याख्यातम्। प्रचेष्टनी नाडी—वाह्या पादतलीया नाम।

पादतले द्वितीयस्तरे पञ्च पेश्यः। तद्यथा—

**पादतलचतुरस्रा**[३] नाम चतुरस्रप्राया मांसला पेशी (६२ चित्रम्) पार्ष्णितलान्मूलद्वयेन दीर्घपादतलिकाख्यस्नायोश्च सम्भूय दीर्घायाः पादाङ्गुलि-सङ्कोचन्याः कण्डरायां सम्बद्धा। तस्याः कार्य्यं दीर्घायाः पादाङ्गुलि-सङ्कोचन्याः तिरश्चीनाकर्षणस्य सरलीकरणम्। प्रचेष्टनी नाड़ी—वाह्या पादतलीया नाम।

**अनुकण्डरिकाः**[४] नाम चतस्रो जलौकाकाराः पेश्यः (६२ चित्रम्)। ताः दीर्घायाः पादाङ्गुलिसङ्कोचन्याश्चतुर्भ्यः कण्डरान्तेभ्यः सम्भूय पादाङ्गुलि-मूलानि तिर्य्यगुल्लङ्घ्य कण्डराग्रैः अङ्गुलिपश्चिमपर्वपृष्ठेषु पादाङ्गुलिप्रसारण्या दीर्घायाः कण्डरान्तैः सह सम्बद्धाः। तासां कार्य्यं पादाङ्गुलीपश्चिम-पर्वणामाकर्षणम्, अङ्गुलिसङ्कोचनकाले प्रसारणीकण्डरान्तानां शिथिलीकरणं च। तासां प्रचेष्टनं आन्तरपादतलीयनाड्योः शाखाभिः।

---

१। Flexor Digitorum Brevis. २। Abductor Minimi Digiti.
३। Quadratus Plantae. ४। Inter-ossei.

( ६२ चित्रम् )

## पादतले द्वितीयस्तरस्थाः पेश्यः ।



पादतले तृतीयस्तरे तिस्रः पेश्यः। तद्यथा—

**पादाङ्गुष्ठसङ्कोचनी ह्रस्वा**[१] नाम पेशी ( ६३ चित्रम् ) पादाङ्गुष्ठाऽनुक्रमेण वर्त्तते शरपुंखाकारा। सेयं घन-बाह्यकोणकाभ्यां, जङ्घानुगाख्यपेश्याः कण्डरायाश्च सम्भूय पादाङ्गुष्ठपश्चिमपर्वणो मूलपार्श्वयोः कण्डराद्वयेन सम्बद्धा। तयोश्च कण्डरयोरेका पादाङ्गुष्ठप्रकर्षण्याः कण्डरया मिलिता, अपरा पादाङ्गुष्ठाऽपकर्षण्याः कण्डरया। तस्याः कार्य्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाडी आन्तरा पादतलीया नाम।

**पादाङ्गुष्ठप्रकर्षणी**[२] नाम ह्रस्वाकारा पेशी ( ६३ चित्रम् ) द्वाभ्यां भागाभ्यामुपलक्षिता। तयोरेको भागो दीर्घतिरश्चीनः, स मध्यममूलशलाकात्रयस्य मूलेभ्यः पादविवर्त्तन्या दीर्घायाः कण्डराकञ्चुकतश्च सम्भूय पादाङ्गुष्ठपश्चिमपर्वमूलस्य वहिःपार्श्वे निविशते। अपरो भागः अङ्गुलीमूलेषु अनुप्रस्थभावेन वर्त्तते तनुतरः। स मूलशलाकाग्रसन्धायिस्नायोः सम्भूय पूर्ववत् निविशते। तस्याः कार्य्यं पादाङ्गुष्ठस्य मध्यरेखां प्रति कर्षणम्। प्रचेष्टनी नाडी बाह्या पादतलीया नाम।

**कनिष्ठासङ्कोचनी ह्रस्वा**[३] नाम पेशी ( ६३ चित्रम् ) कनिष्ठामूलशलाकामूलात् सम्भूय पादकनिष्ठापश्चिमपर्वणो मूले सम्बद्धा। तस्याः कार्य्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाडी पूर्ववत्।

पादतले चतुर्थस्तरे तु सप्त पेश्यः शलाकान्तरीया नाम। तासु अधरास्तिस्रः, उत्तराश्चतस्रः। तत्र—

**अधराः शलाकान्तरीया**[४] नाम पादतलाभिमुख्यस्तनुपेश्यः। ताः कनिष्ठादि मूलशलाकात्रयस्य आन्तरपार्श्वेभ्यः सम्भूय तत्तदङ्गुलिपश्चिमनलकानां तत्पार्श्वेष्वेव सम्बद्धाः। तासां कार्यं कनिष्ठाद्यङ्गुलित्रयस्य मध्यरेखां प्रति कर्षणम्। प्रचेष्टनी नाडी—बाह्या पादतलीया नाम।

---

१। Flexor Hallucis Brevis. २। Adductor Hallucis. ३। Flexor Minimi Digiti Brevis. ४। Dorsal Interossei.

( ६३ चित्रम् )

## पादतले तृतीयस्तरस्थाः पेश्यः ।



**उत्तराः शलाकान्तरीया**[1] नाम पादपृष्ठाभिमुख्यस्तनुपेश्यः पञ्चानामपि मूलशलाकानामन्तरालस्थाः । तासां चतसृणामपि एकैकस्या द्वे द्वे मूले स्वपार्श्वद्वयवर्त्तिमूलशलाकयोःपार्श्वसंसक्ते । तथा च शरपुंखाकारेण प्रसृतैर्मांस-तन्तुभिरारचितास्ताः पेश्यः अग्रे कण्डरीभूय इत्थं सन्निविष्टाः । तर्जनी-पश्चिमपर्वपार्श्वयोर्द्वे । मध्यमानामिकापश्चिमपर्वणोरान्तरपार्श्वयोः एकैका इति । तासां. कार्य्यं पादाङ्गुलिचतुष्टयस्य अपकर्षणम् । प्रचेष्टनी नाडी पूर्ववत् ।

ता एता अधःशाखीयाः पेश्यः सविस्तरं व्याख्याताः ।

कर्कशं कीकसं येन
मांसलीभूय शोभते ।
वलमूलं क्रियामूलं
पेशीजालं तदीरितम् ॥

समाप्तं चैतावता पेशीखण्डम् ।

---

१ । Planter Interossei.

# प्रत्यक्षशारीरम् ।

## धमनीखण्डम् ।

### प्रथमोऽध्यायः ।

अथातो रस-रक्तसंवहनसामान्यविज्ञानीयमध्यायं व्याख्यास्यामः ।

**रक्तं** नाम सकलधातुप्रीणनः सारः शरीरस्य, रस एव रञ्जकाख्येन पित्तेन तथा विपरिणमित इत्यवोचाम । तद्भारश्च शारीरभारस्य द्वादशांशः, त्रयोदशांशो वेति केचित् । विंशांश इत्यपरे ।

तस्य च रक्तस्य पाञ्चभौतिकस्यापि द्विविधमुपादानं प्राधान्येन, आप्यं पार्थिवञ्च । तयोराप्यं जलवदच्छतरलं—लसीका[१] नाम । स्त्यानीभूतस्य रक्तस्य तु तदेव किञ्चिद्विपरिवर्त्तितं पृथग्भूतञ्च रक्तमस्तु[२] नाम । पार्थिवे पुनस्त्रिविधा विशेषाः अणुवीक्षणसहायेन चक्षुषा दृश्याः—रक्तकणिकाः,[३] श्वेतकणिकाः,[४] अणुचक्रिका[५] श्चेति । तत्र रक्तकणिकाः सूक्ष्मगुलिकाकाराः संख्यया श्वेतकणिकानां पञ्चशतगुणिताः प्रायेण, ताः लोहितवर्णाधाराः । श्वेतकणिकाः नियतपरिवर्त्तमानाकृतयस्तूलखण्डवद् भासन्ते, ताः रक्तकणिकानां संरक्षिण्यः, अनिष्टवस्तुग्रसनशीलाः । अणुचक्रिकास्तु प्रविरलसंख्याः सूक्ष्मतमाकृतयश्चिपिट-चक्रिकाकाराश्च ।

तच्च रक्तं धमनीषु जालकेषु सिरासु च क्रमेण प्रवहति हृदयं केन्द्रीकृत्य । हृदयेन हि धमनीषु विक्षिप्यते रक्तं, धमनीभिश्च जालकेषु । संगृह्यते च तत् पुनर्जालकेभ्यो हृदयेनैव सिराभिः सर्वकायगाभिः । स्यन्दते च जालकेभ्यः कोऽपि तन्वच्छभागः शोणितस्य लसीकासंज्ञः सर्वत्र शरीरे धातुपोषणाय ।

**धमन्यो**[६] नाम हृदयाद्बहिर्मुखं रक्तवहाः प्रणालिकाः । ता जीवच्छरीरे अरुणाभाः, मृतके तु पाण्डुवर्णाः, स्थूलप्राचीरिकाः, ईषत् कठिनस्पर्शाश्च । तासु

---

१ । Lymph. २ । Serum. ३ । Red Corpuscles. ४ । White Corpuscles. ५ । Blood Platelets. ६ । Arteries.

सर्वत्र उज्ज्वललोहितं रक्तं प्रवहति, अन्यत्र फुस्फुसाभिगाया धमन्यास्तच्छाखा-प्रशाखाभ्यश्च। फुस्फुसाभिगा हि धमनी सिराभिरानीतमविशुद्धं रक्तं प्राणवायु-संयोगाय फुस्फुसौ नयति स्वशाखा-प्रशाखाभिरिति विशेषः ।

**सिरा**[1] नाम हृदयाभिमुखरक्तवहाः प्रणालिकाः। ता नीलाभास्तनुप्राचीरिकाः कोमलस्पर्शाश्च। तासु सर्वत्र श्यामाभं रक्तं प्रवहति, अन्यत्र फुस्फुसीयाभ्यः सिराभ्यः। ता हि सिराः फुस्फुसविशोधितमुज्वलारुणमेव रक्तमभिवहन्ति हृदयाभिमुखमिति विशेषः।

संज्ञास्तावद्धमनीनां क्वचिदवस्थानविशेषाद्—यथा अक्षकाधरेति। क्वचित् पोषणीयावयवनामतः—यथा अनुमस्तिष्केति। क्वचिद् यदृच्छया यथा—महामातृकेति। सिरासंज्ञाश्च तादृशहेतुसमुत्थाः।

निर्म्माणं पुनर्धमनीनां सिराणाञ्च तिसृभिः प्राचीरिकाभिः। तत्र वाह्या प्राचीरिका[2] स्नायुसूत्रमयनलिकाकृतिरितरप्राचीरिकयोः सन्धारणी। मध्यप्राचीरिका[3] स्वतन्त्रपेशीतन्तुनिर्म्मितनलिकाकृतिराकुञ्चनप्रसरणशीला। आभ्यन्तरी तु प्राचीरिका[4] तनुकलामयी, सा प्राचां रक्तधरा कला नाम। सेयं स्थितिस्थापकगुणैः सूक्ष्मस्नायुसूत्रैः संवेष्टिता। तासां वाह्या मध्यमा च प्राचीरिका सिरासु तन्वी धमनीषु स्थूला, विशेषतश्च मध्यमाकृतिधमनीषु। सन्ति च मध्यमायामपि स्थितिस्थापकगुणानि स्नायुसूत्राणि प्राचुर्य्येण। दृश्यन्ते च बहिरपि सिराधमनीसंवेष्टनानि शिथिलप्रायाणि स्नायुमयानि कञ्चुकानि स्थूलसिराधमनीनां सन्धारणाय, तानि सिराकञ्चुकानि धमनीकञ्चुकानि[5] वा नाम।

लक्षणीयाश्च सिरासु विशेषेण अन्तरान्तरा रक्तमार्गे स्वयम्पतिष्णवः कपाटिकाः,[6] ता हृदयाभिमुखं प्रवर्त्तमानस्य रक्तस्य पश्चान्मुखीं गतिं रुन्धन्ति निर्म्माणकौशलेन। ताः सिराकपाटिका नाम।

**जालकानि**[7] पुनः सूक्ष्मानुसूक्ष्मसिराधमनीजालनिर्म्मितानि स्रोतांसि सर्वत्र शरीरे द्रुमपत्रप्रतानवत् प्रततानि। तानि क्रमशो विभज्यमानानां धमनीनां सूक्ष्मतमशाखाभिः सूक्ष्मतमसिराजालमिलिताभिरारचितानि रक्तधरकलामयानि।

---

१। Viens. २। External Coat or *Tunica Adventitia.* ३। Middle Coat or *Tunica Media.* ४। Internal Coat or *Tunica Intima* ५। Sheaths. ६। Valves. ७। Capilaries.

तेभ्यः कणशः स्यन्दमानः शोणितस्य कियन्मात्रस्तन्वच्छभागो लसीकाख्यः सर्वमपि शरीरमाप्याययति। अवशिष्टञ्च जालकेषु शोणितं क्रमेण शरीर-प्रचारान्मलिनीभूतं सूक्ष्मैः सिरामार्गैः स्थूलस्थूलतरसिरासु प्रविशति हृदयाभिमुख-प्रसरणाय। धातुपोषणावशिष्टा लसीका तु रसायनीमार्गैः सिरापथमेवान्ते प्रविशतीत्यग्रे वक्ष्यामः।

उक्तञ्च—"ध्मानाद्धमन्यः स्रवणात् स्रोतांसि सरणात् सिराः" इति ( चरक-सूत्र ३० अ )। अत्र ध्मानं रक्तस्य बलाद् विक्षेपणं, स्रवणं स्यन्दनं, सरणं मृदुगत्या चलनमिति प्राचामभिसन्धिः सुस्पष्टः। स्रोतःपदं चात्र जालकपरम्।

रसायन्यस्तु तद्वर्णनीयाध्याये पृथग् व्याख्येयाः।

**हृदयं**[1] पुनः रक्तस्य संग्रहणप्रेरणयन्त्रमुरोगुहास्थम्। तत् पेशीकोषमयं चतुःप्रकोष्ठञ्चेति अग्रे वक्ष्यते। तच्च प्रतिनियतसंकोचविस्फाराभ्यां विक्षिपति रक्तमाकर्षति च पृथक् प्रकोष्ठैः। तस्य दक्षिणार्द्धं सार्वकायिकं सिरारक्तमाकर्षति उत्तराऽधरमहासिराभ्याम्, प्रेरयति चाकृष्टं रक्तमधरप्रकोष्ठेन फुस्फुसयोः फुस्फुसाभिगया धमन्या, रक्तस्य वायुसंयोगेन विशोधनाय। तस्य वामार्द्धन्तु फुस्फुसविशोधितं रक्तमाकर्षति उत्तरप्रकोष्ठे फुस्फुसप्रभवेन सिराचतुष्टयेन, प्रेरयति चाकृष्टं रक्तमधरप्रकोष्ठेन सर्वत्र शारीरे महाधमनीद्वारेण। महाधमनी च क्रमेण शाखाप्रशाखाप्रविभागेन जालकेषु पर्य्यवसिता सर्वशरीरपोषणाय। जालकेभ्यश्च उपचीयमानं रक्तं सूक्ष्मसिरामार्गेषु प्रविशति, अनुपद्यते च उत्तरोत्तरस्थूलाभिः सिराभि महासिराद्वयं, तन्मार्गेण च हृदयम्। तदेतद्रक्तस्य निरन्तरगतागतं **रक्तसंवहनं**[2] नाम।

तच्च रक्तसंवहनं द्विधा विभजन्ते शारीरविदः—सामान्यकायिकं, फौस्फुसञ्चेति। तत्र सामान्यतः कायिकस्य रक्तस्य हृदये प्रवेशः, पुनर्हृदयात् सर्वकायगमनञ्चेति सामान्यतः सामान्यकायिकम्[3]। रक्तस्य हृदयदक्षिणार्द्धात् फुस्फुसगमनं, तत्र वायुकोषान् परितः स्थितेषु जालकेषु प्रसरणम्, तत्र वायु-संयोगेन विशुद्धिः, पुनर्हृदयवामार्द्धे समागमश्चेति फौस्फुसम्[4]। अनयोश्च सूक्ष्मदृष्ट्या अपृथग्भावः, परस्परापेक्षत्वात्।

---

१। Heart. २। Circulation of Blood. ३। General Circulation.
४। Pulmonary Circulation.

याकृतं[1] च रक्तसंवहनं केचिदामनन्ति पृथगेव। तद्धि रसरक्तयोर्मिश्री-भूतयोः संवहनं, सार्वकायिकस्य रक्तसंवहनस्य पोषणद्वारमित्यनुपदं वक्ष्यामः।

## अथ रससंवहनम्।

रससंवहनं द्विविधं—भुक्तरससंवहनं, लसीका-संवहनञ्चेति। तत्र—

**भुक्तरससंवहनं** पुनर्द्विविधम्। भुक्तरसस्य सौम्याग्नेयभेदेन द्वैविध्यात्। आहारो हि द्विविधः सौम्यश्चाग्नेयश्च, स तद्गुणप्राधान्याद् द्विविधं रसं जनयति। तत्र सौम्यानां दुग्धादीनां यो रसः सौम्यस्तनुमण्डाकारः, सोऽन्त्रेभ्यः सूक्ष्मैः रसस्रोतोभिराकृष्यमाणः पृष्ठवंशपुरःस्थां रसप्रपां प्रविशति, नीयते च ततो वामया रसकुल्यया गलमूलिकां सिराम्, तया चोत्तरां महासिराम्, तन्मार्गेण च हृदयम्। (तदेतत् सौम्यं रससंवहनं नाम)। अथापरो मांसाद्याहारसम्भवो यो रस आग्नेयः, स आमाशयपक्वाशयं परितः प्रसृतैः सूक्ष्मसिराभिराकृष्यमाणः प्लीहाद्यागतेन रक्तेन मिश्रीभूय यकृत् प्रविशति प्रतीहारिण्याख्यया महासिरया। यकृत्प्रविष्टश्च स विपच्यते निर्विषीक्रियते च तत्रस्थैः सूक्ष्मैः सिराजालकैर्निर्माण-कौशलविशेषात् प्रभावाच्च। ततश्चापराभिः सूक्ष्मसिराभिः संगृह्यमाणस्य तस्य याकृतीभिः सिराभिरधरमहासिरायां, ततश्च हृदये प्रवेशः—(तदेतद् आग्नेयं याकृतं वा रससंवहनं व्यख्यातम्)। एवञ्च रसरक्तयोर्मिश्रीभावाद्रसस्य रक्तपरिणामदर्शनाच्च याकृतं रक्तसंवहनं पृथगेव सामान्यरक्तसंवहनात् मन्यन्ते सूक्ष्मदृशः।

**लसीकासंवहनं**[2] तु जालकेभ्यः स्यन्दमानस्य शोणिततन्वच्छभागस्य धातुपोषणानन्तरमवशिष्टस्य लसीकास्रोतोभिः रसायनी संज्ञैः पुनरपि रक्तस्रोतसि प्रतिनिवर्त्तनम्। तच्चेत्थं संपद्यते। शिरोग्रीवदक्षिणार्द्धस्य दक्षिणबाहोश्च लसीका दक्षिणां रसकुल्यां प्रविशति, तया च दक्षिणजत्रुमूलस्थं सिरासन्धिम्, सिरापरम्परया च रक्तेन मिश्रीभूतस्य तस्य हृदये प्रवेशः। शिरोग्रीववामार्द्धस्य वामबाहोश्च लसीका वामया रसकुल्यया प्रविशति वाम-जत्रुमूलस्थं सिरासन्धिम्, सिरापरम्परया च हृदयम्। अधोजत्रुस्थस्य समग्र-शारीरभागस्य लसीका तु प्रविशति रसप्रपामेव पूर्वोक्ताम्। अन्त्रेभ्यः समागताः पयस्विन्यो[3] नाम सूक्ष्माः प्रणालिका अपि रसप्रपां प्रविष्टाः।

---

१। Portal Circulation. २। Lymph-circulation. ३। Lacteals.

एवं प्रसरन्त्याश्च लसीकाया रसायनीमार्गेषु दृश्यन्ते मार्गरक्षिभूता ग्रन्थयो गुञ्जानिम्बफलाद्याकाराः। ते ग्रीवा-कक्षा-वंक्षणादिप्रदेशेषु उदरोरसोरभ्यन्तरे पृष्ठवंशपुरस्ताच्च संलक्ष्या विशेषेण। त एते रसग्रन्थयो लसीकाग्रन्थयो वा नाम।

तदेतद् द्विविधमपि रससंवहनं रक्तसंवहनेन घनिष्ठसम्बन्धं, परिणामे तदन्तर्भूतञ्च। तस्मात् क्वचिद्रसवहस्रोतसां क्वचिद्रक्तवहस्रोतसाञ्च हृदयमेव मूलमुपदिशन्ति प्राञ्चः। रसपदं हि रक्तार्थपरं बहुधा प्राचां वचनेषु।

गर्भस्थशिशो रक्तसंवहनं तु उरोहृदयवर्णनीयाध्याये वक्ष्यामः।

तदेतद् रस-रक्तसंवहनसामान्यविज्ञानमभिहितं बीजरूपेण। विस्तरोऽत ऊर्ध्वम्।

---

# द्वितीयोऽध्यायः।

अथात उरोहृदयवर्णनीयमध्यायं व्याख्यास्यामः।

उरःपञ्जरमुरोगुहाया आधारभूतं व्याख्यातपूर्वम्, तस्य च आभ्यन्तरायतनं न सर्वथा बाह्यायतनमनुसरति। न्युब्जपृष्ठेन महाप्राचीराविनिर्म्मितेन तदीय-तलदेशेन तदधोभागस्य ह्रस्वीभावात्, फुस्फुसशिखरयोरागलमूलं प्रसृतत्वाच्च। नियतपरिवृत्तिशीलञ्च तद् उच्छ्वासनिःश्वासकालयोः, महाप्राचीरायाः पर्शुकोप-पर्शुकानाञ्च प्रतिनियतमूर्द्धाधःप्रचलनशीलत्वात्।

तस्याञ्च उरोगुहायां चतुष्टयं प्रधानम्—मध्ये हृदयम् महा-धमन्यादिसहितम्, उभयतश्च फुस्फुसौ क्लोम[1]नलिकासहितौ, अन्ननलिका च पृष्ठतः।

फुस्फुसान्तरालं[2] नाम—उरःफलकपृष्ठात् पृष्ठवंशपुरोभागं यावदुप-लक्षितोऽवकाशः तं वर्णनासौकर्य्याय चतुर्धा विभजन्ते शारीरविदः (कल्प-नामात्रेण)। तत्रादौ द्वेधा विभागः, उत्तराऽधरप्रदेशभेदात्। ततः अधरस्य

---

१। क्लोमपदं सर्वत्र श्वासमार्गपरं प्राचां वचनेषु। दृश्यतामुपोद्घातः (पृ० ६८)।

२। Mediastinum.

१२

फुस्फुसान्तरालस्य अग्रिम-मध्यम-पश्चिमाख्यप्रदेशेषु पुनस्त्रिधा विभागः। एवं चेह वर्ण्यन्ते—उत्तरम्, अधराग्रिमं, अधरमध्यमं, अधरपश्चिमञ्चेति चत्वारि फुस्फुसान्तरालानि।

तत्र उत्तरे फुस्फुसान्तराले दृश्याः—प्रधानशाखात्रयेण सहिता तोरणी महाधमनी, उत्तरमहासिराया उत्तरार्द्धम्, गलमूलिकाख्ये सिरे, प्राणदाख्ये नाड्यौ, अनुकोष्ठिकाख्ये नाड्यौ, क्लोमनलिका, अन्ननलिका, रसकुल्या, बालग्रैवेयका[१]ख्यग्रन्थेरवशेषः, लसीकाग्रन्थयः, अपराश्च पेशीनाड्यादयो विशेषाः।

अधराग्रिमं फुस्फुसान्तरालं पुनः उरःफलकपृष्ठात् हृत्कोषपुरोभागान्तं स्थानम्। तत्र दृश्याः—अन्तस्तलिकाख्ये धमन्यौ, उरःस्था लसीकाग्रन्थयः, उरस्त्रिकोणिका नाम पेशी च।

अधरमध्यमे फुस्फुसान्तराले तु हृत्कोषप्रावृतं हृदयम्, आरोहिणी महाधमनी, उत्तरमहासिराया अधरार्द्धम्, श्वासनालस्य विभागकाण्डद्वयम्, फुस्फुसाभिगा धमनी ( द्विधाविभक्ता ), फुस्फुसीयाः सिराः, अनुकोष्ठिके नाड्यौ, उरोमध्यस्था लसीकाग्रन्थयश्च।

अधरपश्चिमे फुस्फुसान्तराले पुनर्दृश्याः—अवरोहिणी महाधमनी, अन्ननलिका, रसकुल्या, पुरोवंशिकाख्ये सिरे, प्राणदाख्ये नाड्यौ, ईडापिङ्गलाख्यमहानाड्योरौरस्यभागौ, लसीकाग्रन्थयश्च पश्चिमोरस्काः।

अथाऽस्या उरोगुहाया ऊर्द्ध्वद्वारे दृश्यन्ते मध्यरेखायां—पेशीपरिवृतो बालग्रैवेयकग्रन्थिशेषः, क्लोमनलिका, अन्ननलिका च पूर्वापरक्रमेण। तदुभयतश्च स्थूले महामातृकाख्ये धमन्यौ, गलमूलिकाख्ये सिरे, प्राणदाख्ये नाड्यौ, इडापिङ्गलाख्ये महानाड्यौ, रसकुल्या, काश्चिद् ग्रीवावंशपुरःस्थाः पेश्यश्च। तत्पार्श्वयोश्च समुत्थिते फुस्फुसयोः शिखरे फुस्फुसधरया कलया परिवृते, फुस्फुसशीर्षण्याख्य गम्भीरप्रावरण्या च प्रावृते।

सेयमुरोगुहा फुस्फुसधरायाः कलायाः परिसरीयभागेन अन्तःपरिवृता। साऽसौ कला यथास्थानं वर्णनीया। उरोगुहातलं च महाप्राचीराख्यपेश्या निर्मितं, छिद्रत्रयोपलक्षितं, तयैव कलया प्रावृतञ्च। तद्विवरणं महाप्राचीरावर्णने सविस्तरमवोचाम।

---

१। Thymus Gland.

अथ हृत्कोषः ।

**हृदयं** तावत् उरःफलकस्य पश्चाद्वामतश्च भूम्ना वर्तते अधर-मध्यम-फुस्फुसान्तरालस्थम् । प्रावृतं च तत् स्थूलसिरा-धमनीमूलनिवहसहितं हृदय-धराख्येन कलाकोषेण ।

**हृदयधरः कलाकोषः**, पुनः **हृत्कोष**—इतिसंज्ञः अतनुस्तरद्वयेन निर्मितश्च । तस्य बाह्यस्तरं दृढस्नायुमयं शिथिलं च, तद् न संसक्तं हृदयेन । संसक्तन्तु तत् उत्तरमहासिरावर्जमन्यासां स्थूलसिराधमनीनां मूलेषु, प्रतिबद्धञ्चोपरिष्टात् ग्रीवामध्यकञ्चुकस्य पुरोभागेन । अधस्ताच्च सम्बद्धस्तस्य तलभागो महाप्रचीराया मध्यपत्रकेण । तस्य आभ्यन्तरस्तरं तनुमसृणकलामयम् । तत् साक्षाद् हृदयेन संसक्तमेकतः, बाह्यस्तरैकदेशेन मिलितं च सीमासु । स्तरद्वयान्तराले च स्वभावतो वर्त्तते स्वल्पमात्रा लसीका, तया च अभ्यक्तं हृदयं नियतमुद्रणविस्फारशीलमपि स्वकोषस्पर्शतो नावघृष्यते । सैव लसीका प्रवृद्धा स्त्यानीभूता च रोगाय कल्पते । तदा हृदि सुमहत् कष्टं, क्रियाप्रतिबन्धश्च । अमुष्य च कलाकोषस्य पोषणम् अन्तःस्तलिकायाः धमन्या महाधमन्याश्च तनुशाखाभिः सम्पद्यते । तत्संज्ञावहा नाड्यस्तु प्राणदाख्ययोः, अनुकोष्ठिकयोः, ईडापिङ्गलयोश्च सूक्ष्माः शाखाः ।

अथ हृदयम् ।

**हृदयं** नाम स्वतन्त्रपेशीनिर्मितं शून्योदरं यन्त्रम् । ( ६४ चित्रम् ) तद् अधोमुखबृहत्पद्ममुकुलाकारं, मध्यमाधरे फुस्फुसान्तराले पुरस्ताद्वाम-तस्तिर्य्यगवस्थितम्, हृदयधराख्येन कलाकोषेण प्रावृतं च । तस्य मूलदेशः दक्षिणतृतीयोपपर्शुकाया उरःफलकसन्धानादारभ्य वामद्वितीयोपपर्शुकाया उरः-फलकसन्धानोपकण्ठं यावद्विस्तृतः । अग्रं तु तस्य वामतः पञ्चम-षष्ठपर्शुकयोरन्तराले मध्यरेखाया बहिश्चतुरङ्गुलाद् दृश्यते, स्पर्शेनानुभूयते च नियतमाहन्यमानम् ।

गुरुत्वपरिमाणं तावद् यूनो हृदयस्य पञ्चविंशतितोलकेभ्य आरभ्य त्रिंशत्तोलकान्तं मानतः । स्त्रियास्तु हृदयं लघुतरं, प्रायेण विंशतितोलकं

किञ्चिदधिकं वा। दैर्घ्य-प्रस्थ-वेधास्तु हृदयस्य क्रमेण षडङ्गुल-चतुरङ्गुल-त्र्यङ्गुल प्रमाणाः प्रायः। Length-Breadth-Depth

तच्च हृदयं मध्यवर्त्तिना अनुदैर्घ्यमवस्थितेन मांसमयान्तःप्राचीरकेण द्विधाविभक्तं, दक्षिणार्द्धं वामार्द्धं च। तत्र दक्षिणार्द्धं भूम्ना पुरस्ताद वर्त्तते, वामार्द्धन्तु पृष्ठतः। एकैकं चार्द्धं पुनर्विभज्यते अनुप्रस्थमभ्यन्तरस्थितेन सच्छिद्रेण प्राचीरकेण उत्तराधरप्रकोष्ठयोः। तत्र उत्तरप्रकोष्ठस्य अलिन्द[1] इति संज्ञा, अधरप्रकोष्ठस्य निलय[2] इति। तथा च दक्षिणालिन्दो, दक्षिण-निलयः, वामालिन्दो, वामनिलयश्चेति हृदयस्य चत्वारो भागाः।

वहिर्देशस्तावद् हृदयस्य हृत्कोषीयतनुकलावृत इत्युक्तपूर्वम्। तत्र च अनुदैर्घ्यं वहिर्दृश्ये निलययोर्मध्यस्थे अगम्भीरे सीते पुरः पश्चाच्च, ते अधिनि-लयिके नाम। ताभ्यां वहिर्देशतोऽपि निलयद्वयाभ्यन्तरस्थं प्राचीरमुन्नीयते। अपरे च तत्र अनुप्रस्थं गते सीते अलिन्दनिलययोर्विभागं सूचयतः पुरः पश्चाच्च। ते अलिन्दनिलयान्तरिके नाम। तत्र अधिनिलयिके सीते संश्रित्य प्रसृते वामदक्षिणे हार्दिकसंज्ञे धमन्यौ हार्दिकसिरासहिते। अपरयोः सीतयोरन्तरालेषु तु प्रसृतास्तच्छाखाः।

इमे चात्र विशेषा आदावेव संलक्ष्याः। (६४ चित्रम्)

दक्षिणालिन्दे—ऊर्द्ध्वसंसक्ता उत्तरा महासिरा, अधःसंसक्ता च अधरा महासिरा। दक्षिणनिलयादूर्द्ध्वं प्रसृता फुस्फुसाभिगा धमनी। वामालिन्दे प्रविष्टाश्चतस्रः सिराः फुस्फुसप्रभवाः। वामनिलयादूर्द्ध्वं प्रसृता महाधमनी।

आसां च सिराधमनीनां मध्ये हृदयस्य वहिर्देशे पुरोदृश्या दक्षिणतो महाधमनी, वामतश्च फुस्फुसाभिगा धमनी। तयोराद्या अपरां क्रोडीकृत्य स्थिता स्वकीय तोरणभागेन। पश्चिमतो दृश्याः पुनः—उत्तराधरे महासिरे, चतस्रश्च फुस्फुसप्रभवाः सिराः हृदयं प्रविशन्त्यः।

सर्वे च ते हृदयाभ्यन्तरीया विशेषाः सम्यग् व्यवच्छेदेन दृश्याः। हृत्तल्पश्च हृदभ्यन्तरभागो हृदन्तरीयाख्यया सुसूक्ष्मया रक्तधरकलया प्रावृतः। सा च सिराधमनीनामभ्यन्तरस्थायाः रक्तधरकलाया हृदभ्यन्तरेऽनुवृत्तिरूपा।

---

१। अलिन्दः = Auricle. २। निलयः = Ventricle.

[ ६४ चित्रम् ]

## हृदयम्।

( महासिरा-धमन्यादि सहितम् )




क—क्लोमनलिका ( श्वासमार्गः )। ख—तस्या एव विभागस्थानम्। ग—ग्रैवेयक ग्रन्थिः।

[ To face page 90 ]

अथ विस्तरः ।

**दक्षिणालिन्दः**[१] तनुमांसलप्राचीरो वामालिन्दात् किञ्चिदधिकायतनः । तदन्तःस्था गुहा प्रायेण पञ्चतोलकप्रमाणं रक्तं धारयति । तस्य च द्वौ भागौ— अलिन्दशीर्षकम्, अलिन्दोदरञ्च । तत्र आद्यमुपरिष्टादवस्थितं कङ्कतिकाख्य-क्षुद्रपेशीगुच्छेन दृढीकृतं च । अलिन्दोदरन्तु हृदयप्रवेशिनः सिरारक्तस्य आयतनम् । तत्र च ऊर्द्धाधो दृश्ये विशाले च्छिद्रे उत्तराधरमहासिरयोर्द्वारभूते । ते उत्तराधरे महासिराच्छिद्रे नाम । तत्र अधरमहासिराच्छिद्रमुखे दृश्यं स्वयंपतिष्णु सिराकपाटं, तद् गर्भस्थशिशो विशेषेण कार्यकरम् । अनयोश्च छिद्रयोर्मध्यतः अलिन्दान्तरीयप्राचीरके क्षुद्रशुक्तिकाकारं खातम्, शुक्तिखातं नाम । तद् गर्भस्थस्य शिशोः अलिन्दद्वयान्तराले छिद्रभूतमवतिष्ठते, प्रसूतस्य च तस्य दशभिर्दिनैरवरुध्यते । क्वचिदनवरुद्धं च तद्विशुद्धाऽविशुद्धरक्तयोर्मिश्रीभावाद्रोगकरं भवति आ बाल्यात् ।

अस्य च शुक्तिखातस्य वामतो दृश्यं हार्दिकं नाम सिराविवरं, तद् हार्दिक्याः सिरायाः द्वारभूतम् । ( हार्दिकी हि सिरा हृदभितः स्थिताभिः सिरभिरापूरिता दक्षिणालिन्दमेव प्रविशति । ) तत्र च क्षुद्रासिराकपाटिका हार्दिकसिरारक्तस्य प्रतिनिवर्त्तनवारिणी । अपरञ्चेह दक्षिणालिन्दनिलययोर्मध्यस्थं महाद्वारम्, दक्षिणालिन्दद्वारं नाम । तद् वृत्तप्रायं द्व्यङ्गुलायतं, प्रतनुस्नायुचक्ररक्षितं, त्रिपत्रकेण कपाटकेन युक्तं च ।

**दक्षिणनिलयः**[२] त्रिकोणप्रायस्तनुप्राचीरको दक्षिणालिन्दद्वाराद् हृदग्रोपकण्ठं यावदायतश्च । तस्य पुरःप्राचीरं किंचित् न्युब्जपृष्ठं हृदयस्य पुरोभागनिष्पादकम्, तलदेशो महाप्राचीरोपरिस्थः । तस्य गुहा प्रायेन सार्द्धसप्ततोलकरक्तधारणक्षमा । तत्रैतानि लक्षणीयानि—

त्रिपत्रकपाटम्[३]—त्रिभिः स्वयंपतिष्णुभिः पत्रकैरारचितम् । तच्च पत्रकत्रयम् अलिन्दतो निलयाभिमुखं प्रसरद्रक्तं नावरुणद्धि, रुणद्धि तु पराङ् मुखीं गतिं रक्तस्येति विचित्रं तस्य निर्म्माणकौशलम् । तानि च पत्रकाणि त्रिकोणप्रायाणि ऊर्द्धमुखैर्मूलभागैरलिन्दद्वारं परितः संसक्तानि । तदग्राणि तु

१ । Right Auricle. २ । Right Ventricle. ३ । Tricuspid Valve.

अधोमुखानि धार्य्यन्ते निलयप्राचीरलग्नाभिर्मांसमयीभिः स्तम्भिकाभिः प्रतनुस्नायु-रज्जुकासहिताभिः। ताश्च स्तम्भिकाः कपाटस्तम्भिका[१] नाम क्षुद्रपेश्यः, प्रतनुस्नायुतन्तुभिः कपाटपत्रकेषु सम्बद्धाः। ताश्च स्नायुतन्तवः सूत्रकण्डरिका[२] नाम।

फुस्फुसधमनीद्वारम्[३] दक्षिणनिलयस्य ऊर्द्धान्तःकोणस्थं वृत्तप्रायं स्नायुचक्ररक्षितं च। तदवरोधाय च तिस्रः अर्द्धचन्द्राकाराः स्वयंपतिष्णवः कपाटिकाः परस्परसंसक्ता ऊर्द्ध कोरोदराश्च। ताः फुफुसाभिगायां धमन्यां दक्षिणनिलयादूर्द्धं प्रवर्त्तमानं रक्तं नावरुन्धन्ति, रुन्धन्ति तु रक्तस्य पराङ्मुखीं गतिमित्यहो निर्माणकौशलं तासाम्। ता एता अर्द्धेन्दु-कपाटिका[४] नाम।

**वामालिन्दः**[५] दक्षिणालिन्दात् स्तोकेनाल्पायतनः किन्तु विशेषेण स्थूलप्राचीरकः। तस्य गुहा प्रायेण पञ्चतोलकरक्तधारणक्षमा। तस्यापि द्वौ भागौ—अलिन्दशीर्षकं, अलिन्दोदरञ्चेति। तत्र अलिन्दोदरे द्रश्यानि चत्वारि छिद्राणि, द्वे दक्षिणतो द्वे च वामतः, तानि फुस्फुसोत्थ-सिरा[६]-चतुष्टयस्य प्रवेश-द्वाराणि। अधश्चास्य द्वारं वामालिन्द-निलययोर्मध्यस्थम्, द्व्यङ्गुलायतम्, स्नायुचक्रवेष्टितं द्विपत्रकपाटयुक्तं च। तद् वामालिन्दद्वारं नाम।

**वामनिलयः**[७] त्रिकोणाकारः दक्षिणालिन्दात् त्रिगुणस्थूलप्राचीरकः वामालिन्दद्वाराद् हृदयाग्रं यावदायतश्च। तस्य गुहाऽपि सार्द्धसप्ततोलक-रक्तधारणक्षमा। तत् पश्चिमप्राचीरञ्चाधस्ताद् हृदयाग्रनिर्मापकम्। तत्र च द्रश्या इमे विशेषा :—

द्विपत्रकपाट[८] नाम स्वयंपतिष्णुना पत्रकद्वयेन निर्म्मितं कपाट-मलिन्दद्वाररोधनम्। तत् कार्य्यञ्च त्रिपत्रकपटवत्।

महाधमनीद्वारम्[९] वामनिलयस्य ऊर्द्धान्तःकोणस्थं फुस्फुसाभिग-धमनी-द्वारेण तुल्यायतनम्, तिसृभिः अर्द्धेन्दुकपाटिकाभिरवरुद्धं च। महाधमनी

---

१। Musculæ Papillares. २। Chordæ Tendinæ. ३। Opening of Pulmonary Artery. ४। Semilunar Valves. ५। Left Auricle. ६। Pulmonary Veins. ७। Left Ventricle. ८। Bicuspid or Mitral Valve. ९। Arotic Opening.

च पुरस्तात् तिर्य्यग्वक्रेति तदेतद्द्वारमपि फुस्फुसाभिगधमनीपृष्ठमुल्लङ्घ्य तिर्य्यक्पुरोऽभिमुखं वर्त्तते इति विशेषः । तदेतद् हृदयनिर्म्माणं व्याख्यातम् ।

## अथ हृत्कार्य्यचक्रम् ।

रक्तसंवहनं हि हृत्कार्य्यापेक्षं व्याख्यातपूर्वम् । हृत्कार्य्यञ्चेह स्पष्टतरं व्याख्यायते शिष्यबुद्धिवैशद्याय । तत्र हृत्पेश्याः संकोचः सिराद्वारेभ्य आरभ्य क्रमेण समग्रयोरलिन्दयोस्ततश्च निलययोः प्रवर्त्तते । तेनादौ अलिन्दयोः संकोचेन दक्षिणालिन्दस्थं कायिकसिरारक्तं दक्षिणनिलयं प्रति, वामालिन्दस्थं फौस्फुससिरारक्तं च वामनिलयं प्रति प्रणुद्यते युगपदेव । तदा च सिराद्वाराणि कपाटरहितान्यपि दृढाकुञ्चनमात्रेण पिहितानि भवन्ति, अलिन्दद्वारद्वयं च सर्वथा उन्मुच्यते, कपाटपत्रकाणमधःपतनात् । एवमापूर्य्यते निलयद्वयं रक्तेन । सोऽयं प्रथमः कार्यक्रमः । अथ क्रमेण निलययोः प्रसर्पति संकोचे दक्षिणनिलयस्थं रक्तं फुस्फुसाभिगधमनीपथेन, वामनिलयगतं च रक्तं महाधमनीपथेनोर्द्ध्वं प्रणुद्यते । न च तत् प्रतिनिवर्त्तते अलिन्दद्वाराभ्याम्, रक्तवेगात् स्वयमुत्पतिष्णुभिः कपाटपत्रकैस्तद्द्वारयोरवरोधात् । सोऽयं द्वितीयः कार्यक्रमः । अथ क्रमेण व्यपगच्छति संकोचे हृत्पेश्याः विस्फारणं प्रवर्त्तते पुनरलिन्दाभ्यामेव । तदा चाकृष्यते सिरारक्तमुभयोरलिन्दयोः, ततश्च निलययोरपि प्रसृतावस्थयोः । न तु पुनस्तदा प्रतिनिवर्त्तते रक्तम् निलयाभ्यां महाधमन्यां फुस्फुसाभिगधमन्यां वा, धमनीस्थरक्तप्रतिघातेन अधःपतिष्णूनां अर्द्धेन्दुकपाटिकानां क्रियया तद्-द्वारयोरवरोधात् । सोऽयं तृतीयः कार्य्यक्रमः, विश्रामावस्था वा हृत्पेश्याः । एवं च आद्यकार्य्यक्रमयोः संकुचितावस्था, शेषे तु विस्फारितावस्था हृदयस्य स्मर्त्तव्या । तत्र संकोचकालो विपलमात्रं, विस्फारकालश्च तावदेव । तेन विपल-द्वयेन एकैकं हृत्कार्य्यचक्रं प्रवर्त्तते स्वभावेन इति परीक्षकाणां सिद्धान्तः । एष च कार्य्यकालो बाल-वृद्ध-श्रान्त-ज्वरितादिषु त्वरितो विलम्बितो वा भवति । इदं चास्य हृत्कार्य्यचक्रस्य सुखस्मरणाय संग्रहश्लोकद्वयम्—

आदावलिन्दसंकोचो निलयद्वयपूरणः ।
ततो निलयसंकोचो धमनीद्वयपूरणः ॥
शेषे तु स्फारता, तेन सिराभिः पूर्य्यते हि हृत् ।
क्रियाचक्रस्य कालश्च प्रायः स्याद्विपलद्वयम् ॥

### अथ हृत्कार्य्यचक्रस्य बाह्यचिह्नानि ।

त्रिविधानि खलु संभवन्ति चिह्नानि हृदयकार्य्यस्य बहिःशरीरे। हृच्छब्दः, हृत्प्रतीघातः, धमनीप्रतीघातश्चेति। तत्र—

**हृच्छब्दः**[१]—हृत्प्रदेशे पुरस्तादाकर्णनेन स्पष्टं श्रूयते—धग् टग् इति ध्वनिद्वयात्मकः। तत्र आद्यो धगिति मन्द्रध्वनिः निलयद्वयसंकोचे प्रवर्त्तमाने द्विपत्र-त्रिपत्राख्य कपाटद्वयेन अलिन्दद्वारयोर्युगपदवरोधनं सूचयति। द्वितीयस्तु टगिति तीव्रध्वनिः निलययोर्विस्फारारम्भे अर्द्धेन्दुकपाटिका-भिर्धमनीद्वारयोर्युगपदवरोधनं लक्षयति। विशेषतश्च त्रिपत्रकपाटावरोधध्वनिः उरःफलकस्य अग्रपत्रसन्धाने स्फुटतमं श्रूयते। द्विपत्रकपाटावरोध-ध्वनिस्तु वामचूचुकाधः पञ्चमपर्शुकान्तराले। अर्द्धेन्दुकपाटिकाभिः महाधमनी-द्वारावरोधस्य ध्वनिः पुनः उरःफलकस्य दक्षिणतः द्वितीयपर्शुकोपपर्शुकयोः-सन्धानदेशे स्फुटतमः। फुस्फुसाभिगधमन्या द्वारावरोधध्वनिस्तु तादृश एव देशे वामतः।

**हृत्प्रतीघातः**[२] हृदग्रप्रतीघातो वा—दृश्यते, स्पर्शेनानुभूयते च अस्थूल-पुरुषोरसि पञ्चमषष्ठपर्शुकान्तराले वामचूचुकानुलम्बरेखाया अन्तःसीम्नि द्व्यङ्गुल-मात्रेण सार्द्धाङ्गुलेन वा। तदेतत् स्वाभाविकं स्थानं हृत्प्रतीघातस्य, तत् स्थानच्युतिस्तु रोगलिङ्गम्। हृत्प्रतीघातश्च प्राप्तसंकोचस्य हृदयस्य धमनीमूलं प्रति प्रचलनेन हृदग्रस्य किञ्चित् पुरोविवर्त्तनात् सम्पद्यते—इति परीक्षकाः।

**धमनीप्रतीघातः**[३] पुनः स्पर्शसंवेद्यः (क्वचिद् दृश्योपि) सर्वत्र धमनीषु, विशेषतश्च मणिबन्धादिस्थानेषु। अङ्गुष्ठमूलादिषु तु विशेषेण अनुभवयोग्योऽसौ। तेनात्र—"धमनी जीवसाक्षिणी"—भवति। तत्प्रतीघातवैचित्र्य-विशेषानुभवाच्च हृत्कार्य्यविज्ञानं वातादिदोषविज्ञानं च संपादयन्ति भिषजः।

तदेतत् सविज्ञानं हृत्कार्य्यचक्रं[४] व्याख्यातम्।

---

१। Heart-Sound. २। Heart-beat or Cardiac Impulse. ३। Pulse-beat. ४। Cardiac Cycle.

[ ९५ चित्रम् ]

# गर्भस्थबालस्य रक्तसंवहनम् ।




( To face page 95 )

## अथ गर्भस्थबालकस्य रक्तसंवहनम्[१] ।

इतरविलक्षणं खल्विह रक्तसंवहनं गर्भस्थे बाले ( ९५ चित्रम् ), तस्य मातृपरतन्त्रत्वात्, गर्भस्थदशायां हृदयादिनिर्म्माणवैलक्षण्याच्च । नह्यसौ स्वयमाहारमादत्ते श्वासानिलं वा, मातुरेवाहाररसेन नाभिनालमाश्रित्य तच्छरीरप्रवेशिना तत्तत्कार्य्यसाधनात् । आहुश्च प्राञ्चः—"मातृजं चास्य हृदयं, मातृहृदयेनाभिसम्बद्धं रसवाहिनीभिः संवाहिनीभिः"—इति । "नाभ्यां ह्यस्य नाडी प्रसक्ता, नाडयाञ्चामरा । अमरा चास्य मातुः प्रसक्ता हृदये । मातृहृदयं ह्यस्यताममरामभिसंप्लवन्ते सिराभिः स्पन्दमानाभिः"—इति । ( च० ) तदेतन्मातृपरतन्त्रत्वम् रक्तसंवहनस्य ।

निर्म्माणवैलक्षण्यं पुनरीदृशं तस्य पञ्चभिर्विशेषैः । यथा—

**संवाहिनी** ( ९५ चित्रम् ) नाम **महासिरा**[२] मातुरमरातो रक्तमभिवहन्ती बालस्य नाभिमार्गेण यकृत्तलदेशे प्रसृता । सा द्वाभ्यां शाखाभ्यां यकृत्पिण्डद्वयं पुष्णाति । अग्रे च प्रसृत्य द्वयोरग्रशाखयोर्विभज्यते ।

तयोश्चाग्रशाखयोरेका **सेतुसिरा**[३] संज्ञा, सा सेतुवद् योजयति संवाहिनीं महासिरामधरया महासिरया । अपराधनुर्वक्रा "प्रतीहारिणी" संज्ञया याकृतस्थूलसिरया मिलिता याकृतं रक्तसंवहनं साधयति ।

**सेतुधमनी**[४] नाम धमनी फुस्फुसाभिगां धमनीं महाधमन्या योजयति उभयोर्मध्यस्था ।

**संवाहिन्यौ**[५] नाम **धमन्यौ** भ्रूणस्य आभ्यन्तराभ्यामधिश्रोणिकाख्यधमनीभ्यां निर्गत्य वस्तिमुभयतः प्रसृत्य नाभिमार्गेण निर्गते । ते भ्रूणस्य नाभिनालमाश्रित्य मातुरमरायां रक्तमभिवहतः । प्रसूतस्य तु बालस्याचिरेण शुष्कप्राये ते "वस्तिरज्जुका"संज्ञे भवतः ।

**शुक्तिछिद्रं**[६] नाम विवरं गर्भस्थशिशोर्हृदयस्य अलिन्दद्वयान्तरस्थप्राचीरे दृश्यते । अधरमहासिरानीतस्य रक्तस्य दक्षिणालिन्दाद् वामालिन्दगमनं सम्पद्यते तेन मार्गेण ।

---

१ । Foetal Circulation. २ । Umbilical Vein. ३ । Ductus Venosus. ४ । Ductus Arteriosus. ५ । Hypogastric Arteries. ६ । Foramen Ovale.

ता एताः सिरा धमन्यश्च प्रसूतस्य बालकस्य पञ्चभिर्दिनैरवरुध्यन्ते, तिष्ठन्ति च ततः परं नीरन्ध्रसूत्राकाराः शरीरे। शुक्तिछिद्रस्य तु दशभिर्दिनैर्विलोपः, तच्चिह्नञ्च शुक्तिखातमूक्तपूर्वम्।

कदाचित्तु कस्यचिद् विलुप्तं शुक्तिछिद्रमाबाल्याद् हृद्रोगकरं सम्पद्यते, अलिन्दयोः शुद्धाशुद्धरक्तमिश्रणात्।

रक्तसंवहनप्रकारश्च गर्भस्थबालस्येदृशः। तस्य हि मातुरमरातः समागतं रक्तं नाभिनालपथेन प्रविशति शरीरं संवाहिन्या महासिरया। सा च महासिरा पूर्वोक्तदिशा स्वशाखाभि र्यकृत् पुष्णन्ती सेतुसिरया अधरायां महासिरायां मिलिता। तथा च तद्रक्तं सिरारक्तेन मिश्रीभूतमूर्द्धं प्रवर्त्तते अधरमहासिरया हृदयाभिमुखम्। ततो हृदयस्य दक्षिणालिन्दे प्रविष्टं तत् ततो दक्षिणनिलयमगत्वैव शुक्तिछिद्रमार्गेण प्रसरति वामालिन्दे, ततश्च वामनिलये, ततश्च महाधमन्यामित्याद्यः क्रमः। अथ ऊर्द्ध्वकायात् प्रत्यागतं उत्तर-महासिरागतं रक्तं दक्षिणालिन्दे प्रविशति, ततश्च दक्षिणनिलयमेव, पूर्वोक्तं रक्तस्रोत उल्लङ्घ्य—इति विचित्रं निर्माणकौशलं विधातुः। दक्षिणनिलयतश्च फुस्फुसाभिगां धमनीं प्रविश्य तद्रक्तं स्वल्पेन भागेन फुस्फुसद्वयं पुष्णाति (न तु तत्र विशोध्यते, फुस्फुसयोस्तदा निष्क्रियत्वात्), अधिकेन तु भागेन सेतुधमनी-द्वारेण प्रविशति महाधमनीमेव। फुस्फुसाभ्यामागतं च रक्तं साधारणक्रमेण प्रविशति वामालिन्दं फुस्फुसप्रभवाभिः सिराभिः, ततश्च वामनिलयं, ततश्च महाधमनीम्। सोऽयं द्वितीयः क्रमः। अथ महाधमनीरक्तं सर्वत्र शरीरे साधारणक्रमेण प्रसरति स्वशाखाभिः, प्रतिनिवर्त्तते च उत्तराधराभ्यां महासिराभ्याम्। परमस्य विशेषस्तु भूयिष्ठो भागः संवाहिनीभ्यां धमनीभ्यां नाभिनालमार्गेण प्रविशति मातुरमरामेव—इति तृतीयः क्रमः।

सैषा गर्भस्थबालस्य रक्तसंवहनशैली व्याख्याता।

---

# तृतीयोऽध्यायः।

अथातो मूलधमनीवर्णनीयमध्यायं व्याख्यास्यामः।

सर्वासां हि धमनीनां मूलं हृदयमुक्तपूर्वम्। ततश्च निर्गते द्वे धमन्यौ प्रधानभूते—फुस्फुसाभिगा धमनी, महाधमनी चेति। तयोराद्या फौस्फुसरक्त-संवहनस्य मूलम्, अन्त्या तु सामान्यकायिकरक्तसंवहनस्य।

तत्र **फुस्फुसाभिगा**[१] नाम एकैव अविशुद्धरक्तप्रवहा धमनी शरीरे। सा हृदयस्य दक्षिणनिलयात् सम्भूता पञ्चाङ्गुलपरिणाहा त्र्यङ्गुलमात्रदीर्घा च। दृश्यते चासौ हृन्मूले वामतो महाधमन्याः, आच्छाद्यते च हृदयधरेण कलाकोषेण। महाधमन्यास्तोरणोत्सङ्गे प्रविष्टायाश्च तस्या दक्षिणवामयोः फुस्फुसाभिगयोर्महाशाखयोर्विभागः। ते च महाशाखे नानाविधशाखा-प्रशाखाऽनु-शाखासु विभज्येते फुस्फुसद्वयान्तः। तासां चरमाः सूक्ष्मशाखाः फुस्फुसीयवायु-कोषानभितो जालकाकारेण प्रसृताः।

**महाधमनी**[२] नाम विशुद्धरक्तप्रवहा मूलधमनी शरीरे। सा हृदयस्य वामनिलयात् सम्भूता, मूले पञ्चाङ्गुलपरिणाहा शेषे तदर्द्धपरिणाहा, प्रायेण स्वहस्त-प्रमाणदीर्घा च। दृश्यते चासौ हृन्मूले दक्षिणतः, पुरश्च फुस्फुसाभिगाया धमन्याः, आच्छाद्यते च मूलभागे हृदयधराख्येन कलाकोषेण सिराधमनीकञ्चुकै-र्मिलितेन। सेयमधोमुखमरालग्रीवावद् वक्रीभूय पृष्ठवंशाभिमुखं गत्वा तत् पुरस्ताद् वामपार्श्वानुक्रमेण अधःप्रसृता चतुर्थकटिकशेरुकापुरस्ताद् द्वयोर्महाशाखयो-र्विभज्यते। तस्याश्च तथाविधाया स्त्रयो भागाः कल्प्यन्ते वर्णनसौकर्य्याय— आरोहिभागः, तोरणभागः, अवरोहिभागश्चेति। तेषामारोहिणी, तोरणी, अवरोहिणी चेति संज्ञाः लाघवार्थमुद्दिष्टाः।

अथ महाधमन्याः शाखाप्रविभागस्त्वीदृशः।

महाधमन्याः, तदन्तिममहाशाखयोः, काण्डमूलाख्यधमन्याश्च काण्डोत्थिताः शाखाः काण्डशाखा नाम। तासां शाखाः केवलं शाखाशब्देन व्यपदिश्यन्ते। तच्छाखानां प्रशाखेति संज्ञा, तच्छाखानाञ्च अनुशाखेति। ततः परं धमनीप्रतानाः जालकानि च सर्वकायगतानि।

---

१। Pulmonary Artery. २। Aorta.

यदा पुनः काचित् काण्डशाखा अन्ते द्वेधा विभज्यते, तदा विभागद्वयस्य अग्रशाखेति संज्ञा। एवं शाखायाश्चरमप्रशाखे अग्रप्रशाखे नाम। यदा तावत् काचित् काण्डशाखा शाखा वा अक्षशाखाणां त्रिचतुराणां धमनीनां मूलभूता, तदासौ अक्षशाखा नाम।

धमनीचक्राणि नाम धमनीनां शाखाप्रशाखाभिः परस्परानुप्रविष्टाभिरारचितानि चक्रानि। तानि च सन्धीनाशयान् इन्द्रियाधिष्ठानादीनि च विशेषादभिव्याप्य तिष्ठन्ति। एवं च सत्यपि कस्याश्चिद् धमन्याः अवरोधे नावरुध्यते रक्तसंवहनं तत्तद्देशेषु, न च शीर्य्यन्ते प्रकुथ्यन्ते वा तद्देशस्था विशेषाः, तद्देशीयानां धमनीचक्राणामितरधमनीप्रतानैः अभितर्पणात्।

प्रभवप्रसरौ शाखाप्रविभागश्च धमनीनां बहुधा विलक्षणरूपा दृश्यन्ते केषुचित् कायेषु। तस्मादिह सर्वत्रापि तद्वर्णनं भूयोदर्शनमूलं प्रायिकमेव मन्तव्यम्। भिन्नक्रमविभागस्यापि बहुशो दर्शनात्।

सिराश्च प्रायेण सर्वत्र धमनीरनुसरन्ति, एकाकिन्यो युग्मा वा। तत्र स्थूलधमन्यनुसारिण्य एकाकिन्यः, तनुधमन्यनुसारिण्यश्च युग्माः प्रायशः। ताः सहचर्यो[१] नाम।

अथ—आरोहिणी महाधमनी।

महाधमन्या आरोहिभागो द्व्यङ्गुलमात्रदीर्घः पञ्चाङ्गुलपरिणाहश्च—तस्य **आरोहिणी महाधमनी**[२]—इति संज्ञा। सेयम् हृदयस्य वामनिलयात् सम्भूय ऊर्द्ध्वमुखमीषद्वक्रञ्च प्रसृत्य महाधमन्यास्तोरणभागे मिलिता।

तस्या हृदयसम्बद्धं मूलमभितस्त्रय उत्सेधाः, पूर्वोक्तानामर्द्धेन्दुकपाटिकानां तदन्तस्थानां सूचकाः। तेषां चाभ्यन्तरतस्त्रीणि कोरोदराणि कोटरकाणि। तदुपरिष्टाच्चोभयतः सम्भूते द्वे काण्डशाखे तनुपरिणाहि हृदयं पुष्णीतः। ते **हार्दिकधमन्यौ** नाम। तयो र्वामा हृदयबहिर्भागे पुरःस्थायां निलयान्तरिकाख्य-सीतायां प्रसृता, दक्षिणा तु तस्यामेव पश्चिमस्थायाम्। एकैकस्याश्च हार्द्दिक-धमन्या अग्रशाखे द्वे—अनुलम्बा अनुप्रस्था चेति। अनुलम्बा शाखा तत्रैव सीतायां हृदयाग्रं यावद् गत्वा अपरया अनुलम्बशाखया मिलिता। अनुप्रस्था तु शाखा अलिन्द-निलयान्तरिकायां सीतायां प्रसृता अपरया अनुप्रस्थया मिलिता।

---

१। Venae Comites. २। Ascending Aorta

तासां च शाखानां प्रशाखाऽनुशाखाभिरारचितं धमनीचक्रं हृदयं परितो दृश्यं हृन्मांसं पुष्णाति।

व्यतिकरः पुनरारोहिण्या महाधमन्या ईदृशः। सा पुरस्ताद् दक्षिण-फुस्फुसैकदेशेन हृत्कोषांशेन च संवृतप्राया। तस्याः पश्चिमतो हृदयस्य वामालिन्दः, फुस्फुसाभिगधमन्या दक्षिणमहाशाखा, दक्षिण क्लोमकाण्डिका च। तस्या दक्षिणत उत्तरा महासिरा हृदयस्य वामालिन्दश्च। वामतस्तु फुस्फुसाभिगाधमनी।

अथ तोरणी महाधमनी।

महाधमन्यास्तोरणभागः **तोरणी महाधमनी**[१] नाम। सा स्थूल-परिणाहा चतुरङ्गुलदीर्घा च। सेयं महाधमन्या आरोहिभागस्य अवरोहिभागेन संयोजनी। स उरःफलकस्यपृष्ठतो दक्षिणद्वितीयोपपर्शुका सन्धानदेशादारभ्य तिर्य्यक् चतुर्थपृष्ठकशेरुकापुरोभागं यावत् शरगत्या प्रसृता। दृश्यते-चासौ आदौ क्लोमनलिकायाः पुरस्तात्, ततश्च तद्वामतः। तदुत्सङ्गे च फुस्फुसाभिगा नाम धमनी महाशाखाद्वये विभज्यमाना, वामा क्लोमकाण्डिका च। मध्ये च महाधमनी फुस्फुसभिगधमन्योः योजनी शुष्कधमनी सेतुबन्धनिका नाम, सा सेतुकाख्यभ्रूणधमन्या अवशेषभूता।

तोरण्याश्च महाधमन्याः शिखरदेशात् सम्भूता **काण्डमूला**[२] नाम स्थूलधमनीदक्षिणतः, वामा महामातृका अक्षाधराचेति द्वे काण्डशाखे वामतः। सा च काण्डमूला धमनी दक्षिणाक्षकोरःसन्धानस्य पृष्ठतो विभज्यते द्वयोः काण्डशाखयोः, ते दक्षिणमहामातृका, अक्षाधरा चेति प्रसिद्धे। एवं चतस्र उत्तराः काण्डशाखाः महाधमनीतोरणात् साक्षात् परम्परया वा सम्भूताः।

तासां महामातृकाद्वयं ऊर्द्ध्वं प्रसृतं च मातृकाधमनीषु विभक्तं प्राधान्येन शिरोग्रीवं पुष्णाति शाखाप्रशाखाभिः। अक्षाधरे तु तिर्य्यग् वहिःप्रसृते मध्येपथं कतिचिद्भिः शाखाप्रशाखाभिः शिरोग्रीवांशोरःस्थलादीन् तर्पयन्त्यौ कक्षयोः कक्षधरे भूत्वा बाह्यो बाहुधमन्यौ भवतः। एकैका च बाहुधमनी कूर्परसन्धेः पुरस्ताद् द्वेधा विभज्यते प्रकोष्ठस्यान्तर्वहिःसीम्नोः। तत प्रशाखाऽनुशाभिश्च तर्प्यन्ते बाहुस्था विशेषाः।

१। Aortic Arch. २। Innominate Artery.

( व्यतिकरः ) तोरणी महाधमनी पुरस्तात् फुस्फुसधरयोः कलाकोषयोरंशाभ्यां वालग्रैवेयकाख्यग्रन्थिशेषेण च संवृता । तद्वामतो दृश्यो वामफुस्फुसांशः कलाकोषसहितः, वामा अनुकोष्ठिका नाम नाडी, वामा प्राणदाख्या नाडी तच्छाखाश्च । तद्दक्षिणतो दृश्यं अनाहतचक्रं, अन्ननलिका, रसकुल्या च । क्लोमनलिका तु तदक्षिणपश्चिमतः । ऊर्द्ध्वं पुनस्तोरण्या महाधमन्या स्तिस्रोधमन्यः —काण्डमूलाधमनी, वामा महामातृका अक्षाधरा चेति । ताः पुरोवर्त्तिन्या वामगलमूलिकाख्यसिरया तिर्य्यगुल्लंघिताः । तोरणाधस्तु पूर्वोक्तास्तोरणोत्सङ्गस्था विशेषाः—इति तोरण्या महाधमन्या व्यतिकरो व्याख्यातः ।

## अथ अवरोहिणी महाधमनी ।

महाधमन्या अवरोहिभागः—**अवरोहिणी महाधमनी**[१] इत्युच्यते । सा चतुर्थपृष्ठकशेरुकापुरोदेशादारभ्य चतुर्थकटिकशेरुकां यावत् प्रसृता पृष्ठवंशस्य वामपार्श्वस्थाः । सा च वर्णनासौकर्य्याय द्वेधा विभज्यते -औरस्यभागः, औदर्य्यभागश्चेति । तत्र महाप्राचीरास्थं महाधमनीच्छिद्रमाश्रित्य यावदियं नाधः प्रवर्त्तते, तावदस्या **औरसी महाधमनी**[२] ति संज्ञा । अधः प्रवृत्ता तु सैव **औदरी महाधमनी**[३] नाम । तयोश्च विभागयोस्तन्व्यः काण्डशाखाः स्वशाखाप्रशाखाभिरौरस्यानौदर्य्यांश्च विशेषानभिव्याप्य तर्पयन्ति ।

( व्यतिकरः ) तत्र औरस्या महाधमन्या व्यतिकरस्तावदीदृशः । तस्याः पुरस्तात् -वामफुस्फुसस्य मूलदेशः, हृत्कोषः, अन्ननलिका, महाप्राचीरांश्च । पश्चात्—पृस्ठवंशं, वामा पुरोवंशिकाख्या सिरा च । दक्षिणतो रसकुल्या, दक्षिणा पुरोवंशिका सिरा च । वामतो—वामफुस्फुसधरा कला, वामफुस्फुसश्चेति । एवं च पश्चिमाधरे फुस्फुसान्तराले दृश्योऽयं महाधमनीभागः ।

औदर्य्या महाधमन्याः पुन र्व्यतिकर इत्थंभूतः । तस्याः पुरस्ताद्—आमाशयः, अग्न्याशयः, वामा वृक्कागता सिरा, ग्रहणी संज्ञः क्षुद्रान्त्राद्यभागः, अन्त्रवन्धनीमूलञ्च । तस्याः पश्चात् कटिकशेरुकाचतुष्टयम् । दक्षिणतो—रसाधारिका, रसकुल्या, दक्षिणपुरोवंशिका नाम सिरा, महाप्राचीराया दक्षिणमूलम्, अधरा, महासिरा च । वामतो—महाप्राचीराया वाममूलं, ग्रहण्याः पूर्वभागः, क्षुद्रान्त्राणि, ईडा नाम महानाडी, वामा गवीनी चेति ।

१ । Descending Aorta २ । Thoracic Aorta. ३ । Abdominal Aorta.

# दक्षिणगलपार्श्वदेशः व्यवच्छेदेन दर्शितः ।

( बहिर्मातृकाख्यधमन्या अक्षाधरायाश्च प्रदर्शनाय )




( द ) द्विगुम्फिका पेशी

( ट ) उरःकर्णमूलिका पेशी ( कर्तिता )

( प ) पृष्ठच्छदा ,,

( अ ) अंसकफिका ,,

( To face page 101 )

(अन्तिमविभागः) सा च महाधमनी अन्ते (चतुर्थकटिकशेरुकायाः पुरस्ताद्) महत्योरग्रशाखयोर्विभक्ता। ते च महाशाखे त्रिकास्थिशिखरं प्राप्य पुनरग्रशाखाचतुष्टये विभज्येते। ताश्चतस्रो महाधमन्याः प्रधानशाखा इत्युच्यन्ते। तासां द्वे बाह्ये काण्डशाखे—**अधिश्रोणिके बाह्ये**[१] नाम। ते वंक्षणदरीमार्गेण बहिर्गते और्व्यौ नाम धमन्यौ भवतः। एकैका च और्वी धमनी जानुसन्धिपृष्ठे द्वयोः शाखयोर्विभक्ता जंघायाः पुरः पश्चाच्च प्रसृता नानाविधाभिः प्रशाखाऽनुशाखादिभिः। ताभिरपराभिश्च प्रशाखादिभिः सन्तप्यन्ते अधःशाखागता विशेषाः।

अथापरे महाधमन्याः काण्डशाखे वस्तिगुहान्तर्गते **अधिश्रोणिके आभ्यन्तरे**[२] नाम। ते स्वशाखा-प्रशाखादिभि र्वस्तिगुहास्थितानाशयांस्तत्-परिसरगतांश्च बाह्याभ्यन्तरविशेषान् पुष्णीतः।

सोऽयं समासेन महाधमनीप्रविभागो वीजरूपो व्याख्यातः। विस्तरोऽत ऊर्द्ध्वम्।

---

## चतुर्थोऽध्यायः ।

अथातः शिरोग्रीवीयधमनीवर्णनीयमध्यायं व्याख्यास्यामः।

द्वे खल्विह महामातृकाख्ये स्थूलधमन्यौ शिरोग्रीवं पुष्णीतः, परःशताभिः शाखा-प्रशाखाऽनुशाखादिभिः। तत् सहकारिण्यौ च अक्षकाधराख्यधमन्योः शाखे मस्तिष्कमातृके नाम, अपराश्च सन्ति तच्छाखा-प्रशाखादयस्तादृशः। तासां सूक्ष्मानुसूक्ष्मप्रतानैरभिव्याप्ता निखिला अपि शिरोग्रीवस्था विशेषाः, बाह्या आभ्यन्तराश्च।

अथ महामातृके नाम मूलधमन्यौ।

तत्र **वामा महामातृका**[३] (अक्षाधरा च) (९६ चित्रम्) साक्षादेव महाधमनीसम्भवा। **दक्षिणा महामातृका**[४] (अक्षाधरा च) तु

---

१। Ext. Iliac Arteries. २। Internal Iliac Arteries. ३। Left Common Carotid. ४। Right Common Carotid.

महाधमनीप्रभवायाः अक्षकोरःफलकसन्धानस्य काण्डमूलाख्यधमन्या विभागसम्भूता। विभागश्च तस्या दक्षिणस्य पृष्ठत इत्यवोचाम। उभयोश्च महामातृकयोः काण्डशाखेति संज्ञा पारिभाषिकी।

ते च **महामातृके** नाम काण्डशाखे कनिष्ठाङ्गुल्यग्रपरिणाहे आक्षकोरःसन्धानयोः पश्चिमत आरभ्य तिर्य्यगूर्द्ध्वं च ग्रीवायां प्रसृते, अवटुद्वयस्य ऊर्द्ध्वधारां यावत्। तत्र एकैका महामातृका द्वयो रग्रशाखयोर्विभज्यते। ते **बहिर्मातृका अन्तर्मातृका** च नाम। तयोराद्या पुरस्था उत्तानतरा सा प्रायेण बहिःग्रीवीयानां विशेषाणां पोषणी, अन्त्या पश्चिमा गम्भीरा च सा अन्तर्ग्रीवं प्रविष्टा घ्राण-नेत्रश्रवणेन्द्रियाधिष्ठानानि शाखाप्रतानैः पुष्णन्ती अभिमस्तिष्कं प्रसृता।

(व्यतिकरः) उभे च महामातृके पुरस्तादुरःकर्णमूलिकाभ्यां पेशीभ्यां संवृते तदनुक्रमेण प्रसृते च। धार्य्यते च एकैका महामातृका ग्रीवाप्रच्छदांशनिर्म्मितेन मातृकाकञ्चुकेन, दृश्यते च तदन्तःसहप्राणदाख्य-नाड्या अनुमन्याख्यसिरया च। तत्र च कञ्चुकाभ्यन्तरे बहिःसीम्नि सिरा, मध्ये नाडी, अन्तःसीम्नि च धमनीति अवस्थानक्रमः। कञ्चुकपुरस्ताच्च दृश्या जिह्वामूलिन्या नाड्या निम्नगा नाम शाखा। अन्तराले च महामातृकयोर्दृश्या—ग्रीवामूले क्लोमनलिकैव, ऊर्द्ध्वभागे तु ग्रैवेयग्रन्थिः स्वरयन्त्रम्, अन्ननलिकाया आद्यभागश्च पूर्व्वापरक्रमेण। पश्चात्तु तयोः दीर्घग्रीविका दीर्घशिरस्काचेति पेशीद्वयं ग्रीवावंशपुरःस्थम्। पेशीधमन्योरन्तराले च वामत इडा दक्षिणगश्च पिङ्गलेति महानाड्यौ नाडीकन्दैः सहिते।

### अथ बहिर्मातृका धमनी।

**बहिर्मातृका**[१] नाम धमनी (६६ चित्रम्) महामातृकाया उत्ताना अग्रशाखा। सा अवटुसंज्ञस्य तरुणास्थ्न ऊर्द्ध्वधारात आरभ्य कर्णमूलं यावत्तिर्य्यगूर्द्ध्वं च प्रसृता एकैकतो ग्रीवापार्श्वे। तस्या अष्टौ प्रशाखाः। तासां चतस्रः पुरोमुख्यः, तिस्रः पश्चान्मुख्यः, एका ऊर्द्ध्वगा। तद्यथा—(मूलदेशादारभ्य ऊर्द्ध्वोर्द्ध्वक्रमेण)—पुरोमुख्यः—उत्तरग्रीविका, अनुजिह्विका,

१। External Carotid.

बहिर्हानव्या (वक्त्रधमनी वा), अन्तर्हानव्या चेति प्रसिद्धाः । पश्चान्मुख्यः— अन्नद्वारिणी ऊर्द्ध्वगा, कपालमूलिनी, पश्चिमकर्णिका चेति । ऊर्द्ध्वमुखी— अनुशंखा उत्ताना नाम ।

तत्र उत्तरग्रीविका[1] नाम धमनी (९६ चित्रम्) कण्ठिकास्थ्नो महाशृङ्गाधो बहिर्मातृकायाः पुरोभागात् सम्भूय, ग्रैवेयग्रन्थिं प्रविष्टा । सा इतरपार्श्ववर्त्तिन्याः स्वनामिकायाः धमन्या मध्यरेखायामनुशाखाभिर्मिलिता, सूक्ष्मप्रतानैः तदुपकण्ठस्थान् पेश्यादीन् पुष्णाति । सन्ति चापरा अपि तस्याः प्रधानानुशाखाश्चतस्रः । ता अनुकण्ठिका, अधिस्वरा उत्तरा, अनुकृकाटिका, मन्याऽभिगा चेति प्रसिद्धाः । तासामाद्यास्तिस्रः क्रमेण कण्ठिकास्थि-स्वरयन्त्र-कृकाटिकास्वनुप्रविष्टाः । चतुर्थी तु मन्याख्यां पेशीं (उरःकर्णमूलिकां) तर्पयति ।

अनुजिह्विका[2] नाम धमनी बहिर्मातृकायाः पुरोदेशात् सम्भूय कण्ठिकास्थ्नोऽधःशृङ्गं प्रति तिर्य्यग् गत्वा जिह्वाधः प्रसृता । अस्याश्चतस्रोऽनुशाखाः—अनुकण्ठिका, रसनोत्तरिका, रसनाधरिका, गम्भीररसनिका चेति स्वनामव्याख्याताः ।

**बहिर्हानव्या[3] (वक्त्रधमनी वा)** नाम (९६ चित्रम्) बहिर्मातृकाया उत्ताना प्रशाखा अधो हनुपार्श्वस्थया वक्त्रधमनीपरिखया प्रसृता चिबुकोष्ठ-नासापार्श्वेषु सङ्गता । तस्याश्च अष्टौ अनुशाखाः—चतस्रो गलानुगाः, चतस्रश्च वक्त्रानुगा इति । तत्र गलानुगाः—आरोहिणी तालुगा, उपजिह्वानुगा, चिबुकाधरीया, ग्रन्थिगा, चिबुकाधरिका चेति । वक्त्रानुगास्तु अधरोष्ठिका, नासापार्श्विका, नासामूलिका चेति । ताः स्वनामव्याख्याताः ।

**अन्तर्हानव्या[4]** नाम (९६।९७ चित्रयोः) बहिर्मातृकायाः स्थूलगम्भीरा प्रशाखा, या कर्णमूलाधः संभूय अधोहनुकूटस्य अन्तस्तलमाश्रित्य हनुसन्धेरधस्तात् तिर्य्यगन्तःप्रविष्टा । सा च पञ्चदशभिरनुशाखाभिः हनु-कर्ण-कपोल-ताल्वादीन् बाह्यां मस्तिष्कवृतिकां कलाञ्च पुष्णाति । तस्यास्त्रयो भागाः कल्प्यन्ते वर्णनासौकर्याय । तद्यथा—आद्यो भागः कर्णमूलादारभ्य

---

१ । Superior Thyroid. २ । Lingual ३ । Ext. Maxillary or Facial. ४ । Internal Maxillary.

उत्तराया हनुमूलकर्षण्याः पेश्या अधोधारानुक्रमस्थः। मध्यो भागः—धनुर्वक्रः तामेव पेशीं तिर्य्यगधिशेते, स च शंखच्छदया पेश्याच्छादितः। अन्त्यो भागस्तु गम्भीरतरः, अमुष्या एव पेश्याः मूलद्वयान्तरालेन करोटिपक्षस्थं हनुजातूकखातं गत्वा अनुशाखासु विभक्तः। तत्र—

आद्यभागस्य पञ्च अनुशाखाः। तासां द्वे कणगे—गम्भीरकणिका, पटहपुरस्का चेति। द्वे मस्तिष्कवृतिगे—मध्यमा अनुचरी चेति। एका अधोहनुमण्डलगा—अधरदन्तिका नाम।

मध्यभागस्य चतस्रः अनुशाखाः—शाखानुगा गम्भीरा, हनुमूलिका, हनुकूटिका, अनुकपालिका चेति। अन्त्यभागस्य षट्—पश्चिमदन्तिका, नेत्राधरीया, अवरोहिणी तालुगा, अनुग्रसनिका, जतूकापादिका, जतूकातालुका चेति। तासां नेत्राधरीया द्वयोस्तनुशाखयोर्विभक्ता नेत्रगुहानुगा, उत्तरदन्तिका चेति। अनुग्रसनिका जतूकापादिका च ग्रासनीं पेशीं श्रुतिसुरङ्गाञ्च प्रति प्रसृते। सर्वासां चासां प्रायेण नामभिरेव पोषणीयस्थानानि समुन्नेयानीति विस्तरो नाभिहितः। ता एताः बहिर्मातृकायाः पुरोमुख्यः प्रशाखा व्याख्याताः।

अथ बहिर्मातृकायाः पश्चान्मुख्यः प्रशाखा उच्यन्ते।

अन्नद्वारिणी ऊर्द्ध्वगा[१] नाम बहिर्मातृकायाः पश्चिमदेशप्रभवा तनुदीर्घा प्रशाखा, या अन्तर्मातृकायाः पार्श्वे ऊर्द्ध्वमुखी दृश्यते। तस्यास्तिस्रोऽनुशाखाः—अनुग्रसनी, पटहाधरीया, मस्तिष्कवृतिगा पश्चिमा चेति। ताः क्रमेण, अन्नद्वार-कर्णपटह-मस्तिष्कवृतीनां पर्य्यन्तेषु प्रसृताः।

कपालमूलिनी[२] नाम (६६ चित्रम्) प्रशाखा कपालमूलस्थपेशीः निर्भिद्य प्रसृता। तस्या अनुशाखाः षट्—मन्यानुगा, गोस्तनिका, कर्णपालिगा, मांसगा, मस्तिष्कवृतिगा, पश्चिमकपालिका चेति। तासामाद्या मन्याख्यां पेशीमनुप्रविष्टा। द्वितीया शंखास्थ्नो गोस्तनप्रवर्द्धनं, तृतीया कर्णपालिं, चतुर्थी ग्रीवापृष्ठस्थाः दीर्घपेशीः, पञ्चमी शिरोगुहान्तःप्रसृता मस्तिष्कवृतिम्, षष्ठी शिरश्छदाख्यपेश्याः शिरस्त्वचश्च पश्चार्द्धमिति तासां पोषणीयस्थानसमुद्देशः।

---

१। Ascending Pharyngeal. २। Occipital.

[ १७ चित्रम् ]

# अन्तर्हानव्याख्यधमन्याः शाखा-विस्तारः ।




(क) हनुमूलकर्षणी उत्तरा ।

(ख) हनुमूलकर्षणी अधरा ।

( To face page 104 )

पश्चिमकर्णिका[१] नाम ( ९६ चित्रम् ) धमनी कर्णमूलस्य पश्चिमदेशे वहिर्मातृकातः समुत्थाय द्विगुम्फिकायाः पेश्याः मूलोपरिष्टात् कर्णमूलिकग्रन्थेश्च पश्चिमतः प्रसृता। सा शंखास्थ्नो गोस्तनकर्णविवरयोरन्तरालं प्रविष्टा कतिचिदनुशाखाभिः द्विगुम्फिकाद्याः पेशीः, कर्णमूलिकग्रन्थिं च पुष्णाति। अपराश्च तस्यास्तिस्रोऽनुशाखाः—कर्णान्तरीया, कर्णपृष्ठगा, पश्चिमकपालिका चेति। ता एताः पश्चान्मुख्यः प्रशाखा व्याख्याताः।

अनुशंखा उत्ताना[२] नाम ( ९६ चित्रम् ) ऊर्द्ध्वमुखी प्रशाखा तु कर्णमूलग्रन्थिं निर्भिद्य तिर्य्यक् कर्णपुरतः प्रसृता शंखदेशे द्वयोरनुशाखयोर्विभक्ता। ते पुरःकपालिका पार्श्वकपालिका चेति संज्ञे। अपराश्च तस्या अनुशाखाः कर्णमूलिकग्रन्थिं, हनुसन्धिं, हनुकूटकर्षणीं पेशीं च पुष्णन्ति। अन्याश्च चतस्रोऽनुशाखाः कर्णपुरस्ताद् दृश्याः—अनुवक्त्रिका, पुरःकर्णिका, गण्डनेत्रिका, मध्यमशंखिका चेति स्वनामव्याख्याताः।

सेयमन्तर्हानव्या धमनी व्याख्याता। समाप्यते चैतावता बहिर्मातृकाऽपि।

अथ अन्तर्मातृका धमनी।

**अन्तर्मातृका**[३] नाम ( ९८ चित्रम् ) एकैकतो ग्रीवापार्श्वे अवटुसंज्ञस्य तरुणास्थ्न ऊर्द्ध्वधारोपकण्ठे विभज्यमानाया महामातृकाया गम्भीरा शाखा, या प्राधान्येन मस्तिष्कं नेत्रद्वयं च पुष्णाति। तस्याश्चत्वारो भागाः कल्प्यन्ते वर्णमासौकर्य्याय। तथाहि यदाऽसौ तिसृणामाद्यग्रीवाकशेरुकाणां बाहुप्रवर्द्धनकपुरस्तादूर्द्ध्वंगता गलविलपार्श्वे उपजिह्विकायाः पार्श्वे च सन्निहिता, सोऽयमस्या गलपार्श्वीयो भागः आद्यः। अनन्तरं यदाऽसौ शंखास्थ्नः अश्मतटिकांशस्थायां मातृकासुरङ्गायां प्रविष्टा करोटेरभ्यन्तरं प्राप्नोति, सोऽयमस्या आश्मतटिको भागो द्वितीयः। अथ करोटेरभ्यन्तरं प्राप्ताऽसौ मस्तिष्कवृतिकां कलां निर्भिद्य जतुकास्थ्नः शरीरपार्श्वस्था यदा मातृकापरिखामधिशेते लुप्ताकारचिह्नवद् (ऽ) वक्रीभूय, सोऽयमस्या जातूकपार्श्विको भागस्तृतीयः। तत उर्द्ध्वं सेयं द्वितीयतृतीयभागयोरनेकाभिः शाखाभि-र्मार्गमध्यस्थान् विशेषान् सन्तर्प्य क्रमेण मस्तिष्कतलदेशमधिष्ठाय शाखाचतुष्टये विभज्यते। सोऽयमस्या मास्तिष्कमूलिको भागश्चतुर्थः।

---

१। Posterior Auricular. २। Superficial Temporal. ३। Internal Carotid.

विशेषतश्च तृतीयभागे त्रिकोणिकाख्यां सिरासरितं निर्भिद्य गतासौ धमनी, तत् परितश्च दृश्या स्तृतीयादिषष्ठ्यन्ता नाड्यः।

अथास्याः प्रशाखाविभागः। तत्र—

(१) गलपार्श्वीये भागे सर्वथा प्रशाखाऽभावः।

(२) आश्मतटिके भागे द्वे प्रशाखे—अनुपटहिका जतूकापादिका चेति। ते स्वनामव्याख्याते।

(३) जातूकपार्श्विके भागे पञ्चविधाः प्रशाखाः। जतूकापार्श्विकाः, अनुपोषणिका, त्रिधारकन्दिकाः, अग्रिमा मस्तिष्कवृतिगा, चाक्षुषी चेति। तत्र जतूकापार्श्विका नाम असंख्यप्रायाः प्रशाखाः जतूकास्थिशरीरोपकण्ठस्थान् विशेषान् पुष्णन्ति। अनुपोषणिका नाम प्रायशो युग्मा प्रशाखा पोषणकाख्यं ग्रन्थिं तर्पयति। त्रिधारकन्दिका नाम तनुप्रशाखाः पञ्चमनाड्या स्त्रिधार-कन्दमाप्याययन्ति। अग्रिमा मस्तिष्कवृतिगा नाम तनुप्रशाखा स्वनाम-व्याखाता। चाक्षुषी नाम प्रशाखा दशभिरनुशाखाभिश्चाक्षुषान् विशेषानभि-प्रीणाति, अपराभिश्च तिसृभि र्मस्तिष्कवृतिं ललाटं नासामूलं च। सा नेत्राध्याये सविस्तरं वर्णनीया।

(४) मास्तिष्कमूलिके तु भागे अन्तर्मातृकायाश्चतस्रः प्रशाखा मस्तिष्काधो दृश्याः मस्तिष्कपोषण्यः। ताश्च अभिमस्तिष्का अग्रिमा, सैव मध्यमा, पश्चिमा मूलयोजनिका, अग्रिमा अनुशृङ्खलिका चेति प्रसिद्धाः। ताश्च इतरपार्श्विकाया अन्तर्मातृकायाः स्वसंज्ञकशाखाचतुष्टयेन सह मिलिताः, मस्तिष्कमातृकाख्ययो-र्धमन्योरग्रमूलिकया सह संयुज्यन्ते। तथा च निर्मीयते मस्तिष्कमूलीयं धमनीचक्रम् ( ६६ चित्रे दृश्यम् )।

प्रधाना चात्र शाखाचतुष्टये मध्यमा अभिमस्तिष्कैव, सा हि स्थूलतमा अग्रप्रशाखा, या स्वपार्श्वीयमस्तिष्कार्द्धस्य मध्यभागान्तः प्रविष्टा।

## अथ मस्तिष्कमातृके।

**मस्तिष्कमातृके**[१] नाम ( ६८ चित्रम् ) धमन्यौ अक्षाधराख्यधमन्योः शाखे ग्रीवामुभयतः ऊर्द्ध्वमुखं प्रसृते। ते प्राधान्येन मस्तिष्कं पुष्णीतः। ते

१। Verteberal Artery.

[ ९८ चित्रम् ]

# अन्तर्मातृकाख्यधमन्याः शाखा-प्रशाखाः ।




( म ) जिह्वाकण्ठिका ।

( ज ) चिवुकजिह्वाकण्ठिका ।

( क ) कपोलिका ।

( ख ) गलसङ्कोचनी उत्तरा ।

( To face page 106 )

ग्रीवाकशेरुकाणां बाहुप्रवर्द्धनान्तःस्थेन मातृकाच्छिद्रमार्गेण पश्चिमकपालमूलं सम्प्राप्य महाविवरेण शिरोऽभ्यन्तरं प्रविशतः। तदग्रे च मस्तिष्काधस्ताद् उभयोर्मिलनेन एकैव सम्पद्यते धमनी, सा अग्रमूलिका मस्तिष्कमूलिका वा नाम। सेयं मास्तिष्कमूलिके धमनीचक्रे प्रविष्टा।

अथ एकैकस्या मस्तिष्कमातृकाया द्विविधाः शाखाः—ग्रीवागताः, शिरोऽभ्यन्तरीयाश्च। तत्र ग्रीवागताः पुन द्विविधाः—मांसगाः, सुषुम्नाकाण्डीयाश्च। तासां कपालमूले विनिर्गताः मांसगाः शाखाः पश्चिमग्रीवीया गम्भीरपेशीः पुष्णन्ति। सुषुम्नाकाण्डीयास्तु कशेरुचक्रान्तरीयाणि च्छिद्राणि समाश्रित्य सुषुम्नाकाण्डमनुप्रविष्टास्तदाप्यायनाय। शिरोऽभ्यन्तरीयाः पुनः शाखा मस्तिष्कमूलिकानिर्म्माणात् प्राक् चतुर्विधाः—मस्तिष्कवृतिगाः, पृष्ठवंशान्तरीयाः, अनुमस्तिष्कीयाः, सुषुम्नाशीर्षगाश्चेति। मस्तिष्कमूलिकायास्तु पञ्चविधाः शाखा उभयतो निर्गताः—अनुमस्तिष्कीया उत्तरा, सैव अग्रिमाधरा, अनु-धम्मिल्लकाः, अन्तःश्रुतिगा, मस्तिष्कानुगा पश्चिमा चेति। ताभिश्च पार्श्वोद्गताभिः शाखाभिराप्याय्यन्ते—अनुमस्तिष्कम्, धम्मिल्लकम्, अन्तः-श्रवणीया विशेषाः, मस्तिष्कपश्चिमभागश्च। अन्ते च पश्चिममस्तिष्कानुगयोः शाखयोर्विभक्तेयं धमनी।

### अथ मस्तिष्कमूलिकं नाम धमनीचक्रम्[१]।

मस्तिकस्य भूयिष्ठो भागो मस्तिष्कमातृकाभ्यामन्तर्मातृकाभ्यां च संतर्प्यते। ता हि स्वशाखानां परस्परसंमेलनेन मस्तिष्कमूले दृष्टिनाडीस्वस्तिकं पोषणकग्रन्थिञ्च परितो विचित्रं धमनीचक्रमारचयन्ति (९६ चित्रम्)। तच्चेत्थं निर्म्मीयते—पुरोभागे अन्तर्मातृकायाः अग्रिमे प्रशाखे मस्तिष्कानुगे नाम धमन्यौ अग्रयोजनिकया धमन्या मूलमात्रेण योजिते—ततो युग्मरूपेण पुरः प्रसृते। मध्ये अन्तर्मातृकायाश्चरमप्रशाखे स्थूलतरे मध्यमे मस्तिष्कानुगे नाम। पश्चिमभागे मस्तिष्कमातृकयो-र्मेलकसंभूता अग्रमूलिका मस्तिष्कमूलिका वा नाम धमनी पार्श्वगाभ्यां पश्चिममस्तिष्कानुगाख्यशाखाधमनीभ्यां सहिता। ते च धमन्यौ अन्तर्मातृकायाः पश्चिमयोजनिकाख्यशाखाभ्यां मूलयोर्मिलिते। सर्वासां चासामन्तर्मस्तिष्कं शाखाप्रतानैर्विस्तारः।

१। Circle of Willis

( ६६ चित्रम् )

## मस्तिष्कमूलिकं धमनीचक्रम् ।




सन्ति च ग्रीवायामपरा अपि अक्षाधराप्रभवाः शाखाधमन्यो या ग्रीवागतान् विशेषानभितर्पयन्ति। तासामेकैकतो ग्रीवायाम् अक्षाधरायाः शाखाद्वयं मूलम् । ते च शाखे—गलग्रैवेयकी, ग्रैवपार्शुकी चेति प्रसिद्धे अग्रे वर्णनीये ।

सर्वासाञ्चासां नामभिरेव संस्थानादयो व्याख्याताः ।

इति शिरोग्रीवीया धमन्यः ।

# पञ्चमोऽध्यायः ।

अथातो मध्यकायधमनीवर्णनीयमध्यायं व्याख्यास्यामः ।

मध्यकायधमनीषु (सार्वकायिकधमनीषु वा) महाधमनी प्रधानम् । सा च सविभागा सव्यतिकरा सकाण्डशाखा व्याख्यातपूर्वा । तस्याश्च अवरोहि-भागः उरसि औरसी महाधमनीति, उदरे च औदरी महाधमनीति अभिधीयते । तच्छाखाप्रशाखादिभिरेव हि भूम्ना सन्तर्प्यन्ते मध्यकायस्था विशेषाः ।

सन्ति चापरा अपि महाधमनीतोरणप्रभवयो रक्षाधरयोः शाखाप्रशाखादयो मध्यकाये प्रसृताः । ताः सहकारिण्यः पूर्वोक्तानाम् । फुस्फुसाभिगा धमनी च सार्वकायिकसिरारक्तस्य फुस्फुसप्रापणी व्याख्यातपूर्वा ।

## अथ औरस्या धमन्यः ।

औरस्या नाम धमन्यो द्विविधाः । औरस्या महाधमन्याः शाखाः, अक्षाधरयोः शाखाश्च । उभयविधा अपि ताः पुनर्द्विविधाः, तर्पणीयदेशभेदात्, आशयानुगाः, परिसरीयाश्चेति । तत्र—

आशयानुगाः त्रेधा विभज्यन्ते—हृत्कोषानुगाः, क्लोमकाण्डानुगाः, अन्ननलिकानुगाश्चेति । परिसरीयाश्च त्रेधैव—फुस्फुसान्तरालीयाः, महा-प्राचीरोत्तराः, फुस्फुसानुगाश्चेति । ताः प्रधान्येन महाधमन्याः पार्श्वाभ्यां पृष्ठतो वा सम्भूताः । यथा—

हृत्कोषानुगा नाम त्रिचतुरास्तन्व्यः शाखाः हृत्कोषस्य पश्चिमतः प्रसृताः । हार्दिकधमन्यौ तु आरोहि-महाधमनीप्रभवौ पृथगेव वर्णितपूर्वे ।

क्लोमकाण्डानुगा नाम द्वित्राः शाखाः क्लोमकाण्डशाखानामनुगामिन्यः, सहैव तत् प्रशाखानुशाखाभिः शतशो विभक्ताः । ताः सक्लोमशाखयोः फुस्फुसयोः पोषण्यः ।

अन्ननलिकानुगा नाम चतस्रः पञ्च वा तन्व्यो धमन्यः अन्ननलिकां परितः प्रसृताः ।

फुस्फुसान्तरालीयाः नाम काश्चन तन्व्यः शाखा पश्चिमफुस्फुसान्त-रालस्थान् लसीकाग्रन्थीन् पुष्णन्ति ।

महाप्राचीरोत्तराः नाम तनुशाखाः महाप्राचीराख्यपेश्याः ऊर्द्ध्व तल-पश्चिमार्द्धे प्रसृताः ।

पर्शुकानुगाः नाम एकैकतो दश शाखाः, पर्शुकादशकस्य अधोधारानु-वर्त्तिन्यः । ताः पर्शुकान्तरालाख्याः पेशीरभिप्रीणयन्ति । तासां च काश्चन प्रशाखाः पेशीर्निर्भिद्य पुरस्ताद्बहिर्गताः उरःपुरस्थाः पेशीस्त्वचः स्तनद्वयञ्च तर्पयन्ति ।

अक्षाधरयोर्धमन्योरौरस्यः शाखास्तु अनुपदं वक्ष्यन्ते ।

अथ अक्षाधरे ।

**अक्षाधरे**[१] नाम स्थूलधमन्यौ दक्षिणतः काण्डमूलाख्यधमनी-द्वारेण, वामतस्तु साक्षादेव, महाधमनीतोरणात् सम्भूय अक्षकास्थ्नोरधस्तात् प्रथमपर्शुकयोरूर्द्ध्व तलमाश्रित्य धनुर्वक्रे दृश्येते । प्रथमपर्शुकार्स[illegible]मतिक्रान्तयोश्च तयोः कक्षाधरेति संज्ञा कक्षागतत्वात् । एकैकस्याश्च अक्षाधरायाश्चतस्रः शाखाः,—मस्तिष्कमातृका, गलग्रैवेयकी, ग्रैवपार्शुकी अन्तःस्तनिका, चेति ।

तासामाद्या शाखा वर्णितपूर्वा ।

गलग्रैवेयकी नाम अक्षशाखा ग्रीवामूलदेशे सम्भूता । तस्याश्च अक्षादिवाऽरास्तिस्रः प्रशाखाः प्रसरन्ति । ताः अधरग्रीविका षण्मुखी, अधि-ग्रीविका, अध्यंसिका च नाम । तासामाद्या षड्भिरनुशाखाभिः प्रसृता द्वाभ्यां क्लोमान्ननलिके पुष्णाति, चतुर्भिश्च ग्रैवेयग्रन्थिं, स्वरयन्त्रं, ग्रीवापेशीश्च । द्वितीया ग्रीवापृष्ठपेशीरेव काश्चित् । तृतीया अंसफलकोर्द्ध्वं प्रसृता काश्चिदंसपेशी-र्ग्रीवापेशीश्च ।

ग्रैवपार्शुकी नाम अक्षाधरायाः या शाखा, तस्या द्वे प्रशाखे गम्भीरग्रीविका, प्रथमा पर्शुकानुगा चेति । तयोराद्यैव ग्रीवाधमनीषु दृश्यते, सा गम्भीर-ग्रीवापेशीष्वनुप्रविष्टा शाखाप्रतानैः ।

**अन्तःस्तनिका**[२] नाम शाखा पुनरुरःपञ्जराभ्यन्तरे उरःफलकपार्श्व-सन्धानरेखानुक्रमेण अधोमुखं प्रसृता, षष्ठोपपर्शुकासन्धिं यावत् । तत्र चासौ द्वयोरग्रप्रशाखयोर्विभक्ता । तयोरेका मध्यरेखापार्श्वगा सरलाऽधोमुखी च, सा

१ । Subclavian Artery. २ । Internal Mammary.

## [ १०० चित्रम् ]—अवरोहिणी महाधमनी ( सशाखा )




( To face p. 111 )

उत्तरा आदरिकी नाम, औदर्य्यपेशीनां पोषणी। अपरा तिरश्चीनाऽभ्यन्तरगता हृत्कोषं महाप्राचीराम् औदर्य्यपेशीश्च अनुशाखाभिः पुष्णाति। तस्याः तिरश्चीना औदरिकीति संज्ञा। तस्या पार्श्विक्यः प्रशाखाः उरःप्राचीरान्तःस्थाः पेशीः, स्तनौ च पुष्णन्ति।

प्राक् च विभागात् तस्याः षट् प्रशाखाः सम्भवन्ति। तासामग्रिम-फुस्फुसान्तराले, हृत्कोषे, महाप्राचीरायाम्, उरःफलके, फुस्फुसधरायां कलायां, पर्शुकान्तरालेषु च अनुशाखाभिर्विस्तारः।

सर्वे च अन्तःस्तनिकायाः शाखाप्रताना औरसधमनीनां पूर्वोक्तानां शाखा-प्रतानै र्मिलिता उरसि बहिरन्तश्च बहुधा धमनीचक्राण्यारचयन्ति। ता एता औरस्या धमन्यो व्याख्याताः।

### अथ औदर्य्या धमन्यः।

औदर्य्या धमन्यः औदर्य्या महाधमन्याः काण्डशाखासमुत्थाः प्राधान्येन। सन्ति चापरा अपि काश्चन परिसरीया धमन्यो या अन्तःस्तनिकायाः, अक्षाधरायाः, बाह्याया अधिश्रोणिकायाः, और्व्याश्च धमन्याः सम्भूय औदर्य्यपेशीत्वगादिषु प्रसृताः।

तत्र औदर्य्या महाधमन्याः काण्डशाखास्त्रिविधाः—आशयानुगाः, परिसरीयाः, चरमशाखाश्चेति। तासामाशयानुगास्तिस्र एकाकिन्यः, तिस्रश्च युग्माः—इति साकल्येन नव। परिसरीयाः पुनः पञ्च युग्माः, एका चैकाकिनी-त्येकादश। चरमशाखाः पुनः प्रधानाश्चतस्रः। ता महाधमनीविभागसम्भूतयो-र्महाशाखयोः पुनर्विभागसमुत्थाः, तच्छाखाप्रशाखादिभि श्चाऽप्याय्यते सक्थिद्वयं वस्तिदेशगाश्च विशेषाः।

### अथ आशयानुगाः।

(१) **अर्द्धोदरिका**[1] नाम तासामाद्या अक्षशाखा (१००।१०१ चित्रयोः)। सा हि अक्ष इवाऽराणां तिसृणां शाखानां मूलभूता उदरोत्तरार्द्ध-स्थान् आशयान् पुष्णातीति तथासंज्ञा। ताश्च शाखाः—दक्षिणतः अभियाकृती, वामतः अभिप्लीहिका, मध्ये च आमाशयक्रोडिका वामा नाम। तत्र—

---

१। Coeliac Axis.

(क) अभियाकृती[1] नाम शाखा यकृदभिमुखं प्रसरन्ती मध्येपथं द्वे प्रशाखे अर्पयतः--आमाशयस्य ऊर्द्ध्वाधःपरिध्योः।

तयोराद्या आमाशयस्य धनुर्वक्रं क्रोडमनुगता आमाशयक्रोडिका दक्षिणा नाम। द्वितीया तु आमाशयतलमनुगता तादृश्येव आमाशयतलिका दक्षिणा नाम। सा आमाशयतलं संवेष्ट्य स्थिता वामया स्वनामिकया ( वक्ष्यमाणया ) मिलिता वपासहितमामाशयं तर्पयति। तस्याश्च एका अनुशाखा ग्रहणीं प्रतिगता उत्तरा अनुग्रहणिका नाम।

अथासौ अभियाकृती नाम धमनी यकृन्मूले दक्षिणवामयोः प्रशाखयो र्विभज्यमाना यकृत्पिण्डयोः प्रसरति। तयो र्दक्षिणप्रशाखातः संभूता पित्तकोषानुगा धमनी।

(ख) अभिप्लीहिका[2] नाम शाखा सर्पवत् कुटिलगत्या प्लीहाभिमुखं प्रसरन्ती मध्ये पञ्चषाभिः प्रशाखाभि रग्न्याशयस्य ऊर्द्ध्वदेशं प्रीणाति। ततः प्लीहमूलगतायास्तस्याः सम्भवति स्थूला प्रशाखा आमाशयतलिका वामा नाम। सा धनुर्वक्राऽमाशयतलमाश्रित्य स्थिता पूर्वोक्तया दक्षिणया स्वनामिकया मिलिता। सन्ति च अभिप्लीहिकायास्तद्देशत एव समुत्थिता अपरा अपि ह्रस्वाः प्रशाखाः आमाशयपादिकाः नाम, ताः पूर्वोक्तयोः आमाशयतलिकयोर्दीर्घधमन्योः सहकारिण्यः।

प्लीहानञ्च प्रविष्टाऽसौ अभिप्लीहिका धमनी वहुभिः प्रशाखानुशाखादिभिस्तदन्तः प्रसृता।

(ग) आमाशयक्रोडिका[3] वामा नाम या पुनः मध्यगा शाखा अर्द्धोदरिकायाः, सा आमाशयस्य क्रोडदेशे प्रसृता, पूर्वोक्तया स्वनामिकया दक्षिणया मिलिता आमाशयस्यार्द्धं भागं तर्पयति। आमाशयक्रोडिकयो रामाशयतलिकयोश्च शाखाप्रतानैरारच्यन्ते आमाशयस्य अन्तर्वहिःस्थितानि शतशो जालकानि।

(२) अथ औदर्य्यमहाधमन्या द्वितीया काण्डशाखा उत्तराऽन्त्रिकी[4] नाम ( १०२ चित्रम् )। सा अग्न्याशय[5]पृष्ठस्थात् महाधमनीभागात् प्रायः

---

१। Hepatic Artery. २। Splenic or Lienal. ३। Left Gastric, ४। Superior Mesenteric. ५। Pancreas.

( १०१ चित्रम् )

## अर्द्धोदरिकाख्या धमनी तच्छाखाश्च ।

( यकृद्—रज्जुबन्धेन समुन्नमितम् )




अ—अग्न्याशयः । अ० म०—अधरा महासिरा ।
आ० आ०—आमाशयः ।
य १ यकृत् ( वामपिण्डम् )
य २ यकृत् ( दक्षिणपिण्डम् )
य ३ यकृत् ( पश्चिमपिण्डम् )
पि—पित्तकोषः । प्र—प्रतीहारिणी महासिरा ।
म० प्रा०—महाप्राचीरा पेशी । व-व-व—वपा
१ अर्द्धोदरिका धमनी (अक्षशाखा)
२ अभियाकृती धमनी ।
३ पित्तस्रोतः ।
४।५ आमाशयकोडिका धमनी ।
६ अभिप्लीहिका धमनी ।
७।८ आमाशयतलिकाख्ये धमन्यौ (मिलिते)

( To face p. 112)

कंकतिकाकाराभिः शाखाभिः सम्भूय समग्राणि क्षुद्रान्त्राणि बृहदन्त्रं च भूम्ना प्रीणयति अन्त्रबन्धनीषु तालवृन्ताकारेण प्रसृतैः शाखाप्रतानैः। विशेषतश्च तस्या श्चतस्रः पार्श्वशाखाः। तद्यथा—

(क) अधरा अनुग्रहणिका, सा पूर्वोक्तया उत्तरानुग्रहणिकया मिलिता शाखाप्रतानैः ग्रहणीमग्न्याशयञ्च तर्पयति। (ख) मध्यमा बृहदन्त्रिका— (ग) दक्षिणा बृहदन्त्रिका च। ते बृहदन्त्रस्य भूयिष्ठं भागमभिव्याप्नुतः। (घ) उण्डुकान्त्रिका, सा बृहदन्त्रस्य उण्डुकभागं सन्निहितक्षुद्रान्त्रभागञ्च तर्पयति।

उत्तरान्त्रिक्याश्चरमशाखास्तु क्षुद्रान्त्रेषु बहुभिरणुशाखाभिः प्रसृताः। ताः क्षुद्रान्त्रिका नाम।

(३) अथ तृतीया काण्डशाखा **अधराऽन्त्रिकी**[१] नाम (१०२ चित्रम्) सा उत्तरान्त्रिक्यास्तनुतरा बृहदन्त्रस्य शेषार्द्धं गुदसहितमाप्याययति। तस्याः (क) आद्यशाखा वामा बृहदन्त्रिका नाम, सा मध्यमया बृहदन्त्रिकया धनुर्वद्वक्रीभूय मिलिता बृहदन्त्रबन्धन्यां प्रसृतैः शाखाप्रतानैः बृहदन्त्रस्य मध्यान्तभागौ पुष्णाति। तस्याः (ख) मध्यशाखास्तु द्वित्रसंख्याः गुदोण्डुके प्रसृताः। (ग) अन्त्यशाखा पुनःउत्तरगुदान्त्रिका नाम, सा उत्तरगुदमभिप्रीणाति।

सर्वाश्च आन्त्रिक्यो धमन्यो यथासम्भवं शाखाप्रतानैः परस्परं मिलिता अन्त्रमूलेषु धमनीचक्राणि आरचयन्ति बहुशः।

(४) अथ मध्यमे अधिवृक्किन्यौ[२] नाम काण्डशाखे महाधमन्याः पार्श्वयोः सम्भूय वृक्कयोः शिखरस्थौ अधिवृक्कौ[३] सङ्गते। ते उत्तराभ्या-मधराभ्यां च अधिवृक्किनीभ्यां संगत्य धमनीचक्रमारचयन्ति अधि-वृक्कपोषणाय।

(५) द्वे चापरे तदधस्तात् तादृश्यौ एव वृक्कौ संप्राप्ते। तयोश्च शाखा-द्वयमधिवृक्कौ प्रसृते—ते अधरे अधिवृक्किन्यौ[४] नाम।

---

१। Inferior Mesenteric. २। Middle Suprarenal. ३। Suprarenal Bodies.
४। Side Branches of Suprarenal Artery.

(६) अथान्ये महाधमन्यास्तनुदीर्घे काण्डशाखे तिर्य्यगधोगत्या पुंसो वृषणौ संप्राप्ते, ते अनुवृषणिके[1] नाम। स्त्रियास्तु त एव बीजकोषौ तर्पयतः—अनुबीजकोषिके नाम।

ता एतास्तिस्रो युग्मा आशयानुगा धमन्यः।

अथ परिसरीयाः काण्डशाखा उच्यन्ते। ताश्च—द्वे अधरे महाप्राचीरिके, अष्टौ अनुकटिकाः, एका त्रिकमध्या चेति। तत्र—(१०० चित्रम्)

(१) अधरे महाप्राचीरिके[2] महाधमन्याः महाप्राचीराधः प्रसृते ऊर्द्धतमे शाखे। (ते क्वचित् अर्द्धोदरिकाया अधःशाखातः सम्भवतः।) तयोः पूर्वोक्ताभ्यां महाप्राचीरोत्तराख्य-धमनीभ्यां शाखाप्रतानैः परस्परसम्बन्धो महाप्राचीरायाः सम्यक् पोषणाय।

द्वे चानयोः पार्श्वोत्थिते शाखे अधिवृक्कौ अनुगते, ते उत्तरे अधिवृक्किन्यौ नाम।

(२) अनुकटिका[3] नाम एकैकतश्चतस्रः काण्डशाखाः कटिकशेरुकानां पुरतः प्रसृताः कटिपेशीरौदर्य्यपेशीश्च पुष्णन्ति। ताश्च उदरमुभयतः समागत्य मध्यरेखोपकण्ठे परस्परमनुसंगताः शाखाप्रतानैः।

(३) त्रिकमध्या[4] नाम एकाकिनी धमनी महाधमन्याः पृष्ठतः सम्भूय त्रिकानुत्रिकयोरुत्सङ्गे मध्यरेखायां प्रसृता अनुत्रिकपुरःस्थं क्षुद्र खगाण्डाकारं ईडापिङ्गलयोर्मूलस्थं नाडीकन्दं गुदञ्च पुष्णाति। सेयं महाधमन्या विभागस्थानात् पूर्वं सम्भूता अधस्तनी शाखा।

ता एता एकादश परिसरीया धमन्यो महाधमनीप्रभवा व्याख्याताः।

अथ चरमशाखाः।

औदर्य्यौ महाधमन्या विभागसमुत्थे महाशाखे द्वे—**अधिश्रोणिके साधारण्यौ** नाम (१०० चित्रम्)। विभागश्च चतुर्थकटिकशेरुकायाः पुरस्ताद्वामतश्चेत्यवोचाम। दक्षिणपश्चिमतश्च तयो र्द्वयेते अधरमहासिरायाः काण्डसिरे समानसंज्ञे। पुरश्च तयोर्द्वयो वृक्काभ्यां विनिर्गते मूत्रवहे स्रोतसी गवीन्यौ नाम, क्षुद्रान्त्राणि च।

१। Testicular. २। Inf. Phrenic. ३। Lumbar Arteries. ४। Middle Sacral.

[ १०२ चित्रम् ]

# अन्त्रगता धमन्यः सशाखाः।




म—महाधमनी।

वृ १—वृहदन्त्रम् ( आरोहिभागः )

वृ २— ,, ( मध्यभागः )

वृ ३— ,, ( अवरोहिभागः )

उ० आ०—अधरान्त्रिकी धमनी।

१क। २क। ३क—उत्तरान्त्रिक्या धमन्या अन्त्रगाः शाखाः।

अ१। अ२। अ३—अधरान्त्रिक्या धमन्या गुदान्तिकाः शाखाः।

( To face p. 114 )

एते च महाशाखे त्रिकपृष्ठवंशीयसन्धानमुभयतो द्वयार्द्वयोरग्रशाखयोर्विभज्येते। तयोर्वहिर्मुखं प्रसृते शाखे अधिश्रोणिके बाह्ये नाम। वस्तिगुहान्तरधःप्रसृते तु अधिश्रोणिके आभ्यन्तरे नाम। तासां चतसृणां मूलधमनीनां काण्डशाखेति संज्ञा पारिभाषिकी। तत्र—

(१) **अधिश्रोणिका बाह्या**[१] नाम महाधमन्याः काण्डशाखा (१०३ चित्रम्) तद्विभागदेशादारभ्य जघनोदरे बहिस्तिर्य्यक् प्रसृता वंक्षणिकाख्यस्नायुरज्जुं यावदभिगता। ततश्च वंक्षणदरीविनिर्गता सैव **औवीं-धमनी**—त्युच्यते। सेयं त्रिक-पृष्ठवंशोपकण्ठे कटिलम्बिन्यादिपेशीः लसीका-ग्रन्थींश्चत नुशाखाभिः पुष्णन्ती वंक्षणदरीमूले स्थूलतरं शाखाद्वयमर्पयति। ते—अधरा औदरिकी, गम्भीरजघनिका चेति—संज्ञे।

तयोराद्या अधरा औदरिकी नाम धमनी तिरश्चीनगत्या उदरपरिसरं निर्भिद्य उदरदण्डिकाख्यपेश्याः कञ्चुकान्तःप्रविष्टा पूर्वोक्तया उत्तरौदरिकाख्य-धमन्याः शाखाप्रतानैः सह धमनीचक्रमारचयति, प्रदत्ते च फलकोषगामिनीं प्रशाखाम्। अन्त्या गम्भीरजघनिका नाम धमनी पुनस्तिरश्चीन-गत्या जघनचूडां प्रति गता उदरच्छदां चरमां नाम पेशीं निर्भिद्य पश्चात् प्रसृता क्रमेण कटिनितम्बोदरीयैः शाखाप्रतानै स्तद्देशीय-धमनीभिः सह चक्राण्यारचयन्ति।

(२) **अधिश्रोणिका आभ्यन्तरी**[२] नाम काण्डशाखा तु (१०३ चित्रम्) महाधमन्या विभागदेशादारभ्य जघनकपालाधस्ताद् गृध्रसीद्वारं यावत् प्रसृता वस्तिगुहायां अङ्गुलमात्रं दृश्यते। विभज्यते च सा तत्र द्वयोः शाखयोः पुरःपश्चिमगयोः।

तयोः पुरःशाखातः प्रसूताः प्रशाखाः पुंसः षट् सप्त वा, स्त्रियास्तु सप्त। तद्यथा—उत्तरा वस्तिगा, अधरा वस्तिगा (स्त्रियास्तु अनुयोनिका), मध्यमा गुदान्तिका, गुदोपस्थिका, अनुगर्भाशया, श्रोणिवंक्षणिका, अधरा नितम्बिनी चेति।

तासामनुशाखाभिराप्याय्यन्ते वस्तिगुहान्तरीयाः मूलाधारचतुरस्रस्थाश्च विशेषाः। पश्चिमशाखातः प्रसूताः पुनः—कटिश्रोणिका, त्रिकपार्श्विकी,

---

१। External Iliac. २। Internal Iliac or Hypogastric.

उत्तरा नितम्बिनी चेति शाखाः, तासां चानेकाभिरनुशाखाभिराप्याय्यन्ते-कटि-त्रिकनितम्ब सम्बद्धाः पेश्यः प्राधान्येन ।

इदं चात्र स्मर्त्तव्यम्। इयमेव अधिश्रोणिका आभ्यन्तरी नाम धमनी गर्भस्थशिशोः शरीरे स्वशाखाभ्यां संवाहिनी-संज्ञक-धमनीभ्यां मातुरमरां प्रति रक्तमभिवहति, द्विगुणस्थूला च सा तदानीं तत एव हेतोः। प्रसूतस्य तु त एव धमन्यौ शुष्कप्राये संवाहिन्यौ वस्तिरज्जुके भवतः ।

अथासां प्रशाखाधमनीनां विस्तारो—यथा—( १०३ चित्रम् )

( क ) उत्तरा वस्तिगा[१] नाम धमनी वस्तिं, शुक्रवहे स्रोतसी, गवीन्यौ च पुष्णाति अनुशाखाप्रतानैः ।

( ख ) अधरा वस्तिगा[२] नाम धमनी पुंसो वस्तिं, पौरुषग्रन्थिं, शुक्राधारिके च पुष्णाति। सैव—स्त्रिया अनुयोनिकाख्या वस्तिं योनिं च तर्पयति अनुशाखाभिः ।

( ग ) मध्यमा गुदान्तिका[३] नाम धमनी मध्यगुदं पायुं च प्रीणाति ।

( घ ) गुदोपस्थिका[४] नाम गुदोपस्थादिपोषणी चरमप्रशाखाभूता धमनी गृध्रसीद्वारेण निर्गत्य कुकुन्दरपिण्डोत्सङ्गस्थेन स्नायुमयमार्गेण, स्वनामिकया नाड्या सिरया च सह मूलाधारचतुरस्रं प्रविष्टा। तस्याः काश्चन अनुशाखाः तद्देशस्थासु पेशीषु प्रविष्टाः। अपरास्तु अधरा गुदान्तिका, मूलाधारिणी, मूत्रस्रोतोमूलिका, मूत्रस्रोतोऽनुगा, शिश्नपृष्ठिका, शिश्नमांसगा चेति षट् स्वनाम-व्याख्याताः। स्त्रियास्तु ता एव तथा, किन्तु मूलाधारिणी भगोष्ठयोः, शिश्नगे च भगशिश्निकां प्रविष्टे—इति विशेषः। तासां च षण्णामाद्ये अनुशाखे उत्ताने, चरमास्तु चतस्रो गम्भीराः त्रिकोणप्रावरण्याः पूर्वोक्तायाः स्तरद्वयान्तराले प्रसृताः इति स्मर्त्तव्यम् ।

( ङ ) अनुगर्भाशया[५] नाम धमनी स्त्रिया एव। सा गर्भाशयस्य एकैकतः कूर्चाकाराभिरनुशाखाभिः प्रसृता। सेयं तत्पार्श्वीयाया अनुवीजकोषिकाख्यधमन्याः

---

१। Sup. Vesical. २। Inf. Vesical. ३। Middle Haemorrhoidal. ४। Internal Pudendal. ५। Uterine.

( १०३ चित्रम् )

## महाधमन्याः श्रोणिगुहान्तरीयाः शाखाः




गु—गुदम् । क ५—५मी कटिकशेरुका । द—उदरदण्डिका पेशी ।

१ अधिश्रोणिका साधारणी धमनी

२ ,, बाह्या ,,

३ ,, आभ्यन्तरी ,,

४ तस्याः पुरःशाखा ।

५ तस्याः पश्चिमशाखाः ।

६।७।८।९—वस्तिगुदगा धमन्यः । कटित्रिकिणीसंज्ञा नाड्यः ।

१०—श्रोणिवंक्षणिका, अधरा नितम्बिनी चेति चरमशाखाद्वयम् ।

( To face p. 116)

अनुयोनिकायाः, स्वनामिकाया अपरायाश्च प्रशाखानुशाखाभिर्धमनीचक्रमारचयति परितो योनिं गर्भाशयं बीजकोषौ च। तासां च धमनीनां सर्वासामपि विशेषेण आयतनवृद्धि र्दृश्यते धृतगर्भायां नार्य्यामिति विशेषः।

(च) श्रोणिवंक्षणिका[1] नाम धमनी श्रोणिगवाक्षेण निर्गत्य वंक्षणसन्धिं प्रतिगता। सा वस्तिगुहान्तः वस्तिं, जघनोदरं, भगास्थिसन्धानं चानुशाखाभिः पुष्णाति। वहिश्च वस्तिगुहातः वंक्षणदेशस्थाः पेशीः, वंक्षणसन्धिञ्च।

(छ) अधरा नितम्बिनी[2] नाम धमनी अधिश्रोणिकाया आभ्यन्तर्य्याः पुरःशाखाप्रभवा चरमप्रशाखा। सा गुदवस्त्यादीन् श्रोणिगुहान्तः, पार्श्वपृष्ठस्थाः पेशीश्च पुष्णाति प्राधान्येन। सेयं वस्तिगुहान्तः काभिश्चिदनुशाखाभिः वस्तिं, गुदं, शुण्डिकायाः पेशीश्च सन्तर्प्य गृध्रसीद्वारेण विनिर्गता नितम्बपिण्डिकां गुर्वीं ऊरुप्रसारण्याद्याश्च पेशीरभिव्याप्नोति शाखाप्रतानः।

ता एता आभ्यन्तरानुश्रोणिकायाः पुरःशाखाभवा धमन्यः। तस्याः पश्चिमशाखाभवा धमन्यस्तु तिस्र एव। तद्यथा—(१०३ चित्रम्)

कटिश्रोणिका[3] नाम धमनी वस्तिगुहान्तरेव तिष्ठन्ती दीर्घां कटिलम्बिनीं, कटिचतुरस्रां श्रोणिपक्षिणीञ्च पेशीं पुष्णाति अनुशाखाभिः। तर्पयति च तस्या अनुशाखा पृष्ठवंशान्तःप्रविष्टा 'सुषुम्नाचामर'[4]मपि।

त्रिकपार्श्विका[5] नाम धमनी उत्तराधराभ्यामनुशाखाभ्यां त्रिकास्थिविवराणि अनुप्रविश्य तदन्तःस्था नाडीः शाखाप्रतानैः सन्तर्प्य त्रिकपृष्ठे वहिर्गता तद्देशीयाः पेशीस्त्वचश्च पुष्णाति।

उत्तरा नितम्बिनी[6] नाम धमनी चरमप्रशाखाभूता उत्तानगम्भीराभ्यामनुशाखाभ्यां नितम्बपिण्डिकाख्याः पेशीः, त्रिक-पृष्ठदेशं, वंक्षणसन्धिञ्च तर्पयति। तस्या अपरा अनुशाखा जघनकपालमनुप्रविष्टा अस्थिपोषणाय।

ता एता मध्यकायधमन्यः सविस्तरं व्याख्याताः।

इति पञ्चमोऽध्यायः।

---

१। Obturator. २। Inf. Gluteal. ३। Ileo-Lumber. ४। Cauda Equina. ५। Lateral Sacral. ६। Superior Gluteal.

# षष्ठोऽध्यायः ।

अथातः ऊर्द्ध्वाधःशाखाधमनीवर्णनीयमध्यायं व्याख्यास्यामः ।

इह खलु ऊर्द्ध्वाधःशाखाधमनीनां सत्यपि बहुधा सादृश्ये न सर्वथा सारूप्यं मन्तव्यम्, ऊर्द्ध्वाधःशाखयो निर्माणभेदात्, सन्निवेशवैलक्षण्याच्च । तस्मात् ताः पृथग् विभज्य वर्णनीयाः ।

## अथ ऊर्द्ध्वशाखाधमन्यः ।

सर्वा एव तावदूर्द्ध्वशाखाधमन्यः अक्षाधराख्य-स्थूलधमन्योः सम्भूताः । ते च महाधमन्याः साक्षात् परम्परया वा सम्भूय प्रथमपर्शुकयो र्बहिर्धारां यावत्तथासंज्ञे, अग्रतश्च कक्षयोरन्तः कक्षाधरे नाम इत्यवोचाम । एकैका च कक्षाधरा एकैकस्मिन् बाहौ प्रविष्टा बाहवी नाम धमनी भवति, मूलं च सा सर्वासां बाहुधमनीनाम् ।

## अथ कक्षाधरा ।

या खल्विह ग्रीवामूले अक्षाधरा नाम महाधमन्याः काण्डशाखा, सैव वक्रीभूय कक्षादरीं प्रविष्टा प्रथमपर्शुकाया बहिःसीमामतिक्रम्य गुर्व्या अंसाधरिकाख्यपेश्या अधःसीमां यावत् **कक्षाधरा**[1]—संज्ञां लभते ( १०४ चित्रम् ) । सा कक्षादर्य्यां उरश्छदाख्यपेश्योः कण्डराभ्यां पुरश्छादिता, स्वनामिकाया धमन्याः पार्श्वस्था कक्षानुगां नाडीप्रवेणीं निर्भिद्य बाहुमूले प्रसृता । तस्याः षट् शाखाः ऊर्द्ध्वाधःक्रमेण, अंससन्धिमुरःपार्श्वं च प्रतिगता । ताः ऊर्द्ध्वोरस्का, अंसोरस्का, दीर्घोरस्का, अंसकपालिनी, अंसवेष्टनिका अग्रिमा पश्चिमा चेति ।

ऊर्द्ध्वोरस्का[2] नाम धमनी कक्षाधराया ऊर्द्ध्वतमा शाखा ह्रस्वतन्वी, सा उरश्छदाख्य-पेशीद्वयस्य पोषणी ।

अंसोरस्का[3] नाम धमनी कक्षाधराया ह्रस्वस्थूला अक्षशाखा, या द्वाभ्यामंसगाभ्यां प्रशाखाभ्यामंसकूटमंसच्छदां पेशीञ्च पुष्णाति, द्वाभ्यां च उरोगाभ्यामक्षाधरिकाख्यां पेशीमक्षकोरःसन्धानमुरश्छदाख्यपेशीद्वयम् च । अपराश्च तस्याः प्रशाखाः कक्षादरीस्थानां ग्रन्थ्यादीनां पोषण्यः ।

---

१ । Axillary Artery. २ । Sup. Thoracic. ३ । Thoraco-acromial

( १०४ चित्रम् )

# कक्षाधरा, बाहवी च धमनी सशाखा ।




* पृ—कटिपार्श्वच्छदा

१ । उरःकर्णमूलिका पेशी, अक्षकाधरा पेशी च

२ । कक्षाधरा धमनी

३ । उरश्छदा पेशी गुर्वी । ४ सैव लघ्वी

५ । अंसाधरिका पेशी ६ । अन्तःप्रकोष्ठिका नाडी

( To face p. 118 )

दीर्घोरस्का[१] नाम धमनी कक्षाधराया दीर्घतमा शाखा उरोगामिनी। सा उरश्छदाख्यपेशीद्वयमग्रिमारित्राञ्च पेशीं प्रशाखाभिः पुष्णन्ती उरःपार्श्वे अन्तःस्तनिकादिधमनीभिः सह चक्रमारचयति अंसकक्षयोश्च अंसगाभिर्धमनीभिः। स्त्रियान्तु तस्या एव प्रशाखा बहिःस्तनिका नाम स्तनपोषणाय प्रसृता, अन्तःस्तनिकया सह धमनीचक्रमारचयति स्तनं परितः।

अंसकपालिनी[२] नाम धमनी कक्षाधरायाः स्थूलतमा शाखा, या कक्षापथेन अंसफलकस्य अधःकोटिं प्रति प्रसृता। सा अंसोरस्कादिभिरंसधमनीभिश्चक्रारचनी अंसकपालिकां परितः। तस्या अंसपृष्ठिका नाम प्रशाखा अंसकपालिकापृष्ठं प्रतिगता।

अंसवेष्टनिका अग्रिमा पश्चिमा[३] चेति धमन्यौ कक्षाधरायाः शेषांशतः सम्भूय प्रगण्डास्थिग्रीवायाः पुरः पश्चाच्च वक्रीभूय प्रसृते, अंससन्धिमंसच्छदाञ्च प्रविशतः। ताभ्यां परस्परं गम्भीरप्रगण्डिकाख्यधमन्या च शाखाप्रतानैर्मिलिताभ्यामारच्यते धमनीचक्रमंसचक्रं परितः।

दृश्यते च क्वचिदपरापि क्षुद्रशाखा कक्षाधरायाः अन्तःपार्श्वे—पार्श्वोरस्का नाम, सा उरःपेशीनां पोषणो अनिश्चितावस्थाना।

ता एताः कक्षाधरायाः शाखा व्याख्याताः।

## अथ बाहवी धमनी।

कक्षाधरैव अंसाधरिकाख्यपेशीकण्डरामतिक्रम्य बाहुं प्रविष्टा **बाहवी[४] नाम धमनी** भवति, कूर्परसन्धिं यावत् (१०४।१०५ चित्रयोः)। सेयं कक्षायां काकोष्ठिकायाः पेश्याः बाहौ च द्विशिरस्कायाः पेश्याः अन्तःसीम्नि वर्त्तते, सह सहचरीभ्यां सिराभ्याम्। तस्याश्चान्तःसीम्नि दृश्या अन्तर्बाहुका[५] नाम सिरा, तिस्रश्च प्रकोष्ठिकाख्या नाड्यः। तासां मध्यप्रकोष्ठिका नाम नाडी ऊर्द्ध्वभागे धमन्या बहिःसीम्नि स्थिता, क्रमेण तामुल्लङ्घ्य अधरार्द्धे तदन्तःसीम्नि दृश्या। पश्चिमतश्च धमन्याः तच्छाखैव गम्भीरप्रगण्डिका नाम बहिःप्रकोष्ठिकाख्यनाडीसहिता, त्रिशिरस्का नाम पेशी च। कूर्परसन्धेः पुरस्तु

१। Lateral Thoracic. २। Subscapular. ३। Anterior and Posterior Circumflex. ४। Axillary Artery. ५। Basilic Vein.

तिर्य्यग्गताऽसौ धमनी द्विशिरस्काख्यपेश्याः कूर्परपट्टिकाख्यया तिरश्चीन-कण्डराबन्धन्या सन्धार्यते—इति व्यतिकरोऽस्या धमन्या व्याख्यातः।

अथास्याः पार्श्वोत्थिताः शाखाः सप्ताऽष्टौ वा, अग्रशाखे च द्वे। तत्र—

गम्भीरप्रगण्डिका[1] नाम स्थूलदीर्घा आद्यशाखा बहिःप्रकोष्ठिकाख्यनाड्याः सहचरीभूय प्रगण्डास्थ्नः पश्चिमस्थां तिरश्चीनसीमामाश्रित्य सर्पगत्या प्रगण्डं परिवेष्टयन्ती तद्बहिःसीम्नि प्रसृता। सेयं शाखाद्वयेनाऽत्मानं विभज्य पुरः पश्चाच्च कूर्परसन्धेः धमनीचक्रमारचयति सह आरोहिण्या बहिःकूर्पराख्यधमन्या। अपरं चास्याः शाखाद्वयं त्रिशिरस्कां पेशीं प्रगण्डास्थिनलकं च पुष्णाति।

प्रगण्डपोषणी[2] नाम बाहुधमन्या द्वितीया शाखाऽपि प्राधान्येन प्रगण्डास्थ्नः पोषणी।

कूर्परगा उत्तरान्तरा[3] नाम शाखा बाहुधमन्याः ऊर्द्ध्वभागसम्भूता कूर्परसन्धेः पश्चिमान्तःसीम्नि प्रसृता। सा अन्तःप्रकोष्ठीयधमन्याः कूर्परान्तरां पृष्ठारुहां नाम प्रशाखामभिगच्छति धमनीचक्रारचनाय।

कूर्परगा अधरान्तरा[4] नाम शाखाधमनी कूर्परसन्धेः पृष्ठतः तिर्यक्प्रतिगता धमनीचक्रारचनाय। तया च पुरस्तान्मिलिता कूर्परान्तरा अग्रारुहा नाम अन्तःप्रकोष्ठीयधमन्याः प्रशाखा।

पेशीगा नाम बाहुधमन्यास्त्रिचतुराः शाखाः काकोष्ठिकां द्विशिरस्कां कूर्परद्वारिकां च पेशीं पुष्णन्ति।

अथ प्रकोष्ठधमन्यौ।

अग्रशाखे पुनर्बाहुधमन्या द्वे—बहिःप्रकोष्ठीया अन्तःप्रकोष्ठीया चेति। बाहुधमनी हि कूर्परसन्धेः पुरःस्ताद् गम्भीरप्रविष्टा विभज्यते तयोः शाखयोः।

अथ बहिःप्रकोष्ठीया धमनी।

**बहिःप्रकोष्ठीया**[5] नाम (१०६।१०७ चित्रयोः) बाहुधमन्या बाह्यशाखा, दीर्घायाः या करोत्तानन्याख्यपेश्या अन्तःसीमामनुवर्त्तते अङ्गुष्ठमूलं यावत्।

---

१। Arteria Profunda Brachii. २। Nutrient. ३। Superior Ulnar Collateral. ४। Inferior Ulnar Collateral. ५। Radial Artery.

[ १०५ चित्रम् ]

## बाहवी धमनी तच्छाखाश्च ।




( To face p. 120 )

ततोऽसौ मणिवन्धबहिःसीम्नि तिर्य्यक् पृष्ठतः प्रसृता अङ्गुष्ठमूले दीर्घाया अङ्गुष्ठापकर्षण्याख्यपेश्याः अङ्गुष्ठप्रसारण्योः पेश्योश्च कण्डराभिश्छादिता, अङ्गुष्ठतर्जनीमूलशलाकयोरन्तराले पश्चिमशलाकान्तरालाख्यां पेशीं निर्भिद्य करतलं प्रविष्टा। करतले च सैव करतलधानुषीं गम्भीरां नाम धनुर्वक्रां धमनीं निर्म्मिमीते।

अथास्याः मुख्याः प्रशाखाः पञ्च, पेशीगाश्च पञ्चषाः। तद्यथा—

आरोहिणी बहिःकूर्परिका[१] नाम आद्यप्रशाखा कूर्परसन्धेर्वहिसीम्नि समुत्थिता। सा गम्भीरप्रगण्डिकाख्यधमन्याः बहिःकूर्परगया अनुशाखया सह मिलिता धमनीचक्रमारचयति कूर्परसन्धे र्बहिःसीम्नि।

बहिर्मणिवन्धीया अग्रिमा पश्चिमा[२] चेति प्रशाखे ऊर्द्ध्वं मणिवन्धात्तद्बहिः-सीम्नि समुत्थिते। ते मणिवन्धस्य पुरःपश्चाच्च धमनीचक्रमारचयतः, सह तादृशीभ्यामन्तर्मणिवन्धीयाख्यधमनीभ्याम्।

धानुषीयोजनी उत्ताना[३] नाम धमनी मणिवन्धपुरोभागे समुत्थाय अधः-प्रसृता। सा करतले उत्तानया करतलधानुष्या संयुज्यते।

शलाकापृष्ठिका प्रथमा[४] नाम धमनी बहिःप्रकोष्ठीयधमन्या अङ्गुष्ठमूल-पृष्ठभागात् समुत्थिता। सा अङ्गुष्ठपृष्ठिका-तर्जनीपृष्ठिकाख्ययोरनुशाखयो-र्विभज्य प्रसृता।

पेशीगास्तु पञ्चषाः प्रशाखाः प्रकोष्ठबहिःसीमस्थासु पेशीषु विशेषतः प्रसृताः।

करतलधानुषी गम्भीरा[५] पुनर्बहिःप्रकोष्ठीयधमन्याश्चरमो भागः करतलं प्रविष्टः। तद्विशेषाः करधमनीवर्णने वक्ष्यन्ते।

अथ अन्तःप्रकोष्ठीया धमनी।

**अन्तःप्रकोष्ठीया**[६] नाम वाहव्या धमन्या शाखा अन्तःप्रकोष्ठीयपेशीभिः परिवृता पूर्वार्द्धे (१०६।१०७ चित्रयोः)। सा कूर्परसन्धेरधः पुरोभागस्थाद्

---

१। Radial Recurrent. २। Volar Radial Carpal and Dorsal Radial Carpal. ३। Superficial Volar. ४। Dorsal Metacarpal. ५। Deep Volar Arch. ६। Ulnar Artery.

बाह्व्या धमन्या विभागस्थानादारभ्य प्रकोष्ठान्तःसीमानुक्रमेण मणिबन्धान्तं गत्वा करतलं प्रविष्टा । तत्र च धनुर्वद्वक्रीभूय सैव उत्तानाकरतलधानुषी नाम धमनी सम्पद्यते, बहिःप्रकोष्ठायाः धानुषीयोजन्याख्यया शाखया मिलिता ।

अथास्याः प्रशाखाः षट् मुख्याः, पञ्चषाश्च पेशीगाः । तद्यथा—

( १-२ ) कूर्परान्तरिके[१] नाम आरोहिण्यौ धमन्यौ द्वे कूर्परान्तःसीम्नि पुरः पश्चाँचोर्द्ध्वमुखं प्रसृते । तयोराद्या अग्रारुहा, द्वितीया च पृष्ठारुहा नाम । ते बाह्व्या धमन्याः कूर्परगाभ्यां शाखाभ्यां धमनीचक्रमारचयतः कूर्परसन्धेरन्तःसीमां परितः ।

(३) अरत्निमध्या साधारणी[२] नाम स्थूलतमा प्रशाखा बाह्व्या धमन्या विभागस्थानादर्द्धाङ्गुलमात्रेण सम्भूता । सा अङ्गुलीसंकोचन्योः पेश्योर्मध्ये गम्भीरतरं प्रविष्टा प्रकोष्ठास्थ्नोरन्तराले प्रसृता द्वयोः शाखयोर्विभज्यते । तयोरेका प्रकोष्ठान्तरालाख्यकलायाः पुरस्तान्मणिबन्धं प्रति प्रसृता, सा अरत्निमध्या अग्रिमा नाम । अपरा तां कलां निर्भिद्य पश्चिमतो मणिबन्धं प्रति गता, सा अरत्निमध्या पश्चिमा नाम । तयो रेकैकस्यास्त्रिविधा अनुशाखाः— सन्धिगाः, मांसगाः, अस्थिगाश्चेति ।

( ४—५ ) अन्तर्मणिबन्धीये[३] नाम द्वे प्रशाखे मणिबन्धस्य पुरः पश्चाच्च प्रसृते तदन्तःसीमगे । ते तादृशीभ्यां बहिःप्रकोष्ठीयायाः शाखाभ्यां धमनीचक्रमारचयतः ।

( ६ ) धानुषी योजनी गम्भीरा[४] नाम प्रशाखा करमूलान्तःसीम्नि गम्भीरं प्रविष्टा गम्भीरया करतलधानुष्या संयुज्यते ।

करतलधानुषी उत्ताना नाम धमनी तु अन्तःप्रकोष्ठीयायाश्चरमो भागः करतलं प्रविष्टः ।

### अथ करधमन्यः ।

करधमन्यो हि द्विविधाः करतलीयाः, करपृष्ठीयाश्च । तत्र करतलीयानां मूले द्वे धमन्यौ **करतलधानुषी उत्ताना, गम्भीरा** चेति । तत्र—

---

१ । Anterior and Posterior Ulnar Recurrent. २ । Common Interosseus.
३ । Volar and Dorsal Ulnar Carpal. ४ । Deep Volar Communicating.

# अन्तःप्रकोष्ठीया बहिःप्रकोष्ठीया च धमनी ।

( दक्षिण प्रकोष्ठस्य उत्तानव्यवच्छेदेन दर्शिता )




( To face p. 122 )

**करतलधानुषी उत्ताना**[1] (१०६ चित्रम्) अन्तःप्रकोष्ठीयधमन्या धनुर्वक्रेण प्रान्तभागेन निर्म्मीयते, बहिःप्रकोष्ठीयधमन्या धानुषीयोजन्याख्यया शाखया मिलितेन। सा करतलस्य मध्यभागे दृश्या करतलिकाख्य-कलाकण्डरामात्रेणाऽच्छादिता। तस्याः सम्भूताश्चतस्रः प्रशाखाः तर्जन्यादीनां चतसृणामङ्गुलीनां मूल-शलाकान्तरालेषु प्रसृताः। तासामेकैका अङ्गुलीमूले शाखाद्वयेन विभक्ता सन्निहिताङ्गुलिद्वयपार्श्वयोः प्रसरति। यथा प्रथमा-तर्जनी-मध्यमापार्श्वयोः, द्वितीया—मध्यमाऽनामिकापार्श्वयोरित्येवम्। तर्जनी-बहिःपार्श्वे, अङ्गुष्ठपार्श्वयोश्च प्रसृता गम्भीरकरतलधानुष्याः शाखा अपि दृश्याः। अस्ति च तत्र उत्तानकरतलधानुष्या अपराऽपि शाखा करभदेशं प्रतिगता।

**करतलधानुषी गम्भीरा**[2] नाम धमनी तु (१०७ चित्रम्) कूर्च्चास्थ्नां पुरस्ताद् बहिःप्रकोष्ठीयधमन्याश्चरमेण धनुर्वक्रभागेन निर्म्मिता, अन्तःप्रकोष्ठीयधमन्या धानुषीयोजन्याख्यशाखया मिलितेन। तस्या अङ्गुलि-मूलगाः शाखाः पञ्च। तासु प्रथमा अङ्गुष्ठमूलगा नाम, सा द्विधा विभज्याऽत्मानं अङ्गुष्ठपार्श्वयोः प्रसृता। द्वितीया तर्जनीमूलगा नाम, सा तर्जन्या बहिःपार्श्वमात्रं प्रतिगता। अपरास्तु तिस्रः उत्तानकरलीय-धानुष्यास्तिसृभिः शाखाभिः तर्जन्याद्यङ्गुलीचतुष्टयस्य अन्तरालमूले संयुज्यन्ते। तेभ्यश्च संयोगस्थानेभ्यः करतलमांसं निर्भिद्य पृष्ठतः प्रसृतास्तिस्रः प्रशाखाः योजन्याख्याः, ताभिर्मूलशलाकापृष्ठस्थे धमनीत्रये शोणितमर्प्यते।

द्वित्राश्चाऽस्याः शाखाः मणिबन्धसन्धेः पुरःस्थे धमनीचक्रे प्रविष्टाः।

करपृष्ठीयाः पुनर्धमन्यश्चतस्रो मुख्याः—<u>शलाकापृष्ठिका</u>[3] नाम। तासां प्रथमा बहिःप्रकोष्ठीयधमनीप्रभवा वर्णितपूर्वा। सा अङ्गुष्ठ-पृष्ठे, तर्जनीपृष्ठे तद्बहिःपार्श्वे च द्वित्राभिः शाखाभिः प्रसृता। द्वितीया तृतीया चतुर्थी च शलाकापृष्ठिका मणिबन्धपश्चिमस्थाद् धमनीचक्रात् प्रभवन्ति, तास्तर्जन्याद्यङ्गुली-चतुष्टयस्य अन्तरालेषु दृश्याः। तासामेकैका द्वयोर्द्वयोः शाखयोरात्मानं विभज्य सन्निहिताङ्गुलीपृष्ठपार्श्वयोः प्रसरति।

---

१। Superficial Volar Arch. २। Deep Volar Arch. ३। Dorsal Metacarpal.

एवञ्च अङ्गुष्ठं प्रति एका धमनी ( द्वे वा ) पृष्ठतः, द्वे च तलपार्श्वयोः । अपरासामङ्गुलीनान्तु एकैकां प्रति चतस्रो धमन्यः—द्वे तलपार्श्वयोः, द्वे च पृष्ठपार्श्वयोः । तासां तलपार्श्वगं धमनीद्वयमङ्गुल्यग्रे पुरस्ताद् धमनीचक्रमारचयति, पृष्ठपार्श्वगं धमनीद्वयं तु नखभूमौ । करस्थाः पेश्यादयश्च करतलधानुष्यो मणिबन्धीयधमनीनां च शाखाप्रतानैराप्याय्यन्ते ।

ता एता ऊर्द्ध्वशाखीया धमन्यो व्याख्याताः ।

## अथ अधःशाखीया धमन्यः ।

अधःशाखीयधमनीनां खल्विह मूलम्—और्वी नाम धमनी । नितम्बीयाश्च धमन्यः अधिश्रोणिकाया आभ्यन्तरायाः प्रशाखानुशाखादयः, ताः प्रायेण और्व्या धमन्या जघनगैः शाखाप्रतानैः सह धमनीचक्रमारचयन्ति नितम्बजघनं परितः । ता व्याख्यातपूर्वाः ।

## अथ और्वी धमनी ।

या तावन्मध्यकाये औदर्या महाधमन्याः विभागसम्भूता काण्डशाखा अधिश्रोणिका वाह्या नाम, सैव वंक्षणदरीमुखाद्विनिर्गता **और्वी**[१] **नाम धमनी** सम्पद्यते ( १०८ चित्रम् ) । सा वंक्षणदेशे अन्तःसीम्नि और्व्या सिरया, बहिःसीम्नि च और्व्या नाड्या परिवारिता, प्रच्छादिता च ऊरुमध्ये ऊरुकञ्चुकया । सिराधमन्यौ च तत्र एकस्मिन्नेव सिराकञ्चुके तिष्ठतः । तदन्तःसीम्नि वंक्षणान्तर्द्दृश्यमन्तर्वंक्षणीयं नाम छिद्रं वृषणबन्धनीधरम् ।

सेयं कनिष्ठाङ्गुलीपरिणाहा स्थूलधमनी ऊरुपुरोभागे वंक्षणमध्यविन्दुत आरभ्य तिर्य्यगन्तःसीम्नि प्रसृता, ऊरोरर्द्धाऽधिकं दैर्घ्यमतिक्रम्य च सैव ऊरुसंव्यूहनीं गरिष्ठां नाम पेशीं निर्भिद्य उरुपश्चिमतः प्रसृता । सा पेशीनिर्भेदनानन्तरम् ऊरु-जानुपृष्ठिकेति सञ्ज्ञां लभते ।

अथास्याः षट् शाखा मुख्याः । पञ्चषाश्च गौण्यो मांसगाः । तत्र—

( १ ) <u>उत्ताना औदरिकी</u>[२] नाम शाखा ऊर्वन्तःसीम्नि ऊरुकञ्चुकाया अनुवंक्षणीयछिद्रेण बहिर्गत्य उदरपरिधिमारोहति नाभिदेशं यावत् । तस्याः प्रशाखादय स्त्वचि मेदोधरकलायां लसीकाग्रन्थिषु च वंक्षणस्थेषु प्रसृताः ।

१ । Femoral Artery. २ । Superficial Epigastric.

[ १०७ चित्रम् ]

## अन्तःप्रकोष्ठीया बहिःप्रकोष्ठीया च धमनी।

( दक्षिणप्रकोष्ठस्य गभीरव्यवच्छेदेन दर्शिता )




( To face p. 124 )

(२) उत्तानजघनिका वेष्टनी [१] नाम शाखा जघनधारां प्रतिगता शाखा-प्रतानैः जघनं संवेष्ट्य जघनवंक्षणस्थां त्वचं बहिःप्रावरणीं लसीकाग्रन्थींश्च वंक्षणस्थान् पुष्णाति ।

(३-४) बहिरौपस्थिक्यौ [२] नाम धमन्यौ द्वे—उत्ताना, गम्भीरा चेति । ते ऊर्वन्तःसीम्नि सम्भूय उपस्थस्य बहिर्देशं प्रति तिर्य्यक् प्रसृते । तयोरुत्ताना पुरस्ताद् ऊरुकञ्चुकां निर्भिद्य अनुवंक्षणीयछिद्रेण बहिर्गता, भगास्थिसन्धानं-प्रति प्रसृता । सेयं वस्तिदेशस्य शिश्नाण्डकोषयोश्च त्वचि (स्त्रियास्तु भगोष्ठे) गम्भीरशाखाप्रतानैः प्रसृता । गम्भीरा बहिरौपस्थिकी तु तदधस्तात् तथैव तिरश्चीनं गता, तेष्वेव भागेषु विशेषतश्च औपस्थिकत्रिकोणे गम्भीरतरं प्रसृता ।

(४) **गम्भीरोरुका** [३] नाम स्थूला धमनी (१०८ चित्रम्) और्व्या धमन्याः मूलदेशाद् द्वित्राङ्गुलेन सम्भूय पश्चिमतः ऊर्वन्तःसीम्नि तामेव धमनी-मनुवर्त्तते, निर्भिनत्ति च सा ऊरुसंव्यूहनीं गरिष्ठां नाम पेशीं तद्वत् । तस्या द्वे प्रशाखे ऊरोरन्तर्बहिःसीम्नोः प्रसृते—ऊरुवेष्टन्यौ नाम । तयोरेकैका तिसृषु प्रशाखासु विभक्ता ऊर्द्धाधःस्थाभि र्धमनीभि र्धमनीचक्राणि आरचयन्ति जघनं नितम्बं वंक्षणसन्धिञ्च परितः, पुष्णाति च प्रशाखाभिः काश्चन ऊरुसम्बद्धाः पेशीः । सन्ति च गम्भीरोरुकायाः अपरा अपि प्रशाखाः मांसगाः, तासां त्रिचतुराः ऊरुसंव्यूहन्याख्यपेशीं निर्भिद्य प्रसृताः ।

(५) महाजानुका [४] नाम शाखा और्व्या धमन्याः पश्चिमगमनात् प्राक् सम्भूय जान्वन्तःसीम्नि प्रसृता । सा एकया प्रशाखया जान्वन्तर्द्देशस्थाः पेशीः जानुसन्धिं च पुष्णाति, प्रविशति च शाखाप्रतानैः पुरःस्थैर्धमनीचक्रम् । अपरा तु तस्याः प्रशाखा जान्वन्तरीयां त्वाचनाडीमनुवर्त्तते ।

और्व्या धमन्या मांसगास्तु शाखाः पञ्चषाः ऊर्वन्तःसीमस्थाः पेशी र्विशेषेण पुष्णन्ति ।

---

१। Superficial Iliac Circumflex. २। Exernal Pudendal—Superficial and Deep. ३। Profunda Femoris ४। Highest Genicular (Anastomotica Magna),

## अथ ऊरुजानुपृष्ठिका धमनी ।

**ऊरुजानुपृष्ठिका**[१] नाम औवीं धमन्येव उरुसंव्यूहनीं गरिष्ठां नाम पेशीं निर्भिद्य पश्चात् जानुपृष्ठखाते प्रसृता, जानुपृष्ठिकाख्यपेश्या अधोधारां यावत् ऊरुजानुपृष्ठिकेति संज्ञां लभते (११० चित्रम्)। सेयमन्ते पुरः-पश्चिमजंघिकयो र्धमन्यो र्विभज्यते। तस्याः पश्चिमतो दृश्या जानुपृष्ठिका नाम सिरा, जंघानुगा नाम नाडी च जानुपृष्ठपट्टिकया रक्षिता। तत्पुरःस्थं च ऊर्वस्थ्नोऽधःप्रान्तपृष्ठं जानुसन्धिपृष्ठं च मेदःपरिवृतम्। तदुभयतश्च जंघापिण्डिकाख्यपेश्यो र्मूलभागौ।

अथाऽस्या ऊरुजानुपृष्ठिकाया स्त्रिविधाः शाखाः—त्वाचशाखाः, मांसगाः, जानुगाश्चेति।

तत्र त्वाचशाखाः जानुजंघयोः पृष्ठे प्रसृताः। मांसगाः शाखाः द्वित्र-संख्याः ऊर्वन्तःसीम्नि पेशीषु प्रसृताः, अपरे च द्वे शाखे जंघापिण्डिकां प्रविष्टे।

जानुगाः पुनः शाखाः पञ्च। द्वे उत्तरजानुगे, द्वे च अधरजानुगे इति जानुसन्धेर्बाह्यान्तरसीम्नोः प्रसृताश्चतस्रः, एका च मध्यजानुगा जानुकोषं निर्भिद्य जानुसन्धिं प्रविष्टा। ताभिश्च जानुसन्धिं परितो विरच्यते धमनीचक्रम्।

## अथ पुरोजंघिका धमनी।

**पुरोजंघिका**[२] नाम धमनी (१११ चित्रम्) ऊरुजानुपृष्ठिकाया धमन्या अग्रिमा शाखा जंघाऽनुजंघाऽस्थ्नोरूर्द्ध्वप्रान्तयोरन्तराले पुरोगता। सेयमस्थ्यन्तरालस्थकलायाः सम्मुखीना जंघापुरस्तात्तदन्तःसीम्नि गुल्फयो-र्मध्यं यावत् तन्नाम्ना प्रसिद्धा। तदधस्ताच्च पादपृष्ठे सैव पादपृष्ठिकेति संज्ञां लभते।

एषा च पुरोजंघिका नाम धमनी जंघास्थ्नः अन्तःसीम्नि जंघापुरोगाख्यपेश्या भूम्ना समाच्छादिता, तदधःप्रान्तोपकण्ठे त्वक्कलामात्राऽवृता च। सा गुल्फयोर्मध्ये गुल्फस्वस्तिकाऽख्यस्नायोरधस्तात् अङ्गुष्ठाऽङ्गुलीप्रसारणीपेशीनां

१। Popliteal Artery. २। Anterior Tibial.

[ १०८ चित्रम् ]

# और्वी धमनी सशाखा ।




( To face p. 126 )

कण्डराद्वयान्तराले अनुभवयोग्या। अनुवर्त्तते च तां पुरोजंघिका गम्भीरा नाम नाडी, सहचरीभ्यां सिराभ्यां सहिता।

अथास्याः मुख्याः प्रशाखा श्चतस्रः, मांसगाश्च बहवः। तद्यथा—

(१-२) जानुगा अग्रारुहा पृष्ठारुहा[१] च नाम आरोहिण्यौ शाखे जानुपरितःस्थिते धमनीचक्रे पुरः पश्चाच्च मिलिते।

(३-४) गुल्फयोः पुरश्च द्वे प्रशाखे—अग्रिमा अन्तर्गुल्फिका[२], अग्रिमा बहिर्गुल्फिका[३] च नाम। ते अन्तर्गुल्फं बहिर्गुल्फं च प्रति प्रसृते धमनीचक्रद्वयमारचयतः सह बहिर्जंघिकायाश्चरमैः शाखाप्रतानैः। मांसगास्तु शाखाः पुरोजंघिकायाः पार्श्वाभ्यां सम्भूय परितो जंघापेशीषु त्वचि च प्रसृताः।

### अथ पश्चिमजंघिका।

**पश्चिमजंघिका**[४] नाम शाखाधमनी (१०६ चित्रम्) जानुपृष्ठिकायाः पेश्या अधोधारात आरभ्य जंघाऽनुजंघास्थ्नोर्मध्ये जंघापृष्ठान्तःसीम्नि अधोमुखं प्रसृता, अन्तर्गुल्फपार्ष्ण्योरन्तरालं यावत्। सेयं जंघापिण्डिकयाऽच्छादिता, क्रमेण जंघान्तःसीम्नि गुल्फोपकण्ठे त्वक्कलामात्रेण प्रावृता च। सा स्पर्शेनाऽनुभूयते अङ्गुष्ठमूलस्थधमनीवत्।

अथास्याः प्रशाखाः मुख्याः सप्त—तासु प्रधानतमा प्रशाखा बहिर्जंघिका नाम धमनी जंघापृष्ठेवहिःसीम्नि प्रसृता। अपराश्च मांसगा पञ्चषाः। तत्र मुख्याः सप्त यथा—

(१) **बहिर्जंघिका**[५] नाम स्थूलप्रशाखा (१०६ चित्रम्) पश्चिमजंघिकाया मूलदेशात्चतुरङ्गुलाधः सम्भूता किञ्चिद्वक्रीभूय जंघापिण्डिकाया बहिःसीमानुक्रमेण बहिर्गुल्फान्तं गत्वा तत्रैव शाखाप्रतानैः प्रनष्टा। तस्या अनुशाखाः—अनुजंघास्थिपोषणी, कलानिर्भेदिनी, पार्ष्णिपृष्ठगा योजनी, बहिःपार्ष्णिगा, पेशीगाश्च। तासु कलानिर्भेदिनी अस्थ्यन्तरालगां कलां निर्भिद्य जंघायाः पुरस्ताद्बहिःसीम्नि प्रसृता। पार्ष्णिपृष्ठगा योजनी पार्ष्णिपृष्ठोर्द्ध्वदेशे

---

१। Tibial Recurrent—Anterior and Posterior. २। Antirior Internal Malleolar ३। Anterior External Malleolar. ४। Posterior Tibial. ५। Peroneal.

१७

पिण्डिकाकण्डरायाः पुरस्ताद् वक्रीभूय प्रविष्टा। पेशीगाश्च अनुशाखाः पञ्चषा जंघापृष्ठस्थाः पेशीः पुष्णन्ति।

(२) जंघास्थिपोषणी नाम प्रशाखा जंघास्थि प्रविष्टा।

(३) पार्ष्णिपृष्ठगा योजनी नाम प्रशाखा पूर्ववत् पिण्डिकाकण्डरायाः पुरो वक्रीभूय प्रविष्टा, स्वनामिकया पूर्वोक्तया धमन्या चक्रारचनी।

(४) अन्तर्गुल्फिका पश्चिमा नाम प्रशाखा अन्तर्गुल्फपृष्ठे प्रसृता स्वनामिकया अग्रिमधमन्या चक्रमारचयति।

(५) अन्तःपार्ष्णिगाः नाम त्रिचतुराः प्रशाखाः पार्ष्णेरन्तःसीम्नि, पार्ष्णिपृष्ठतः, पादतलमूले च धमनीचक्रमारचयन्ति।

(६-७) पादतलीयसंज्ञे प्रशाखे द्वे—पादतलीया आन्तरा, धानुषी चेति। तयोराद्या पादान्तःसीम्नि पेशीषु त्वगादिषु च शाखाप्रतानैः प्रसृता। पादतलीया धानुषी तु पादान्तःसोऽन्येव पार्ष्णिनौनिभयोः सन्धानदेशाधः सम्भूय तिर्य्यग् बहिर्गता पुनर्वक्रीभूय अन्तर्मुखी भवति। सा पादतलधमनीषु वर्णनीया।

### अथ पादधमन्यः।

ता द्विविधाः—पादपृष्ठगाः, पादतलगाश्च। तासां पादपृष्ठगासु प्रधाना पादपृष्ठिका नाम धमनी, पादतलगासु तु पादतलीया धानुषी। उभेअपि ते उद्दिष्टपूर्वे।

### अथ पादपृष्ठिका।

**पादपृष्ठिका**[1] नाम धमनी (११० चित्रम्) पुरोजंघिकायाश्चरमो भागः पादपृष्ठगतः। पुरोजंघिका हि गुल्फयो मध्ये पुरस्ताद् गुल्फस्वस्तिकाख्यस्नायु-पट्टिकयाऽऽच्छादिता तदधःस्थेन स्नायुसुरङ्गापथेन पादपृष्ठे विनिर्गता। सैव अङ्गुष्ठमूलशलाकामूले पादपृष्ठिकेति संज्ञां लभते। ततश्च उत्तरशलाकान्तरालां पेशीं निर्भिद्य पादतलं प्रविष्टा सा पादतलगा गम्भीरा नाम धमनी भवति।

व्यतिकरश्च तस्याः गुल्फान्तरालस्थायां स्नायुसुरङ्गायामीदृशः। तत्र धमन्या अन्तःसीम्नि दृश्येते जंघापुरोगायाः अङ्गुष्ठप्रसारण्याश्च पेश्याः कण्डरे।

---

१। Dorsalis Pedis.

[ १७ चित्रम् ]

## ऊरुजानुपृष्ठिका धमनी, पश्चिमजंघिका च सशाखा ।




( To face p. 128 )

वहिःसीम्नि तु अङ्गुलीप्रसारण्या दीर्घाया: पादविवर्त्तन्या तृतीयायाश्च पेश्याः सम्मिलितकण्डरा। धमनीसहचरी च तत्र पुरोजंघिका गम्भीरा नाम नाडी, सिराद्वयी च।

अथास्याश्चतस्रः शाखाः पादपृष्ठे प्रधानभूताः,—वहिःकूर्चिका, अन्तः-कूर्चिका, पादपृष्ठगा धानुषी, अङ्गुष्ठपृष्ठिका चेति।

तासां वहिःकूर्चिका नाम शाखा नौनिभास्थ्नः पुरोभागं तिर्य्यगुल्लंघ्य बहिःसीम्नि प्रसृता वहिर्गुल्फीयेन धमनीचक्रेण, पादपृष्ठगाया धानुष्याः शाखाप्रतानैश्च मिलिता।

अन्तःकूर्चिका नाम शाखा तु प्रायेण युग्मा गुल्फ-पादान्तःसीम्नोः शाखा-प्रतानैः प्रसृता।

पादपृष्ठगा धानुषी नाम धनुर्वक्रा ह्रस्वप्रशाखा पादवहिःसीम्नि प्रसृता, पूर्वया शाखया मिलिता च। तस्याश्चतस्रः प्रशाखाः पञ्चानामङ्गुलीमूलशलाका-नाम्अन्तरालेषु प्रसृताः। तासामङ्गुष्ठकनिष्ठाभिगे अनुशाखे प्रत्येकं तिसृषु तनुशाखासु विभज्येते। अपरे च द्वे द्वयोर्द्वयो स्तनुशाखयोः। ताश्च तनुशाखाः पादाङ्गुलीनां पृष्ठपार्श्वेषु प्रसृताः—अङ्गुलीपार्श्विकाः पृष्ठगा नाम।

एवं च तासां द्वे द्वे एकैकस्या अङ्गुल्याः पृष्ठपार्श्वयोः प्रसृते नखभूमौ सूक्ष्मप्रतानै र्धमनीचक्राणि रचयतः।

अङ्गुष्ठपृष्ठिका तु स्वनामव्याख्याता पादपृष्ठिकाप्रभवा।

## अथ पादतलधानुषी।

**पादतलधानुषी**[1] नाम धमनी (११२ चित्रम्) पश्चिमजंघिकाया अग्रप्रशाखयोर्मध्ये बहिर्मुखी। सा पादान्तःसीम्नि पार्ष्णि-नौनिभाख्ययोः कूर्चास्थ्नोः सन्धानाधस्तात् सम्भूय, तिर्य्यक् पुरस्ताद्बहिश्च कनिष्ठामूलशलाका-मूलं यावत् गत्वा पुनरन्तर्मुखं पुरश्च धनुर्वक्रभावेन प्रसृता, अङ्गुष्ठ-मूलशलाकामूले पादतलगम्भीराख्यया धमन्या मिलिता च।

तस्याश्च तथाविधाया बहवोऽनुशाखाः पादतले त्वगादिषु च प्रसृताः। प्रधानानुशाखास्तु षट् पुरोगाः, तिस्रश्च पश्चिमगाः निर्भेदिनी संज्ञाः।

---

१। Lateral Planter Artery.

तत्र पुरोगस्य अनुशाखाषट्कस्य मध्यस्थाश्चतस्रोऽनुशाखाः पञ्चानामङ्गुलीमूलशलाकानामन्तरालेषु प्रसृताः अङ्गुलीमूलान्तरालेषु द्वयोर्द्वयोस्तनुशाखयोर्विभक्ताः। ताः अङ्गुलीनां सन्निहितपार्श्वेषु प्रसरन्ति। द्वे च पुरोगे अनुशाखे अविभक्ते एव अङ्गुष्ठकनिष्ठयोरन्तर्बहिःसीम्नोः प्रसृते। ता एता अङ्गुलीपार्श्विकास्तलगा नाम दश धमन्यः अङ्गुल्यग्रेषु धमनीचक्राणि रचयन्ति।

तिस्रश्च निर्भेदिनीसंज्ञाः पश्चिमानुशाखाः पादतलपेशीः निर्भिद्य पादपृष्ठं गताः पादपृष्ठिकायाः अङ्गुलीमूलपृष्ठस्थासु अनुशाखासु प्रविशन्ति।

तदेतद् धमनीखण्डं समाप्तम्।

---

[ ११० चित्रम् ]

# पुरोजंघिका धमनी ( सशाखा )




( To face p. 130 )

## ( १११ चित्रम् )—पादतल धमन्यः उत्तानाः ।




## ( ११२ चित्रम् )—पादतल धमन्यः गम्भीराः ।



# सिराखण्डम् ।

## प्रथमोऽध्यायः ।

अथातः अग्रसिरा[१]वर्णनीयं नामाऽध्यायं व्याख्यास्यामः ।

इह खलु सर्वासां सिराणामाशयो हृदयं समुद्र इवापगानाम् । ताश्च सर्वा अप्यविशुद्धरक्तवहा अन्यत्र फुस्फुसप्रभवाभ्यः सिराभ्य—इत्यवोचाम । तासां चाऽरम्भो जालकेभ्यः । तेभ्यो हि संगृह्यते रक्तं सूक्ष्मैः सिराप्रतानैः । तैश्च मिलितैः सम्भवन्ति सिरास्तन्व्यः । तासां परस्परसंमेलनेन क्रमशः परिणाम उत्तरोत्तरस्थूलासु सिरासु । स्थूलसिराणां च काण्डसिरासु प्रवेशः । काण्डसिराणां च उत्तराऽधरमहासिरयोः । तयोश्च हृदये । सोऽयं सिरासंयोगक्रमो व्याख्यातः । विपरीतश्च तद्वर्णनक्रमो धमनीवर्णनक्रमस्य, सिराधमन्योर्यथाक्रमं संयोग-विभागमूल[२]त्वात् ।

सन्ति च मस्तिष्कबहिश्छदे शिरोऽस्थ्नामभ्यन्तरतः परिखाऽश्रिताः आयत-सिरामार्गाः, तेषां सिरासरिदिति सिराकुल्येति वा संज्ञा । सिराप्राचीरिकाः[३], सिराकपाटिकाः[४], सिराकञ्चुकानि[५] च व्याख्यातपूर्वाणि । न च सन्ति सिरा-कपाटिकाः सर्वासु सिरासु । उत्तराऽधरमहासिरयोः, प्रतीहारिण्यां सिरायां, मस्तिष्क-यकृद्-वृक्क-गर्भाशयादिप्रभवासु सिरासु, गर्भस्थशिशोः संवाहिन्यां महासिरायां च कपाटिकानामदर्शनात् ।

द्विविधाश्च सिराः—उत्ताना गम्भीराश्च । तत्र उत्तानास्त्वचोऽधस्ताद्-बाह्यप्रावरण्यां तिष्ठन्ति, ता नानुवर्त्तन्ते धमनीः स्वसंज्ञाः । दृश्यन्ते च ता अस्थूलगौरदेहानां त्वगधःस्थाः सवत्रैव प्रायः, विशेषतश्च शाखासु । परिणामे तु ता अपि गम्भीरसिराः प्रविशन्ति । गम्भीरसिराः पुनः प्रायेण

---

१ । अग्रसिराः आरम्भिकसिराः वक्ष्यमाणाः । २ । उत्तरोत्तरसंयोगमूला हि सिराः, विभागमूलाश्च धमन्यः । ३ । Media or Walls. ४ । Valves of Veins. ५ । Sheaths of Veins.

धमनीसहचर्य्यः । तासां स्थूलधमनी-सहचर्य्यः स्थूला एकाकिन्यश्च । तनुधमनीसहचर्य्यस्तु तन्व्यः, युग्माश्च प्रायेण ऊर्द्ध्वाऽधःशाखासु ।

परस्पराऽनुप्रवेशश्च सिराणां सूक्ष्म-स्थूलानां सर्वत्रैव काये भूम्ना द्रष्टव्याः । तथा चाऽधिक्यं सिराचक्राणां सिराजालानाञ्च सर्वकायेषु धमनीचक्रेभ्यः ।

बह्व्यश्च सिराः प्रतिपुरुषं भिन्नक्रमेण संयोगमापद्यन्ते, विभिद्यन्ते च बहुधाऽवस्थानभेदात् । तस्मादिहोक्तं सिरावर्णनं प्रायिकमवगन्तव्यम् ।

वर्णनासौकर्य्याय चेह आदौ शाखाशिरोग्रीवीयाः सिराः, ततश्च मध्यकाय-सिरा इति द्वेधा अध्यायविभागेन वर्णयिष्यामः । शाखाशिरोग्रीवीयाभिः सिराभि र्मध्यकायसिराणामापूरणात् तासाम् अग्रसिरेति संज्ञा ।

## अथ ऊर्द्ध्वशाखीयाः सिराः ।

तत्राऽदौ उत्तानसिराः । एकैकस्यामूर्द्ध्वशाखायाम् उत्तानसिरासु द्वे प्रधानभूते—बहिःसीम्नि बहिर्बाहुका, अन्तःसीम्नि अन्तर्बाहुका चेति । तत्-सहकारिण्यौ च मुख्ये सिरे द्वे एव—मध्यप्रकोष्ठिका, मध्यबाहुका योजनी चेति ।

तत्र **बहिर्बाहुका**[१] नाम सिरा ( ११३ चित्रम् ) प्रायेण अङ्गुष्ठमूलादारभ्य प्रकोष्ठबहिःसीमानुक्रमेण गत्वा कूर्परसन्धेः पुरस्ताद् द्रष्टव्या । ततश्च सा आदौ प्रगण्डबहिःसीम्नि, अनन्तरञ्च वक्रीभूय अंसमूलान्तःसीमानुक्रमेण अक्षकाऽस्थ्नोऽधस्तात् प्रसृता, क्रमेण अंसच्छदोरश्छदयोः पेश्योरन्तराले गम्भीरं प्रविष्टा । अन्ते चाऽसौ कक्षाधराख्यस्थूलसिरायां मिलिता ।

**अन्तर्बाहुका**[२] नाम सिरा ( ११३ चित्रम् ) कनिष्ठामूलादारभ्य तिर्य्यक् प्रकोष्ठपृष्ठान्तःसीमानुक्रमेण गत्वा कूर्परान्तःसीम्नि पुरस्ताद् द्रष्टव्या । ततः सा प्रगण्डान्तःसीम्नि प्रसृता प्रगण्डमध्यभागे बाहुकञ्चुकां निर्भिद्य गम्भीराऽभिगता बाहवीसंज्ञकधमन्याः सहचरीभ्यां सिराभ्यां मिलिता, कक्षायां कक्षाधरा नाम एकाकिनी स्थूलसिरा सम्पद्यते ।

अनयोश्च सिरयोः परस्परसंयोगः प्रकोष्ठस्य पुरस्तात् पृष्ठतश्च बहुभिः सिराभिस्तिर्य्यक्प्रसृताभिः । विशेषतश्च—

---

१ । Cephalic Vein. २ । Basilic Vein.

[ ११३ चित्रम् ]




( To face p. 132 )

**मध्यबाहुका योजनी**[1] नाम स्थूलतिरश्चीना ह्रस्वसिरा कूर्परपुरस्तादनयोः संयोजनी ।

**मध्यप्रकोष्ठिका**[2] नाम सिरा (११३ चित्रम्) प्रकोष्ठपुरस्तादन्तर्बहिर्बाहुकयोः सिरयोर्मध्ये ऋजुप्रायं प्रसृता। सा कूर्परसन्धेरधोभागे अन्तर्बाहुकां सिरां प्रविष्टा। संयुक्ता च सा प्रकोष्ठपुरस्तादन्तर्बहिर्बाहुकाभ्यां सिराभ्यां तिरश्चीनसिरानिवहेन ।

आसां च सिराणामापूरणमित्थं सम्पद्यते। करपृष्ठे अङ्गुलीपृष्ठिकादिसिराभिरापूरितं सिराजालं करपृष्ठिकं नाम। करतले च अङ्गुलीतलिकादिसिरारचितं करतलिकं नाम। अस्ति च तद्योजनं सिराजालमङ्गुलीमूलान्तरालस्थम्। तेषां करपृष्ठिकानि उत्तानसिराजालानि मणिबन्धोपकण्ठे स्वल्पसंख्यासु सिरासु परिणम्य बाहुल्येन बहिर्बाहुकायां सिरायां प्रविशन्ति। अन्तःसीमस्थानि तु कानिचिदन्तर्बाहुकायाम्। करतलिकानां पुनरन्तर्बाहुकायामेव भूम्ना प्रवेशो मध्यप्रकोष्ठिकायां च। बहिःसीमस्थानां च कासाञ्चिद् बहिर्बाहुकायाम् ।

सर्वासाञ्च प्रकोष्ठ-प्रगण्डीयानामुत्तानसिराणां अन्तर्बाहुका-बहिर्बाहुकयोः सिरयोर्यथासम्भवं प्रवेशः। अंसपृष्ठोद्गतानां च कासाञ्चिद् बहिर्बाहुकायामंसोपकण्ठे ।

इदञ्चात्र स्मर्त्तव्यम्। रक्तमोक्षणार्थमन्तर्बाहुका-बहिर्बाहुका-मध्यबाहुकेति सिरात्रयस्यैव व्यधो विशेषेण सुकरः। तासां चाऽन्यतमया सिरया विषूचिकादौ म्रियमाणस्य रोगिणो रक्तस्य अप्यभागपूरणाय लवणजलं प्रस्थप्रायमनायासेन रक्तस्रोतसि निःक्षिपन्ति कुशलाः, जीवयन्ति च तेन सपदि मुमूर्षूमपि रोगिणमिति ।

### अथ गम्भीरसिराः ।

सर्वा अप्यूर्द्ध्वशाखायां गम्भीरसिराः धमनीनां सहचर्य्यो युग्माश्च प्रायेण। तासां द्वे द्वे एकैकस्या धमन्याः पार्श्वयोः वर्त्तेते, ते अनुप्रस्थगताभिर्योजन्याख्यसिराभिर्यतस्ततः संयोजिते ।

---

१। Median Cubital Vein. २। Median Ante-brachial Vein.

संज्ञाश्च तासां धमनीवदेव। यथा—अङ्गुलीपार्श्विकाः[१], करतलधानुषी-उत्ताना गम्भीरा च[२], अरत्निमध्या[३] चेति। तासां करसिराणां प्रकोष्ठसिरासु, प्रकोष्ठसिराणाञ्च बाहव्योः सिरयोः प्रवेशः। ते च सिरे बाहव्या धमन्याः पार्श्ववर्त्तिन्यौ कक्षाधरासंज्ञामेकाकिनीं स्थूलसिरां सम्पादयतः।

सन्ति च गम्भीरसिराणामुत्तानसिराभिरपि संयोजन्यः सिरा बहुशः। विशेषतश्च अन्तर्बाहुका नाम उत्तानसिरा बाहव्या धमन्याः पार्श्वे गम्भीरं प्रसृता तत्सहचरीभ्यां सिराभ्यां मिलिता।

सेयं **कक्षाधरा**[४] नाम सिरा तत्संज्ञाया धमन्याः पार्श्ववर्त्तिनी अक्षकास्थ्नोऽधस्तात् प्रथमपर्शुकाया बहिःसीमानं यावत् तथासंज्ञा। तस्याञ्च प्रविशन्ति तदाख्यधमन्याः शाखासहचर्य्यः सिराः अंसकपालिन्यंसवेष्टनिकाद्याश्च सिराः परस्परमिलनेन त्रिचतुरसिरासु परिणताः। अक्षकाऽस्थ्नोऽग्रश्च तस्यां प्रविष्टा बहिर्बाहुका नाम उत्तानसिरेत्यवोचाम। कक्षाधरा च सिरा प्रथमपर्शुकामधिरूढा अक्षाधरेति संज्ञां लभते।

सेयम् **अक्षाधरा**[५] नाम सिरा (११६ चित्रम्) अक्षकाऽस्थ्नोऽधस्तात् तिर्य्यग् वक्रीभूय अक्षकोरःफलकसन्धानपृष्ठं यावत् प्रसृता अनुमन्याख्यया काण्डसिरया ग्रीवागतया मिलित्वा गलमूलिका नाम अधोमुखी सिरा सम्पद्यते। सा औरस्यसिरावर्णने पुनर्वर्णनीया।

अक्षाधरायां च प्रविशतः—पुरोग्रीविका, अधिमन्या चेति ग्रीवासमागते सिरे द्वे एव प्राधान्यतः। अनुमन्यासंयोगस्थले च तां प्रविशति दक्षिणतो लसीका-कुल्या, वामतश्च रसकुल्येति विशेषः।

ता एता ऊर्द्ध्वशाखीयाः सिरा व्याख्याताः।

### अथ अधःशाखीयाः सिराः।

तत्रादौ उत्तानसिराः। एकैकस्यामधःशाखायामुत्तानसिरासु द्वे प्रधान भूते—दीर्घौत्ताना ह्रस्वोत्ताना चेति। (११४ चित्रम्) तत्र –

---

१। Digital Veins. २। Palmer Arches. ३। Interosseous Veins. ४। Axillary Vein ५। Subclavian Vein.

[ ११४ चित्रम् ]  अधःशाखीयाः सिराः ।




( द—द—दीर्घोत्ताना सिरा )

( To face p. 134)

**दीर्घोत्ताना**[1] नाम सिरा (११४ चित्रम्) दीर्घतमा सक्थि सिरासु। सा पादान्तःसीम्नि आरभ्य जंघान्तःप्रदेशे तिर्य्यक् प्रसृता, ततो जानुपृष्ठान्तःसीमां संस्पृश्य पुनरूरौ तिर्य्यगूर्ध्वं पुरोगता अनुवंक्षणीयेन ठकाराऽकारच्छिद्रेण औवीं सिरां प्रविष्टा। सेयमधस्तन्वी उत्तरोत्तरस्थूला च सिरा जान्वधःप्रदेशे क्वचिद् युग्माऽपि दृश्यते।

**ह्रस्वोत्ताना**[2] नाम सिरा (११४ चित्रम्) वहिर्गुल्फपश्चिमदेशादारभ्य तिर्य्यग् जानुपृष्ठं गता, तत्र च जानुपृष्ठखातच्छादनीं गम्भीरप्रावरणीं निर्भिद्य ऊरुजानुपृष्ठिकां सिरां प्रविष्टा। सा तत्रैव गम्भीरप्रवेशात् पूर्वम् ऊर्द्ध्वमुखीं उत्तानयोजनीसंज्ञां सिरां द्वारीकृत्य दीर्घोत्तानया संयुज्यते।

अनयोश्च सिरयोरापूरणमित्थं सम्पद्यते। पादपृष्ठे उत्तानं सिराजालमङ्गुलीपृष्ठिकाद्यारब्धं पादपृष्ठिकं नाम। पादतले च तादृशं पादाङ्गुल्यादिसमारब्धं पादतलिकं नाम। तयोश्च परस्परयोजनं सिराजालमङ्गुलीमूलाऽन्तरालस्थं पादान्तर्वहिःसीमस्थञ्च। तेषां पादपृष्ठीयानां पादबहिःसीमस्थानाञ्च सिराजालानां प्रवेशो ह्रस्वोत्तानायाम्। अपरेषान्तु दीर्घोत्तानायाम्। जंघायामूरौ च अपरा उत्तानसिराः परस्परसंयोजनैः सिराजालैर्वर्द्धमाना ह्रस्वदीर्घयोरुत्तानसिरयोरापूरण्यो भवन्ति।

विशेषतश्च दीर्घोत्तानां प्रविष्टाः काश्चिदुदर-जघनोपस्थगता अपि उत्तानसिराः, उत्तानौदरिकीप्रभृतयः। एका च दीर्घसिरा उत्तानौदरिक्या उरःपार्श्वसिराभिः संयोजनी—औदरोरसी नाम, सा दीर्घोत्तानां कक्षाधरसिरया संयोजयतीति वैचित्र्यम्।

## अथ गम्भीरसिराः।

गम्भीरसिरास्तावदधःशाखाया ऊर्द्ध्वशाखावदेव भूम्ना, प्रायेण युग्मा धमनीसहचर्य्यः तत्संज्ञाश्च। तासां पादतलगानां संग्रहः पश्चिमजंघिकयोः सहचरसिरयोः। पादपृष्ठिकानान्तु पुरोजंघिकयोः। पुरःपश्चिमजंघिकानां सिराणां पुनः प्रवेशः ऊरुजानुपृष्ठिकाऽख्यसिरायामूरुजानुपृष्ठतः। सा च एकाकिनी

---

१। Long Sapheneus २। Short Sapheneus.

ऊरूपुरोगता **और्वी** नाम सिरा सम्पद्यते। ऊर्द्ध्वं च वंक्षणाद् उरगुहां प्रविष्टा-सैव **अधिश्रोणिका**[१] **बाह्या** नाम। (१०८।११६ चित्रयोः)

अथ शिरोग्रीवीयाः सिराः।

शिरोग्रीवीयाः सिरास्त्रिधा विभज्य व्याख्येया वर्णनासौकर्य्याय। तद् यथा—शिरोबाह्याः (समुखमण्डलीयाः), ग्रीवासिराः, शिरोऽभ्यन्तरीयाश्चेति।

अथ शिरोबाह्याः सिरा।

तत्र शिरोबाह्यासु सिरासु—शिरस एकैकार्द्धे नव प्रधानभूताः। (११५ चित्रम्) ताः—ललाटिका, अधिभ्रुवा, नासामूलिका, अग्रिमवक्त्रिका, अनुशंखा, अन्तर्हानव्या, पश्चिमकर्णिका, पश्चिमवक्त्रिका, कपालमूलिका चेति। ताभिश्च परस्परसंयुक्ताभिः समुखमण्डलस्य शिरसो वहिःस्थानां सिराजालानां रक्तमभिप्रवर्त्तते ग्रीवासिरासु। तत्र—ललाटिका, अधिभ्रुवा चेति सिराद्वयं ललाटस्य एकैकतो नासामूलं प्रतिगतं केषाञ्चित् ललाटे तिलकाऽकारेण स्फुटं दृश्यम्।

**नासामूलिका**[२] नाम सिरा पूर्वोक्तयोः संयोगसम्भवा। सैव नासा-पार्श्वमतिक्रम्य तिर्य्यग् हनुकोणं प्रति प्रसृता—गण्डकूटाऽधस्ताद् **अग्रिम-वक्त्रिका** नाम सिरा सम्पद्यते। तदापूरणं च नेत्राधःप्रदेश-नासापार्श्व-गण्डाऽधरोष्ठादि समागताभिः सिराभिः। सा हनुकोणाऽधःप्रदेशे पश्चिम-वक्त्रिकायाः अग्रिमशाखया मिलिता, ततो ग्रीवायामनुमन्याख्यस्थूलसिरां प्रविष्टा।

**अनुशंखा**[३] नाम सिरा शंखदेशस्थैः सिराजालैरापूरिता कर्णपुरस्ताद् दृश्या। सैव कर्णमूलाऽधः अन्तर्हानव्यया सिरया मिलित्वा पश्चिमवक्त्रिका भवति।

**अन्तर्हानव्या**[४] नाम सिरा स्वसंज्ञाया धमन्याः सहचरी अन्तर्हानव्य-सिराजालैरापूरिता। सा अधोहनुसन्धानाऽधस्ताद् अनुशंखया मिलित्वा पश्चिम-वक्त्रिका सम्पद्यते।

---

१। The External Iliac Vein. २। Angular Vein. ३। Superficial Temporal Vein. ४। Internal Maxillary Vein.

[ ११५ चित्रम् ]

# शिरोबाह्याः सिराः ।




[ ह—अधोहनुः । च—चिबुकाधरीयो ग्रन्थिः । ग—ग्रीवाप्रच्छदा । पृ—पृष्ठच्छदा । ]

( To face p. 136 )

**पश्चिमकर्णिका**[१] नाम सिरा कर्णपश्चिमदेशादागत्य तदधस्तात् पश्चिमवक्त्रिकां प्रविशति।

सेयं **पश्चिमवक्त्रिका**[२] नाम सिरा कर्णमूले अनुशंखाऽन्तर्हानव्याख्ययोः सिरयोर्मेलकसम्भवा हनुकोणपृष्ठतो गत्वा पुरोगया शाखया अग्रिमवक्त्रिकया मिलिता, स्वयं चाऽधःप्रसृता अधिमन्या नाम सिरा सम्पद्यते ग्रीवायाम्।

**कपालमूलिका**[३] नाम सिरा करोटिपश्चिमस्थस्य सिराजालस्य मेलकेनाऽरचिता कपालमूले पृष्ठच्छदाख्यपेशीमूलं निर्भिद्य कपालमूलिकाख्ये त्रिकोणे प्रविष्टा। सा गम्भीरग्रीवीयाभिः सिराभिः संयुज्यते, प्रविशति वा अनुमन्याख्यां स्थूलसिराम्।

अथ ग्रीवासिराः।

पञ्चैव ग्रीवासिरा एकैकार्द्धे मुख्याः—पुरोग्रीविका, अनुमन्या, अधिमन्या, पश्चिमग्रीविका, मास्तिष्कमातृका चेति (११५ चित्रम्)। तासु अनुमन्या स्थूलतमा।

**पुरोग्रीविका**[४] नाम सिरा जिह्वामूलस्थस्य सिराजालस्य सम्मेलनसम्भवा ग्रीवामध्यरेखायाः पार्श्वतोऽधःस्तात् प्रसृता गलमूले अधिमन्याम्, अक्षाधरां वा सिरां प्रविष्टा।

**अनुमन्या**[५] नामाऽतिस्थूला सिरा ग्रीवापार्श्वे मन्याख्यपेश्या प्रावृता प्रायस्तदनुक्रमेणाऽधोगता, आदौ अन्तर्मातृकां ततश्च महामातृकां धमनीमनुवर्त्तते। सा प्राधान्येन मस्तिष्काऽन्तःस्थं सिरारक्तं संगृह्णाति। मुखमण्डलीयस्य उत्तान-सिराजालस्य ग्रीवासिराणां च भूम्ना तत्रैव प्रवेशः। सेयं शिरोऽन्तस्थायाः पार्श्विकाऽख्यसिरापरिखाया अनुवृत्तिरूपा करोटिमूले। पश्चिमकपालपार्श्वस्थेन अनुमन्याख्यसिराविवरेण च ग्रीवां प्रविष्टाऽसौ सिरा वक्त्र-जिह्वा-गलविलाद्या-गताभिः सिराभिः कपालमूलिकाऽदिसिराभिश्चापूर्यते। संयुज्यते चाऽन्ते गलमूलदेशे अक्षाधराऽख्यया सिरया गलमूलिकाऽख्यकाण्डसिरानिर्म्माणाय।

---

१। Posterior Auricular Vein. २। Posterior Facial Vein. ३। Occipital Vein. ४। Anterior Jugular Vein. ५। Internal Jugular Vein.

**अधिमन्या**[१] नाम सिरा भूम्ना शिरोग्रीवबाह्यानां सिराणां विशेषतश्च मुखमण्डलीयगम्भीरसिराणां रक्तसंग्राहिणी। सा ग्रीवाया एकैकपार्श्वे मन्याख्यां पेशीमधिरुढा कर्णमूलाद् अक्षकास्थिमध्यविन्दु यावत् तिर्य्यगवस्थिता। सेयं पुरःपश्चिमग्रीविकाभ्यां सिराभ्याम् अंसग्रीवीयतिरश्चीनसिराभ्यां च सम्मिलिता ग्रीवामूले अक्षाधरां सिरां प्रविशति।

**पश्चिमग्रीविका**[२] नाम सिरा करोटिपश्चिमस्थाभिरुत्तानसिराभिः आपूरिता पश्चिमकपालमूलादारभ्य तिर्य्यग् ग्रीवापार्श्वे अधोमुखं गत्वा अधिमन्यां सिरां प्रविष्टा।

**मस्तिष्कमातृका**[३] नाम सिरा तत्संज्ञाया धमन्याः सहचरी भूयिष्ठस्य मस्तिष्कमूलस्थरक्तस्य काशेरुकसिरारक्तस्य च संग्राहिणी। सा ग्रीवाकशेरुकाणां बाहुप्रवर्द्धनस्थेन रन्ध्रपथेन अधोमुखं गत्वा गलमूलिकां नाम सिरां प्रविशति।

ग्रीवाकशेरुकापर्यन्तेष्ववस्थिताः सिरास्तु मध्यकायसिरावर्णने वर्णनीयाः।

## अथ शिरोऽभ्यन्तरीयाः सिराः।

ताश्च त्रिविधाः—कपाल-पत्रान्तरिकाः, मस्तिष्कीयाः, सिरासरितश्चेति। तत्र—

(क) कपालपत्रान्तरिका[४] नाम (११६ चित्रम्) कपालास्थिनिर्म्मापकपत्रकद्वयान्तराले प्रसृताः सिराः स्थूलकुटिलाः। ताश्च मस्तिष्कवृतिगाभिः सिराभिः, सिरासरिद्भिः, करोटिबाह्याभिश्च सिराभिः सम्बन्धवत्यः सूक्ष्मैरस्थिच्छिद्रगैः सिराजालैः। चतुर्विधाश्च ताः—अग्रिमकपालिकाः, शंखपूर्वाः, शंखपश्चिमाः, पश्चिमकपालिकाश्चेति। तासां परस्परं शाखाप्रतानैः संयोगः, पुरः-पार्श्व-पश्चिमकपालानां पत्रकान्तरालेषु।

(ख) मस्तिष्कीयाः सिराः पुनर्द्विविधाः—मस्तिष्कप्रभवाः, अनुमस्तिष्कप्रभवाश्चेति।

---

१। Ext. Jugular Vein. २। Post. Ext. Jugular Vein. ३। Vertebral Vein. ४। Diploic Veins.

तत्र मस्तिष्कप्रभवाः पुनर्द्वेधा विभज्यन्ते—मस्तिष्कवाह्याः, मस्तिष्काभ्यन्तरीयाश्चेति। तासां वाह्याः प्रायेण मस्तिष्कदलान्तरालस्थासु सीतासु प्रसृताः, ताः स्थानभेदेन उत्तराधरमध्यमासु सिरासु विभक्ताः। मस्तिष्काभ्यन्तरीयास्तु मस्तिष्कस्य आभ्यन्तरभागेभ्यः सम्भूय द्वयोः स्थूलसिरयोः परिणमन्ति। ते च स्थूलसिरे—अन्त्यमूलिका[१], अनुशृंखलिका[२] चेति प्रसिद्धे मस्तिष्कवर्णने वर्णनीये। तयोश्च संयोगसमुत्था **महती मस्तिष्कमूलिका**[३] नाम सिरा मस्तिष्कमूले दीर्घिकायोजनीं नाम सिराकुल्यां प्रविष्टा।

अनुमस्तिष्कप्रभवाः सिराः पुनरनुमस्तिष्कमभिव्याप्य स्थिताः उत्तराधरयोः सिराराज्योर्विभज्यन्ते। तत्र उत्तराः सिराराज्यः संघीभूय दीर्घिकायोजनीं सिराकुल्यां प्रविशन्ति, अधरास्तु पार्श्विकाख्ये सिरासरितौ पश्चिमाधरिकाञ्च।

(ग) **सिरासरितः सिराकुल्या**[४] वा नाम (११७।११८ चित्रयोः) क्वचित् स्तरद्वये विभक्तस्य मस्तिष्कच्छदस्यान्तरालस्थाः सिरामार्गाः शिरःसम्पुटस्य अभ्यन्तरगाः। ताः कपालास्थ्नां जतूकाशंखास्थ्नोश्च सिरापरिखासु प्रवहन्ति, आपूर्य्यन्ते च ताः मस्तिष्कीयाभिः सिराभिः प्राधान्येन। स्वयञ्चापूरयन्ति ताः प्रायः पार्श्विकाभ्यां सिरासरिद्भ्याम् अनुमन्याख्ये ग्रीवासिरे।

तासां स्थूलदीर्घाः सिरासरित्संज्ञाः, तनुह्रस्वास्तु सिराकुल्या नाम। साधारणी वा संज्ञा सर्वासां सिरासरिदिति।

ताश्च द्विविधाः। पश्चिमोत्तराः पश्चिमाधराश्चेति। तत्र—

**दीर्घिका[५] उत्तरा** नाम सिरासरित् पश्चिमोत्तरासु प्रधाना दीर्घतमा च। सा करोटिपटलान्तमध्यरेखाऽवस्थितां दीर्घिकां नाम सिरापरिखामाश्रित्य प्रवहति। धार्य्यते च सा दात्रिकाख्यकलाया ऊर्द्ध्वधारया स्तरद्वयविभक्तया। स्तरद्वयं च तत् सिरापरिखातटयोः संसक्तम्। सेयं सिरासरित् पुरस्ताद् झर्झरास्थिशिखरकण्टकादारभ्य पश्चिमकपालस्य पुरस्तलस्थं महावर्त्तं यावद् गत्वा तत्रैव पार्श्विकाभ्यां सिरासरिद्भ्यां क्वचिद् दक्षिणपार्श्विकया वा

---

१। Terminal Cerebral Veins. २। Choroid Veins. ३। Great Cerebral. ४। Venous Sinuses. ५। Superior Sagittal Sinus.

सिरासरिता मिलिता, तदुभयतश्च करोटिपटले दृश्यानि त्रिचतुराणि सिरापल्वलानि नाम क्षुद्रसिराखातानि तत्संयुक्तानि।

एनाश्च सिरासरितं प्रविशन्ति उत्तरा मस्तिष्काभ्यन्तरीयाः, कपालान्तरिकाः, मस्तिष्कवृतिगाश्च सिराः।

**दीर्घिका[1] अधरा** नाम सिराकुल्या दात्रिकाख्यस्य मस्तिष्कविभाजककलाभागस्य अधोधारायाः पश्चिमार्द्धानुक्रमेण प्रसृता ततस्तरद्वयान्तराले आलम्बते। सा दीर्घिकायोजन्याख्यया पश्चिमस्थया सिराकुल्यया मिलिता।

**दीर्घिकायोजनी[2]** नाम सिराकुल्या मस्तिष्कच्छदायाः कलायाः मध्यरेखास्थिता पूर्वोक्तया सिराकुल्यया अग्रे संयुज्यते, पश्चिमतश्च महावर्त्तेन।

**अनुपार्श्विके[3]** नाम द्वे स्थूलतमे सिरासरितौ पश्चिमकपालकेन्द्रभूतं महावर्त्तमुभयतो बाहुवत् प्रसृतयोः पार्श्विकाख्ययोः सिरापरिखयोः प्रवहतः। धार्य्येते च ते अनुप्रस्थमवस्थितस्य पक्षपुटसंज्ञस्य मस्तिष्कवृतिभागस्य पश्चिमधारया स्तरद्वयविभक्तया। स्तरद्वयं च तत् सिरापरिखातटयोः संसक्तम्। तयोर्मध्यस्थो महावर्त्तः पुरस्तादूर्द्ध्वं दीर्घिकया, अधश्च अनुदीर्घिकया सिरासरिता संयुक्तः। कदाचित्तु दक्षिणपार्श्विकाख्या सिरासरित् दीर्घिकाया अनुवृत्तिरूपा, वामपार्श्विका च अनुदीर्घिकायाः। तदा न दृश्यते तयोः परस्परसंयोगो महावर्त्ते। ते च पार्श्विकाख्ये सिरासरितौ वहिःसीम्नोर्वक्रीभूय अर्द्धचन्द्रिकाख्ययोः सिरापरिखयोः प्रवहतः। ते वहिःप्रान्तयोरनुमन्यविवरसंज्ञकास्थिविवरयोरुपरिष्टाद् अनुमन्याख्यस्थूलसिराभ्यां सङ्गते।

**पश्चिमकपालिका[4]** नाम सिराकुल्या पश्चिमकपालमूलादूर्द्ध्वं मध्यरेखानुक्रमेण गत्वा महावर्त्तं प्रविष्टा।

**महासिरावर्त्तो[5]** नाम पूर्वोक्तानां पञ्चानामपि सिरासरितां सन्धिसन्निपातः पश्चिमकपालस्य अभ्यन्तरतलकेन्द्रस्थः। तमधिपतिसंज्ञं सद्योमारकं मर्मेति वर्णयन्ति प्राञ्चः। ताः एताः पञ्च पश्चिमोत्तराः सिरासरितो व्याख्याताः।

---

१। Inf. Sagittal Sinus. २। Straight Sinus. ३। Transverse Sinus. ४। Occipital Sinus. ५। Confluence of Sinus

[ ११६ चित्रम् ]

## कपालपत्रान्तरिकाः सिराः ।

[ अत्र कपालास्थिनिर्मापकं वाह्यपत्रकमपसारितम् , आभ्यन्तर सिराजाल प्रदर्शनाय ]




[ ११७ चित्रम् ]

## शिरोऽभ्यन्तरीयाः सिरासरितः सिराकुल्याश्च ।

करोटेरनुलम्बच्छेदेन दर्शिताः ]




( To face p. 140 )

[१३८ चित्रम्]

# करोटिभूमिगताः सिरासरितः सिराकुल्याश्च ।

(करोटेरनुप्रस्थच्छेदेन दर्शिताः)

[ पुरोभागः ]




( To face p. 141 )

पश्चिमाधरा स्तावत् सिरासरितश्चतस्रो युग्माः। एकं च सिराकुल्याचक्रम्, अपराश्च मस्तिष्कमूले तन्व्यः सिराकुल्यास्तदुभयतः। तद्यथा—

**त्रिकोणिके**[1] नाम सिरासरितौ (११८ चित्रम्) युग्मासु सिरासरित्सु प्रधानभूते। ते जतूकास्थ्नः शरीरमुभयतो मातृकापरिखयोरवतिष्ठेते। तत्परिसरस्य त्रिकोणप्रायत्वात्तयोस्त्रिकोणिकेति संज्ञा। एकैका च त्रिकोणिका अग्रे जतूकापक्षान्तरालादारभ्य शङ्खास्थ्नः अश्मभागाग्रं यावत् प्रसृता। ताञ्च निर्भिद्य प्रवर्त्तते अन्तर्मातृका नाम धमनी। तत्परिसरे च कलावृता दृश्यन्ते तृतीयादिषष्ठ्यन्ता नाड्यः, तन्तुजालाकाराः कलांशाश्च।

आपूरणञ्च त्रिकोणिकयोः सिरासरितोः सम्पद्यते सिराभिश्चाक्षुषीभिः, मस्तिष्कीयाभिश्च। आपतति च तद्रक्तं पश्चिमतः पार्श्विकयोः सिरासरितोः अश्मतटिन्याख्यसिराकुल्याभिः।

**त्रिकोणिकायोजन्यौ**[2] नाम द्वे ह्रस्वे सिराकुल्ये अग्रिमा पश्चिमा चेति। ते जतूकास्थ्नः पोषणकखातस्य पुरः पश्चाच्च अनुप्रस्थमवस्थिते त्रिकोणिकाख्ये सिरासरितौ योजयतः। पोषणकग्रन्थिं परिवेष्ट्य स्थितत्वाच्च तयोर्मिलितयोः कदाचित् परिपोषणकं सिराचक्रमिति संज्ञा।

**अश्मतटिन्यौ**[3] नाम एकैकतो द्वे द्वे तनुदीर्घे सिराकुल्ये उत्तराधरे शंखास्थ्नः अश्मतटभागमधितिष्ठतः। तासां चतसृणामुत्तरे सिराकुल्ये दीर्घतरे पार्श्विकाभ्यां सिरासरिद्भ्यां त्रिकोणिकयोः संयोजन्यौ। अधरे तु सिराकुल्ये त्रिकोणिकागतं रक्तांशं सुषुम्नाशीर्षक-धम्मिल्लकाऽनुमस्तिष्कस्थसिराणां रक्तं च अनुमन्याख्ये ग्रीवासिरे प्रापयतः।

**मस्तिष्कमूलिकं**[4] नाम सिराकुल्याचक्रं मस्तिष्कमूलभागे पश्चिमकपालमूलोपरिष्टाद्वर्त्तते। तद् अधरयोरश्मतटिन्योरनुप्रस्थं संयोजनम्। तद्रक्तं च पृष्ठवंशान्तः कशेरुकान्तरीयमग्रिमसिराजालं प्रविशति महाविवरपरिसरमाश्रित्य। मस्तिष्कमूलिके नाम ग्रीवासिरे च पूर्वोक्ते तद्रक्तं संगृह्णीतः।

---

१। Cavernous Sinuses. २। Inter-cavernous Sinuses. ३। Petrosal (Sup. & Inf.) Sinuses. ४। Basilar Plexus.

सन्ति चापराः सूक्ष्माः सिराकुल्याः पार्श्वकपालयोः शंखास्थ्नश्च धमनी-प्रतानाङ्केषु संन्यस्ताः। ता मध्यममस्तिष्कवृतिगयोर्धमन्योः शाखाप्रतानानां सहचर्य्यः। तासां रक्तं भूम्ना दीर्घिकायां सिरासरिति, तत् संयुक्तपल्वलेषु वा प्रविशति।

ता एताः सिरासरितो व्याख्याताः।

स्मर्त्तव्यञ्चेदमत्र प्रसङ्गे। सिरासरितां रक्ताधिक्ये सति तत्-परीवाहभूताभिः सिराभिः सप्ताष्टसंख्याभिः मस्तिष्कान्तरीयस्य रक्तस्य बहिर्निगमः। ताः हि करोटिच्छिद्रपथैः पार्श्वकपालादिस्थितैर्विनिर्गत्य ग्रीवासिरासु रक्तमभिवहन्ति। तासां **सिरापरीवाहिका**[१] संज्ञा।

---

## द्वितीयोऽध्यायः।

अथातो मध्यकायसिरावर्णनीयमध्यायं व्याख्यास्यामः।

सार्वकायिकसिराणां संयोगसम्भूते उत्तराधरे महासिरे मध्यकायमधि-तिष्ठतः। सन्ति च पृथगेव ताभ्यामुरसि फुस्फुसागताः सिराः, हार्द्दिक्यः सिराश्च। उदरे च प्रतीहारिणी नाम स्थूलसिरा यकृदभिगामिनी। न तासां साक्षात् सम्बन्धो महासिराभ्याम्।

तत्र भूम्ना ऊर्द्ध्वशाखासिराणां कासांचिद् ग्रीवासिराणां च संग्रहः अक्षा-धराभ्यां सिराभ्याम्। शिरोग्रीवीयाणां च अनुमन्याभ्याम्। अक्षाधरानु-मन्ययोश्च मेलकसंभूता एकैकतो गलमूलिका नाम काण्डसिरा,—सा कासांचित् शिरोग्रीवीयसिराणामपि साक्षाद् रक्तसंग्राहिणी। उभाभ्यां च गलमूलिकाभ्यां सम्भवति उत्तरा महासिरा। सा अपराभिःऔरस्यसिराभिःर्बाह्याभ्यन्तरीया-भिरापूरिता प्रविशति हृदयदक्षिणालिन्दमूर्द्ध्वदेशात्। फुसफुसागताः सिरास्तु विशुद्धरक्तवहाः हृदयवामालिन्दप्रवेशिन्यः। हार्दिक्यश्च हृदयदक्षिणालिन्द-प्रवेशिन्यः। ता एता औरस्यसिराः समासेन व्याख्याताः।

---

१। Emissary Veins.

अधःशाखीयसिराणां पुनः संग्रहो भूम्ना और्वीभ्यां सिराभ्याम् । ते च वंक्षणदरीप्रविष्टे अधिश्रोणिके बाह्ये नाम भवतः । गुदोपस्थवस्तिगुहादिसिराणां संग्रहस्तु भूम्ना अधिश्रोणिकाभ्यामाभ्यन्तरीभ्याम् । अधिश्रोणिकयोश्च बाह्याभ्यन्तर्योः संयोगेन एकैकतः सम्भूता अधिश्रोणिका साधारणी नाम स्थूलसिरा, सा संग्राहिणी कटित्रिकसिराणां च कासाञ्चित् । उभयोश्च साधारण्योरधिश्रोणिकयोर्मेलनेन सम्भवति अधरा महासिरा । सा अपराभिरौदर्य्यसिराभिर्बाह्याभ्यन्तरीयाभिरापूरिता प्रविशति हृदयदक्षिणालिन्दमधोदेशात् ।

प्रतीहारिणी सिरा तु आमाशय-पक्वाशय-प्लीहादिरक्तसंग्राहिणी यकृदेव प्रविशति । संगृह्यते च तद्रक्तमधरायां महासिरायां याकृतीभिः सिराभिः । ता एता औदर्यसिराः समासेन ।

पृष्ठवंशीयसिराणां पुनर्ग्रीवा-पृष्ठ-कटिगतानां क्रमेण ग्रीवापृष्ठकटिसिरासु पूर्वोक्तासु प्रवेशः । ताः पृथगेव वक्ष्यामः शिष्यबुद्धिवैशद्याय ।

### अथ औरस्य सिराः ।

औरस्यसिरासु द्वादश मुख्याः—द्वे गलमूलिके, एका उत्तरा महासिरा, फुस्फुसीयसिराश्चतस्रः, हार्दिक्यश्च सिराः पञ्च षड् वा ।

**गलमूलिके**[१] नाम स्थूले काण्डसिरे (११६ चित्रम्) गलमूलाभ्यां तिर्य्यगधो गत्वा महाधमन्यास्तोरणभागादूर्ध्वं परस्परं मिलिते । ताभ्यां ग्रीवांसबाहुसिराणामखिलानां संग्रहः । तयोर्हि—

**दक्षिणा गलमूलिका**[२] सार्द्धाङ्गुलमात्रदीर्घा दक्षिणाक्षकोरःफलकसन्धानपृष्ठे दक्षिणयोरक्षाधरानुमन्ययोः संयोगसमुत्था । सा ऋजुप्रायगत्या अधःप्रसृता तिरश्चीनागतया वामगलमूलिकया मिलिता प्रथमदक्षिणोपपर्शुकापृष्ठतः । सा काण्डमूलाया धमन्याः पुरस्ताद् दक्षिणतश्च द्रष्टव्या । तदापूरण्यश्च सिराश्चतस्रः । यथा—दक्षिणा मस्तिष्कमातृका, अन्तःस्तनिका,

१ । Innominate Veins. २ । Right Innominate Vein.

अधरग्रैवेयकी, प्रथमा पर्शुकानुगा चेति। उत्तरा पर्शुकानुगामेलनीं च तामेव प्रविशति प्रायः।

**वामा गलमूलिका**[1] तु सार्धाङ्गुलदीर्घा वामाक्षकोरःसन्धानपृष्ठे दृश्या वामयोरक्षाधरानुमन्ययोः सिरयोः संयोगसमुत्था। सा अत्यन्त-तिरश्चीनगत्या पूर्वोक्तप्रदेशे दक्षिणगलमूलिकया सिरया मिलिता उत्तरां महासिरां सम्पादयति। तिरश्चीनगता च सा उल्लंघयति पश्चाद्वर्त्तिनीं वामामक्षाधराम् अन्तःस्तनिकाञ्च धमनीम्, वामामनुकोष्ठिकां प्राणदाञ्च नाडीं, क्लोमनलिकां, काण्डमूलाख्यां धमनीञ्च। आपूरयन्ति च तां पूर्ववदेव सिरा वामाः, वामोत्तरा पर्शुकानुगामेलनी च।

अथेमा गलमूलिकयोरापूरण्यः सिरा व्याख्यायन्ते। तासु अक्षाधरे, अनुमन्ये, मस्तिष्कमातृके चेति व्याख्यातपूर्वाः।

**अन्तःस्तनिके**[2] नाम सिरे (११६ चित्रम्) स्वसंज्ञयोर्धमन्योः सहचर्य्यौ। तयोर्दक्षिणा दक्षिणां, वामा च वामां गलमूलिकां प्रविष्टा। ते उरःपरिसरीयाणां वह्वीनां वाह्याभ्यन्तरसिराणां संग्राहिण्यौ।

**अधरग्रैवेयक्यौ**[3] नाम सिरे (११६ चित्रम्) ग्रैवेयकग्रन्थिमूलस्थात् सिराचक्रात् सम्भूते अधोमुखं गत्वा गलमूलिकयोः सिरयोः प्रविष्टे पूर्ववत्। तच्च सिराचक्रमापूर्य्यते श्वासान्ननलिकाद्यागताभिरनेकाभिः सिराभिः।

**पर्शुकानुगाः**[4] नाम सिराः स्वसंज्ञानां धमनीनां सहचर्य्यः (११६ चित्रम्)। तासां प्रथमपर्शुकानुगे पृष्ठवंशपर्शुकासन्धानदेशाभ्यामूर्द्ध्वं गत्वा गलमूलिकयोः सिरयोः प्रविष्टे—वामा वामां, दक्षिणा च दक्षिणामिति क्रमेण। द्वितीय-तृतीय-चतुर्थीनान्तु पर्शुकानुगसिराणां संयोगेन एकैकतः सम्भूता ऊत्तरा पर्शुकानुगामेलनी नाम सिरा। तयोर्वामा वामां गलमूलिकां प्रविष्टा, दक्षिणा दक्षिणां गलमूलिकां दक्षिणपुरोवंशिकां वा। अपरासां तु पर्शुकानुगानां प्रवेशः पुरोवंशिकाख्यासु सिरासु वक्ष्यामाणासु। सर्वाश्च पर्शुकानुगा उरःपरिसरस्य पृष्ठस्थानां पार्श्वीयसिराणां च संग्राहिण्यः।

---

१। Left Innominate Vein. २। Internal Mammary Veins. ३। Inferior Thyreoid Veins. ४। Inter-costal Veins.

# मध्यकायसिराः ।




[ ग—ग्रैवेयक ग्रन्थिः । क—क्लोमनलिका । वृ—वृक्कः । ]

 ( To face p. 144 )

## अथ उत्तरा महासिरा ।

**उत्तरा महासिरा**[१] उत्तरशरीरार्द्धस्य सिरारक्तसंग्राहिणी (११६ चित्रम्) पञ्चाङ्गुलदीर्घाऽतिस्थूला च सा गलमूलिकयोः सिरयोः संयोगेन निर्म्मिता। दक्षिणप्रथमोपपर्शुकापृष्ठादारभ्य उरःफलकस्य दक्षिणसीमानुक्रमेणाधः प्रसृता, दक्षिणतृतीयोपपर्शुकां यावद् गत्वा हृदयस्य दक्षिणालिन्दं प्रविष्टा। सेयमधरार्द्धे हृदयधरस्य कलाकोषस्य एकदेशेनाच्छाद्यते।

व्यतिकरश्च तावदस्या इत्थंभूतः। तस्याः पुरस्ताद्—दक्षिणफुस्फुसस्य पुरोधारा तदाच्छादिकलासहिता। पश्चिमतो दक्षिणफुस्फुसस्य वृन्तदेशः, प्राणदा च नाडी दक्षिणा। दक्षिणतो—दक्षिणा अनुकोष्ठिका नाडी, दक्षिणफुस्फुसश्च कलासहितः। वामतश्च आरोहिणी महाधमनी।

अथास्या आपूरण्यः सिराः—पुरोवंशिका दक्षिणा, हृत्कोषीयाः सिराः, अपराश्च फुस्फुसान्तरालीयग्रन्थ्यादिप्रभवाः। तासामाद्या प्रधान-भूता। सेयम्—

पुरोवंशिका दक्षिणा[२] नाम सिरा (११६ चित्रम्) पृष्ठवंशस्य पुरस्ताद् दक्षिणपार्श्वानुक्रमेण द्रष्टव्या, सा पुरोवंशिकाख्यसिरासु दीर्घतमा। साऽसौ उदरगुहायां दक्षिणानुकटिकायाः सिरायाः (अधरमहासिराया वा) शाखारूपेण प्रथमकटिकशेरुकापुरोभागादारभ्य ऊर्द्ध्वंगता महाप्राचीराया महाधमनीच्छिद्र-पथेन उरोगुहां गाहते। उरोगुहायाञ्च चतुर्थपृष्ठकशेरुकान्तं गत्वा अग्रतो धनुर्वक्राऽसौ सिरा दक्षिणं फुस्फुसवृन्तमुल्लंघ्य उत्तरां महासिरां प्रविष्टा। तदापूरण्यश्च सिराः बहवः। तद्यथा—दश दक्षिणपर्शुकानुगाः, वामे पुरोवंशिके, दक्षिणाः क्लोमसिराः, हृत्कोषीयसिराः, फुस्फुसान्तरालीय-सिराश्च।

पुरोवंशिका वामोत्तरा[३] वामाधरा चेति[४] द्वे सिरे पृष्ठवंशवामतः (११६ चित्रम्)। तयोराद्या चतुर्थ्यादिषष्ठ्यन्ताभिः पर्शुकानुगाख्यसिराभिः प्रायेण वामाभिः क्लोमसिराभिश्च आपूरिता सप्तमपृष्ठकशेरुकामुल्लंघ्य

---

१। Superior Vena Cava. २। Azygos Vein. ३। Hemi-azygos Vein. ४। Accessory Hemi-azygos Vein.

दक्षिणां पुरोवंशिकां प्रविष्टा। अन्त्या कटिवंशपुरोभागादारभ्य दक्षिण-पुरोवंशिकावन्महाप्राचीरां निर्भिद्य ऊर्द्धगता अष्टमपृष्ठकशेरुकामुल्लंध्य तामेव सिरां प्रविशति। सा चतुर्भिः पञ्चभिर्वा निम्नतमाभिः पर्शुकानुगाख्य-सिराभिरापूर्य्यते। कदाचित्तु वामोत्तरायाः पुरोवंशिकायाः सर्वथाऽभावः। तदा वामोत्तरा पर्शुकानुगामेलनी नाम सिरा तत्कार्यकरी।

## अथ फुस्फुसीयाः सिराः।

**फुस्फुसीयाः**[१] फुस्फुसागता वा नाम सिरास्तु संज्ञामात्रेण सिराः, हृदयाभिगत्वात्। वस्तुतस्तु ताः फुस्फुसविशोधितं धमनीरक्तमभिवहन्त्यः फौस्फुसरक्तसंवहनस्य साधनभूता धमनीवत् कार्यतः—इत्यवोचाम ( ९४ चित्रम् )।

ताश्च एकैकफुस्फुसतो द्वे द्वे इति चतस्रः। तासामारम्भः फुस्फुसीय-वायुकोषानभितः स्थितेभ्यो जालकेभ्यः सूक्ष्मैः सिराप्रतानैः। तैर्हि मिलितैरारच्यन्ते सूक्ष्माः सिराः, तासाञ्च क्रमेण परस्परसंयोगेन एकैकफुस्फुसपिण्डादुद्भवति परिणामे एकैका सिरा। तत्र दक्षिणफुस्फुसस्य पिण्डत्रयविभक्तत्वात्, ततः सम्भवन्ति तिस्रः सिराः। ताश्च फुस्फुसवृन्तोपकण्ठे द्वयोः सिरयोः परिणमन्ति। वामफुस्फुसात्तु पिण्डद्वयविभक्तादादित एव द्वे सिरे प्रभवतः।

तासां च फुस्फुसीयसिराणां हृदयवामालिन्दं पृष्ठभागे निर्भिद्य प्रवेशः, तद्वामदक्षिणपार्श्वस्थितैः चतुर्भिश्छिद्रैः। कदाचित्तु वामं सिराद्वयं मिलितमेकेनैव च्छिद्रपथेन प्रविशतीति तदा त्रीण्येव दृश्यानि च्छिद्राणि। क्लोमसिरास्तु सिरारक्ताभिवाहिन्यो दक्षिणां वामां वा पुरोवंशिकां सिरां प्रविशन्तीत्युक्तपूर्वम्।

**हार्दिक्यः**[२] सिराः प्रायेण हार्दिकधमनीनां सहचर्य्यः। ता हृदय-बहिःस्थासु सीतासु दृश्याः पुरः पश्चात् पार्श्वतश्च। तासां मूलायतनभूता हृदयपृष्ठस्था बालमूलकाकारा सिरा, हार्दिकी मूलसिरा[३] नाम। तस्यां पञ्चषाणां सिराणां प्रवेशः। सा च संगृहीतं शोणितं हृदयदक्षिणालिन्दे अर्पयति।

सन्ति चापरा अपि क्षुद्राः सिरा इतस्ततो हृदयपरिधौ व्याप्ताः, याः साक्षादेव सूक्ष्मैश्छिद्रपथैर्हृदयस्य दक्षिणालिन्दे दक्षिणनिलये वा प्रविष्टाः।

---

१। Pulmonary Veins. २। Cardiac Veins. ३। Coronary Sinus.

अथ औदर्य्यसिराः ।

औदर्य्यसिरासु अष्टौ मुख्याः । द्वे अधिश्रोणिके वाह्ये, द्वे अधिश्रोणिके आभ्यन्तर्य्यौ । तन्मिलनाद् द्वे अधिश्रोणिके साधारण्यौ । तन्मिलनाद् एका अधरा महासिरा । एतदतिरिक्ता च आमाशयपक्वाशयदिरक्तसंग्राहिणी एका प्रतीहारिणी इति ।

**अधिश्रोणिके वाह्ये**[१] नाम सिरे ( ११६ चित्रम् ) और्व्याः सिरयो-रनुवृत्तिरूपे वंक्षणदरीमुखात् त्रिकपृष्ठवंशं यावत् स्वसंज्ञयोर्धमन्योरन्तःपार्श्वगे । तयोरेकैका अधिश्रोणिकया आभ्यन्तर्य्या मिलिता अधिश्रोणिकां साधारणीं निर्म्मिमीते । तदापूरण्यश्च सिरास्तिस्रः एकैकतो धमनीशाखासहचर्य्यः । यथा—अधरा औदरिकी, जघनवेष्टनिका गम्भीरा, भगानुगा चेति । तासां स्थानसंस्थानादिकं तत्संज्ञकधमनीवत् ।

**अधिश्रोणिके आभ्यन्तर्य्यौ**[२] नाम सिरे (११६ चित्रम्) वस्तिगुहान्तः सिरासु प्रधानभूते स्वसंज्ञयोः पार्श्ववर्त्तिन्यौ, तच्छाखासहचरीभिर्युग्मसिराभिः तत् समानसंज्ञाभिरेव पूरिते च प्रायेण । एकैका च आभ्यन्तराधिश्रोणिका त्रिकपृष्ठवंशसन्धानस्य पुरस्तादेकैकतो वाह्यया अधिश्रोणिकाख्यसिरया मिलिता अधिश्रोणिकां साधारणीं नाम सिरां रचयति ।

द्वे च अधिश्रोणिकयोराभ्यन्तरय्योः पृष्ठगे शाखे कटिश्रोणिके नाम । तयोरेकैका अधिश्रोणिकयोर्वाह्याभ्यन्तर्य्योः संयोजनीति विशेषः ।

एष च एकैकस्या अधिश्रोणिकाया आभ्यन्तर्य्याः आपूरणसिराणां संग्रहः । श्रोणिवहिर्द्देशतस्तत्प्रविष्टा शाखाः—उत्तराधरनितम्बिन्य सिराः, श्रोणि-वंक्षणिकाः सिराः, गुदोपस्थिकाश्च । त्रिकपार्श्वतः,—त्रिकपश्चिमाः सिराः त्रिकास्थ्नः पुरोभागे मिलिताः । गुदोपस्थान्तःसीमतः,—मध्यमा गुदान्तिका, अनुवस्तिका, अनुयोनिका, अनुगर्भाशयिका च । ताः तत्तत्संज्ञकसिराचक्रेभ्यः सम्भूताः ।

तत्र चैतानि विशेषतः स्मर्त्तव्यानि ।

---

१ । External Iliac Vein २ । Internal Iliac or Hypogastric Vein.

(क) **गुदवेष्टनं सिराचक्रम्**[१] (१२१ चित्रम्) पुञ्जीभूतैः सिराप्रतानैस्तिसृषु सिरासु परिणतः साक्षात् परम्परया वा पूरयति अधिश्रोणिकामाभ्यन्तरीम्। ताश्च सिरा उत्तर-मध्यमाऽधरगुदन्तिका नाम। तासामान्त्रिकीभिः सिराभिरपि सम्बन्धः, ततश्च प्रतीहारिण्या सिरया। सम्बध्यते च तत् सिराचक्रमनुवस्तिकसिराचक्रेण, स्त्रियास्तु अनुयोनिगर्भाशयिकेणापि। तच्चेदं गुदवेष्टनं सिराचक्रं बाह्यमाभ्यन्तरञ्चेति द्विविधम्। तयोराभ्यन्तरं सिराचक्रमायतप्रायाभिः सिराभिः परस्परसंयुक्ताभिर्निर्मितम् अपानदेशं प्रति विशेषेण प्रसृतम्। तत् प्रतीहारिण्या सिरया विशेषेण सम्बध्यते सिराप्रतानैरान्त्रिकीसु सिरासु प्रविष्टैः। अस्य च सिराचक्रस्योर्द्ध्वमुखं रक्तप्रसरणं चेदवरुध्यते केनापि हेतुना, तदा पुरीषोत्सर्गकाले निर्भिन्नैः सिरामुखैरपानस्थैः प्रवर्त्तते शोणितनिःस्रवो बहुशः। तानि हि आयतसिरामुखानि कलावृतानि रक्तार्शसामायतनानि।

(ख) **औपस्थिकं सिराचक्रम्**[२] (१२१ चित्रम्) तद् भगास्थिसन्धानाधस्तादुपस्थमूलस्थम्। निर्म्मीयते च तत् शिश्नपृष्ठिकाभ्यां सिराभ्यां (स्त्रियास्तु भगपृष्ठिकाभिः सिराभिः), वस्तिद्वारस्थं पौरुषग्रन्थिं परितः स्थिताभिः सिराभिश्च। सम्बध्यते च सिराप्रतानैरनुवस्तिकेन सिराचक्रेण।

(ग) **अनुवस्तिकं सिराचक्रं**[३] वस्तिसंवेष्टनम् (१२१ चित्रम्)। तत् स्त्रिया अनुयोनिकसिराचक्रेण, पुंसश्च पूर्वोक्ताभ्यां सिराचक्राभ्यां सम्बन्धयुक्तम्।

(घ) **अनुयोनि-गर्भाशयिकं**[४] नाम सिराचक्रम् योनिगर्भाशययोः संवेष्टनभूतम्। तद् अनुयोनिकमनुगर्भाशयिकं चेति द्वेधा विभज्यते। तयोः पूर्वोक्तैः सर्वैरपि सिराचक्रैः सम्बन्धः। परिणामे च अनुयोनिकसिराचक्रीयं रक्तं द्वाभ्यामनुयोनिकाभ्यां सिराभ्यामधिश्रोणिकामाभ्यन्तरीं सिरां प्रविशति। अनुगर्भाशयिकसिराचक्रीयं तु रक्तं द्वाभ्यामनुगर्भाशयिकीभ्याम्।

---

१। Haemorrhoidal Plexus of Veins. २। Pudendal Plexus of Veins. ३। Vesical Plexus. ४। Uterine Plexus.

**अधिश्रोणिके साधारण्यौ**[1] नाम महत्यौ काण्डसिरे ( १२१ चित्रम् ) एकैकतः स्वसंज्ञयोर्बाह्याभ्यन्तरसिरयोः संयोगेन सम्भूते। ते त्रिकपृष्ठवंश-सन्धानपुरोभागात्तिर्य्यगन्तर्मुखं गत्वा चतुर्थपञ्चमकटिकशेरुकासन्धेः पुरस्ताद् दक्षिणतो मिलिते अपरां महासिरां रचयतः। तयोश्च दक्षिणा ह्रस्वा सरलप्राया च, सा स्वसंज्ञाया धमन्याः पृष्ठतो बहिःपार्श्वतश्च दृश्या। वामा दीर्घा तिरश्चीना च, सा आदौ स्वसंज्ञायाः धमन्याः अन्तःपार्श्वे, ततश्च तत्पृष्ठतो वर्त्तते। एकैका च सा कटिश्रोणिकां नाम सिरां संगृह्णाति, त्रिकपार्श्विकां च कदाचित्। वामा तु त्रिकमध्यामपीति विशेषः।

अथ अधरा महासिरा।

**अधरा महासिरा**[2] अधरशरीरार्द्धस्य रक्तसंग्राहिणी ( ११६।१२१ चित्रयोः )। सा साधारणीभ्यामधिश्रोणिकाख्यसिराभ्यां निर्म्मिता, चतुर्थ-पञ्चमकटिकशेरुकासन्धेः उपरिष्टान्महाधमन्या दक्षिणपार्श्वानुक्रमेणोर्द्ध्वं प्रसृता यकृत्पृष्ठस्थायां गम्भीरपरिखायां धार्यते। ततश्चोर्द्ध्वम् महाप्राचीरां निर्भिद्य पूर्वोक्तेन महासिराच्छिद्रपथेन उरोगुहां गाहमानाऽसौ हृदयस्य दक्षिणालिन्दमधो-देशात् प्रविशति, हृदयधरेण कलाकोषेण संवृतमुखी। अस्ति च तन्मुखे सिराकपाटिका रक्तस्य अधःप्रतिनिवर्त्तनवारणी, सा गर्भस्थशिशोरेव विशेषतः कार्य्यकरी स्फुटतरा च।

एष चास्या व्यतिकर उदरगुहायामधरोर्द्ध्वक्रमेण। अस्याः पुरस्ताद्— अन्त्रबन्धनीनां मूलदेशः, दक्षिणानुवृषणिका धमनी, ग्रहण्या अधरभागः, अग्न्याशयस्य शीर्षदेशः, पित्तवहं स्रोतः, प्रतीहारिणी सिरा, अभियाकृती धमनी, यकृत्पृष्ठं च। पश्चिमतः—पृष्ठवंशं, दक्षिणा कटिलम्बिनी दीर्घा नाम पेशी, महाप्राचीराया दक्षिणमूलं, धमन्यश्च दक्षिणाः सप्त ( अधरमहाप्राचीरिका, अनुवृक्का, अधिवृक्किनी, अनुकटिकाश्चतस्र इति ), पिङ्गलाख्या नाडी, दक्षिणाधि-वृक्कश्च। अस्या दक्षिणतो दक्षिणवृक्कः, गवीनी[3] च दक्षिणा। वामतस्तु महाधमनी, महाप्राचीराया दक्षिणमूलम्, यकृदेकदेशश्चेति।

---

१। Common Iliac Veins. २। Inferior Vena Cava. ३। Ureter.

सेयमधरा महासिरा अधिश्रोणिकाभ्यां साधारणीभ्यामपराभिश्च सिराभिरापूर्य्यते। ताश्च यथा—अनुकटिकाः ( अष्टौ ), दक्षिणा अनुवृषणिका ( स्त्रियास्तु अनुवीजकोषिका ), अनुवृक्का, दक्षिणा अधिवृक्किनी, दक्षिणा अधरप्राचीरिका, याकृत्यः सिराश्चेति। तत्र----

अनुकटिका नाम पृष्ठवंशस्य एकैकतश्चतस्रः सिराः ( ११६ चित्रम् ), ताः कटिपृष्ठोदरीयाणां विशेषतश्च पृष्ठवंशीयानां सिराणां संग्राहिण्यः। अस्ति च तासां पुरोवंशिकाग्राभिः सिराभिर्योजनी सिरा आरोहिणी अनुकटिका नाम पृष्ठवंशपुरस्तादूर्द्ध्वगा।

अनुवृषणिके नाम सिरे वृषणपृष्ठस्थयोः सिराजालयोर्वृषणवन्धनीद्वये पुञ्जीभूतयोः रक्तसंग्राहिण्यौ। एकैकतश्च सिराजालात् सम्भूतास्त्रिचतुराः सिराः वंक्षणसुरङ्गापथेनोर्द्ध्वं प्रसृताः क्रमेण द्वयोः सिरयोः स्वसंज्ञकधमनीसहचर्य्योः परिणमन्ति। तत्र दक्षिणा अनुवृषणिका अधरमहासिरां प्रविशति, वामा तु वामामनुवृक्कामिति विशेषः। स्त्रियास्तु ते एव अनुवीजकोषिके नाम वीजकोषाभ्यामागते सिरे भवतः।

अनुवृक्के नाम स्थूलसिरे वृक्काभ्यां विनिर्गते स्वसंज्ञयोर्धमन्योः पुरःस्थे ( ११६ चित्रम् )। तयोर्वामा दक्षिणायास्त्रिगुणदीर्घा महाधमन्याः पुरोभागमुल्लंघ्य प्रसृता, सा वामामनुवृक्काम् अधरमहाप्राचीरिकामधिवृक्किनीश्च सिरां संगृह्णाति। उभयोश्च तयोरधरमहासिरायां प्रवेशः।

अधिवृक्किन्यौ नाम सिरे द्वे अधिवृक्काभ्यां विनिर्गते ( ११६ चित्रम् )। तयोर्दक्षिणा अधरां महासिरां, वामा च वामामनुवृक्कां प्रविशति।

अधरमहाप्राचीरिका नाम द्वित्राः सिराः महाप्राचीरायास्तलदेशसम्भूताः। तासां दक्षिणा एकैव प्रायः, सा अधरमहासिरां प्रविष्टा। वामा तु सिराद्वयी अनुवृक्काम् अधिवृक्किनीमधरमहासिरां वा।

याकृत्यस्तु सिरा याकृतरक्तस्य संग्राहिण्यः। ताः प्रतीहारिण्याः सिरायाः शाखाप्रतानैर्यकृति विकीर्णं रसमिश्रं रक्तं सूक्ष्माभिः सिराभिः समूह्य क्रमशः स्थूलस्थूलतरपरिणामेण सम्भूताः। तासां तिसृषु स्थूलसिरासु कासुचित् तनुसिरासु च यकृत्पृष्ठनिगूढासु परिणामः। प्रविशन्ति च ता अधरां महासिरां तस्या यकृत्पृष्ठसंसक्तंभागमाश्रित्य।

# हार्दिकी मूलसिरा ( हृदयस्य पृष्ठस्था )।




( To face p. 150 )

[ २२। चित्रम् ]

## श्रोणि-वस्ति-गुदौपस्थिकाः सिरा ।




[ १ । अनुकटिका सिराः । २ । अधिश्रोणिका साधारणी सिरा । ३ । अधिश्रोणिका आभ्यन्तरी सिरा (दक्षिणा वामा च) । ४ । उत्तरगुदान्तिका सिरा । ५ । गुदवेष्टनं सिराचक्रम् । ६ । शिश्नपृष्ठिका सिरा । ७ । पौरुषग्रन्थिवेष्टनं सिराचक्रम् । ८ । गवीन्या अधरकर्त्तितांशः । ९ । गुदोपस्थिकाः सिराः । १० । अधिश्रोणिका वाह्या सिरा । ]

( To face p. 151 )

अथ प्रतीहारिणी सिरा ।

**प्रतीहारिणी**[१] नाम **महासिरा** ( १२२ चित्रम् ) आमाशय-पक्काशययोरन्नरसमिश्रं सिरारक्तं, प्लीहाऽग्न्याशय-पित्तकोषीयं सिरारक्तञ्च समूह्य यकृदभिप्रापयति । सा अन्नरसस्य अविशोधितस्य साक्षान्महासिरागमनं वारयतीति तथासंज्ञा । सेयं सिरा यकृति अभियाकृतधमन्या सह स्वयमपि धमनीवच्छाखाप्रशाखादिभिः प्रसृता याकृतपिण्डाणुकानि परितो जालकान्या-रचयति । पिण्डाणुकेषु प्राप्तपाकस्य च तद्रक्तस्य संग्रहो याकृतीभिः सूक्ष्म-सिराभिस्तदन्तर्गताभिः । याकृतसिराश्च वर्णितपूर्वाः ।

साऽसौ प्रतीहारिणी सिरा प्रायश्चतुरङ्गुलदीर्घा द्वितीयकटिकशेरुका-पुरोदेशादारभ्य तिरश्चीनगत्या यकृदभिगता । तथाविधायाश्च तस्याः पुरस्ताद् द्रष्टव्या अग्न्याशयस्य ग्रीवा, पश्चिमतश्च अधरा महासिरा । यकृत्प्रवेशात् पूर्वञ्च सा द्वयोः शाखयोर्विभज्यते । तयोर्दक्षिणा शाखा पित्तकोषप्रभवया सिरया मिलिता, यकृद्दक्षिणपिण्डं प्रविशति । वामा तु दीर्घतरा अग्रिम-पश्चिम-मध्यमयकृत्पिण्डयोः प्रशाखाद्वयं प्रेरयन्ती यकृद्वामपिण्डं प्रविष्टा । तस्यां च यकृत्प्रवेशात् पूर्वमेव प्रविष्टाः परिनाभिका योजन्यो नाम सिरा वक्ष्यमाणाः । पूर्य्यते च तया गर्भस्थशिशोः संवाहिन्या महासिरायाः परिशुष्कं शाखाद्वयं पूर्वपश्चिमदेशयोः ।

ताञ्चैतां प्रतीहारिणीसंज्ञां महासिरामापूरयन्ति—प्लैहिकी, उत्तराऽन्त्रिकी, आमाशयक्रोडिका, अनुग्रहणिका, पित्तकोषिणी चेति पञ्च सिरा मुख्याः, परिनाभिका योजन्यो नाम तनुसिराश्च परिसरीयाः । तत्र—

**प्लैहिकी**[२] नाम स्थूलसिरा ( १२२ चित्रम् ) प्लीहवृन्तात् त्रिचतुराभि-र्मूलसिराभिरुत्थाय अग्न्याशयस्य ऊर्द्ध्वधारानुक्रमेण अनुप्रस्थं दक्षिणतः प्रसृता । सेयं मध्येपथमग्न्याशयप्रभवाभिः सिराभिरापूरिता शेषभागे ऊर्द्ध्वमुख्या **आमाशयतलिका**[३]ख्यया सिरया मिलिता विशेषेण स्थूलत्वमापद्यते । संयुज्यते च उत्तरान्त्रिक्या सिरया अग्न्याशयस्य शिरसि प्रतीहारिण्याः सिरायाः सम्भवाय ।

---

१ । Portal Vein. २ । Splenic Vein. ३ । Right Gastro-epoploic Vein.

[ १२२ चित्रम् ]

# प्रतीहारिणी महासिरा

( आशय व्यतिकरेण दर्शिता )




आ—आमाशयः। य-य—यकृत् ।

१। अग्न्याशयः। २। ग्रहण्याः कर्त्तितांशः। ३। अधरान्त्रिकी सिरा।

४। उत्तरान्त्रिकी सिरा। ५। क्षुद्रान्त्रप्रभवाः सिराः।

---

* वृहदन्त्रस्य मध्यभागस्तु चित्रे कर्त्तितः अपसारितश्च अग्न्याशयादि प्रदर्शनाय।

**उत्तरान्त्रिकी**[१] नाम स्थूलसिरा ( १२२ चित्रम् ) क्षुद्रान्त्रेभ्यः, बृहदन्त्रस्य आरोहिभागात् मध्यमभागाच्च सम्भूतैः सिराप्रतानैः परस्परमिलितैरापूर्यते। सा अन्त्रमूलबन्धन्यामूर्द्ध्वमुखं प्रसृता क्रमशः स्थूला अग्न्याशयस्य क्रोडदेशमाश्रित्य तत्पृष्ठतो गत्वा प्लैहिक्या सिरया संमिलिता प्रतिहारिणीं सिरां निर्मिमीते। वपाऽमाशयिकाद्याः सिराश्च उत्तरान्त्रिकीमेव सिरां प्रविष्टाः।

**अधरान्त्रिकी**[२] नाम सिरा तु बृहदन्त्रस्य अवरोहिभागाद् रक्तसंग्राहिणी ( १२२ चित्रम् )। सा अग्न्याशयस्य मध्यभागपृष्ठं गत्वा प्लैहिक्या सिरया मिलितेत्युक्तपूर्वम्।

**आमाशयक्रोडिका**[३] नाम सिरा ( १२२ चित्रम् ) आमाशयस्य कोरोदरपरिधौ दृश्यमाना तत्पूर्वपश्चिमदेशस्थानां सिराणां संग्राहिणी। सा यकृद्वृन्तदेशे ग्रहणीपृष्ठतः प्रतीहारिणीं सिरां प्रविष्टा।

**अनुग्रहणिका**[४] नाम ह्रस्वसिरा ( १२२ चित्रम् ) ग्रहणीपार्श्विकाभिस्तनुसिराभिरापूरिता तदुपकण्ठ एव प्रतीहारिणीं सिरां प्रविशति वामतः।

**पित्तकोषिणी**[५] सिरा च तादृगेव पित्तकोषपरिसरादागता प्रतीहारिण्याः सिराया दक्षिणशाखां गाहते पित्तस्रोतसः पार्श्वगा।

**परिनाभिका योजन्यो**[६] नाम सिराः पुनरुदरपुरःपरिसरे शुष्कसंवाहिनीमनुवर्त्तमाना नाभित ऊर्द्ध्वम् प्रसृताः प्रतीहारिण्या वामशाखां प्रविष्टाः। ताश्च उदरपरिसरीयाभिः सिराभिरधिश्रोणिकाख्यसिराभिश्च सह प्रतीहारिण्याः सम्बन्धं प्रतिष्ठापयन्ति तनुसिराप्रतानैः सिराचक्राण्यारचयन्त्यः।

जलोदरादौ तु याकृतरक्तसंवहनस्य अवरोधे शनैः शनैः प्रवर्त्तमाने ताभिरेव सिराभिः कथमपि आमपक्वाशयाद्यागतस्य सिरारक्तस्य सार्वकायिकसिरासु एकांशेन प्रवेशः, अपरांशेन च उदरगुहान्तर्जलसञ्चयः। तेन औदर्य्याणामुत्तानसिराणां तदा स्फुटतरत्वमिति विशेषेण स्मर्त्तव्यम्।

सैषा प्रतीहारिणी सिरा समूलशाखा व्याख्याता।

---

१। Superior Mesenteric Vein. २। Inferior Mesenteric Vein. ३। Coronary Gastric Vein. ४। Pyloric Vein. ५। Cystic Vein. ६। Par-umbilical Veins.

**पृष्ठवंशीयाः सिराः** पुनरसंख्या विचित्रसन्निवेशाश्च (१२३ चित्रम्)। ताः कशेरुकाः संवेष्ट्य वहिरन्तश्च सर्वतस्तिष्ठन्ति परस्परयोजनीभिः सिराभिर्मिलिताः। तासां पञ्चधा विभागो वर्णनासौकर्य्याय। तद्यथा—

(१) काशेरुकसिराचक्रं बाह्यं[१] कशेरुकाणां वहिःपरिधिसंवेष्टनम्। तच्च अग्रिमपश्चिमयोः सिराचक्रयोः स्फुटतरं विभक्तम्। तत्र अग्रिमं कशेरुपिण्डानां पुरःस्थम्, पिण्डान्तरीयसिराभिरापूर्य्यते विशेषेण। पश्चिमं काशेरुकसिराचक्रं पृष्ठस्थम्, तस्याः पूरणं प्रायेण गम्भीरपृष्ठपेशीप्रभवाभिः सिराभिः।

(२) काशेरुकसिराचक्रमाभ्यन्तरं[२] सुषुम्नाविवरस्य संवेष्टनम् (चित्रे २ सु २)। तत् सुषुम्नाकाण्डवृतेः कलायाः अस्थिमयस्य विवरपरिधेश्चान्तराले वर्त्तते। तच्च स्थूलतराभिः सिराभिः कशेरुपिण्डपृष्ठस्थाभिरुपचितं विशेषात्।

(३) कशेरुपिण्डान्तरीयाः सिराः[३] कशेरुकापिण्डानि निर्भिद्य शरगत्या वहिर्गताः बाह्याभ्यन्तरयोः सिराचक्रयोः प्रविष्टाः। सिराचक्रयोजन्यः सिरास्तु सर्वतः प्रसृताः परस्परसम्बन्धिन्यः।

[ १२३ चित्रम् ]




१११ पृष्ठकण्टक वेष्टनं सिराजालम्।

(४) कशेरुचक्रान्तरीयाः सिराः[४] कशेरुचक्रान्तरालस्थितैश्छिद्रैर्नाडीभिः समं निर्गताः। ताः बाह्याभ्यन्तरसिराचक्रयोः शोणितं संगृह्णन्त्यः ग्रीवामध्यकायाभ्यन्तरीयासु सिरासु इत्थं प्रविशन्ति। ग्रीवागताः मस्तिष्कमातृकयोः सिरयोः, पृष्ठभागीयाः पर्शुकानुगासु, कटिगताः अनुकटिकासु त्रिकपार्श्विकासु चेति। समाप्यते चैतावता सिराखण्डम्।

---

१। External Vertebral Venous Plexuses. २। Internal Vertebral Venous Plexuses. ३। Inter-vertebral Veins. ४। Basi-vertebral Veins.

# प्रत्यक्षशारीरम् ।

## रसायनीखण्डम् ।

### प्रथमोऽध्यायः ।

अथातो रसायनीसामान्यवर्णनीयमध्यायं व्याख्यास्यामः ।

**रसायन्यो**[१] नाम रसवाहिन्यः प्रणालिकाः सूक्ष्माः सर्वत्र शरीरे प्रसृताः, अन्यत्र नख-रोम वहिस्त्वक्-तरुणास्थिभ्यः । तासां सूक्ष्मतरास्तनुस्वच्छेन प्राचीरिकाद्वयेन निर्म्मिताः, अन्यास्तु प्राचीरिकात्रयेण । आकृतितश्च सर्वा अपि ताः सूक्ष्ममुक्तागुच्छाकाराः शिथिलकार्पाससूत्राकारा वा ( पुरश्चित्रम्, १२५ चित्रञ्च ) ।

रसश्च द्विविधः—शुद्धो मिश्रश्चेति । तत्र यः शोणितस्य तन्वच्छभागो लसीकाख्यो जालकेभ्यः स्यन्दमानो धातून् पुष्णाति, धातुपोषणावशिष्टश्च रसायनीभिः प्रतिनिवर्त्तते, स शुद्धः[२] । यः पुनरन्त्रेभ्यो दुग्धघृतादीनां स्नेहबहुलः सारो लसीकामिश्रः पयस्विनीसंज्ञैः स्रोतोभिराकृष्यमाणो रसप्रपां प्रविशति, स मिश्रः । तस्य पायस[३] इति संज्ञा, तत्सादृश्यात् । सोऽसौ द्विविधोऽपि रसो रसकुल्याभ्यां गलमूलिकयोः सिरयोः प्रविशति, ततश्चोत्तरमहासिरया हृदयमित्युक्तपूर्वम् ।

असंख्याश्च ता रसायन्यः कक्षावंक्षणोदरादिप्रदेशेषु लसीकाग्रन्थीन् गाहन्ते, समर्पयन्ति च रसं तदभ्यन्तरतः । स च रसस्तेषु संचरन् सम्यग्विशोधितः पुनरभिप्रवर्त्तते नवीनाभीरसायनीभिः । ताश्चाग्रे प्रसरन्त्यो मध्ये-पथमपराभिरपि रसायनीभिर्मिलिताः पुनरपि तादृशान् ग्रन्थीन् प्रपद्यन्ते । एवञ्चोत्तरोत्तरं परस्पर-संमेलनेन स्थूलस्थूलाः स्वल्पतरसंख्याश्च रसायन्यो रसप्रपां रसकुल्ये वा प्रविशन्ति । सन्ति च तासु यथाप्रयोजनं कपाटिकाः

---

१ । Lymphatic Vessels or Lymphatics. २ । Lymph ( Pure ) ३ । Chyle. यस्तु आग्नेयरसः पूर्वोक्त आमाशय-पक्काशयाभ्यामुद्भूतः सिरामार्गमाश्रित्य रक्तेन मिश्रीभूय प्रविशति प्रतीहारिणीं सिराम्, स पृथगेव ।

सिराकपाटिकावत्, लसीकायाः प्रतिनिवर्त्तनवारणाय। ताश्च रसकुल्ययोः स्फुटतमाः।

कार्य्यं तावद् रसायनीनां न केवलं रससंवहनं किन्तु शोषणमपि अभ्यङ्गादीनाम्। तथा च सविषकण्टकादिविद्धस्य तद्विषवीसर्पो रसायनीभिरेव प्रपद्यन्ते लसीकाग्रन्थीन्।

**रसग्रन्थयो लसीकाग्रन्थयो**[1] वा नाम (१२५ चित्रम्) बहवो गुञ्जा-निम्बफल शिम्बीबीजाद्याकारा मृदुस्पर्शा ग्रन्थयः, ये कक्षा-वंक्षण-ग्रीवा-कर्णमूलादिषु बाह्यप्रदेशेषु, उदरोरसोरभ्यन्तरतश्च दृश्याः, ते रसायनीमार्गेषु मुस्तककन्दवत् पुञ्जीभूताः पृथक् चाऽवतिष्ठन्ते। ते बहिर्भागे तनुस्नायुमयैः कोषैः प्रावृताः, स्वक्रोडदेशेषु किञ्चित् खाताङ्किताश्च। तैश्च खातैस्तदन्तः प्रविशन्ति सिरा-धमनी-नाडीनां सूत्राकाराः प्रताना रसायन्यश्च। एकैकग्रन्थिपरिधेश्च विनिर्गताः नवीना रसायन्यः तदभ्यन्तरविशोधितं रक्तं संगृह्णन्ति। एवञ्च द्विविधा रसायन्यः—ग्रन्थिप्रवेशिन्यः ग्रन्थिविनिर्गताश्चेति।

अनुवीक्षणयन्त्रसहायेन चक्षुषा तु दृश्या ग्रन्थीनामभ्यन्तरतः स्नायुप्राचीरिका स्तदन्तरालेषु च रसजालिकाः प्रत्यग्रश्वेतकणिकासङ्कुलाः, यासु सञ्चरन् रसायनीभिरानीतो रसो निर्विषत्वमापद्यते, आपूर्यते च श्वेतकणिकाभिस्तद्रक्षिभूताभिः।

यदा पुनः शरीरे कस्यापि विषस्य संक्रमणं रसायनीमार्गैः, तदा लसीकाग्रन्थिष्वेवादौ तदवरोधस्तत्रैव तद्विध्वंसनप्रयत्नश्च। तस्मात् शरीररक्षिभूताः खल्विमे लसीकाग्रन्थयः। प्रवर्त्तमाने च विषविध्वंसनप्रयत्ने रुजाशोथौ, काठिन्यं, विशेषेणाकारबृहत्त्वं च ग्रन्थीनां प्रादुर्भवन्ति, क्वचिद्रसायनीनां च तद्ग्रन्थिप्रवेशिनीनाम्। अथ विषस्य तीव्रत्वविशेषे विपद्यमानेषु ग्रन्थिषु व्रणवत् पाकः पूयसम्भवश्च।

**रसकुल्ये**[2] नाम (१२६ चित्रम्) समग्रस्य शरीरस्य रससंग्राहिण्यौ प्रणाल्यौ। तयोर्वामा अतिदीर्घा समग्रमुरोदेशं निर्भिद्य ऊर्द्ध्वं गता, सा समग्रस्य शरीराधरार्द्धस्य वामोत्तरार्द्धस्य च रससंग्राहिणीति मुख्या-रसकुल्येति रसकुल्येति वा केवलम् कथिता। सेयम्—

---

१। Lymphatic Glands. २। Lymph ducts.

**मुख्या (महती, वामा वा) रसकुल्या**[1] (१२४ चित्रम्) प्रायो वितस्तिप्रमाणदैर्घ्या, शरेषीकापरिणाहा, ऊर्द्ध्वं क्रमशः संकुचितमुखी, कटिवंशपुरःस्थाया रसप्रपाया निर्गत्य महाप्राचीरामध्यस्थेन महाधमनीच्छिद्रपथेन उरसि प्रविश्य पृष्ठवंशपुरोभागाऽनुक्रमेणोर्द्ध्वं सर्पवत् कुटिलगत्या प्रसृता। सा सप्तमग्रीवाकशेरुकायाः पुरस्तादग्रे वक्रीभूय अक्षाधरां धमनीमुल्लंघ्य अनुमन्याऽक्षाधरयोः सिरयोः संयोगस्थले गलमूलिकां सिरां प्रविष्टा। (व्यतिकरः) उरसि च पश्चिमफुस्फुसाऽन्तराले वर्त्तमानायास्तस्या वामतो दृश्या महाधमनी, दक्षिणतो दक्षिणा पुरोवंशिका नाम सिरा, पुरस्ताद्दक्षिणतश्च अन्ननलिका, पश्चिमतश्च पृष्ठवंशः।

**दक्षिणा रसकुल्या**[2] तु (१२४ चित्रम्) क्षुद्र अर्धाङ्गुलमात्रदीर्घा शरेषीकापरिणाहा च केवलं ग्रीवामूले दृश्या। सा दक्षिणयोरनुमन्याऽक्षाधरयोः सिरयोः संयोगस्थले ग्रीवामूलिकां सिरां प्रविष्टा। तस्या निर्म्माणं तिसृभिः स्थूलरसायनीभिः, तासामेका दक्षिणबाहुरसायनीनां संग्राहिणी, अपरा शिरोग्रीवदक्षिणार्द्धस्य, अन्या उरोदक्षिणार्द्धस्थानामाशयादीनाम्। ताश्च स्थूलरसायन्यः क्वचित् पृथगपि पूर्वोक्तसिरासन्धिं प्रविशन्ति। तदा दक्षिणारसकुल्यायाः सर्वथाऽभावः।

ता एता रसायन्यो रसग्रन्थयश्च समासेन व्याख्याताः। विस्तरोऽतऊर्द्ध्वम्।

**रसप्रपा**[3] नाम (१२४ चित्रम्) रसाधारिका प्रथमद्वितीययोः कटिकशेरुकयोः पुरस्तान्महाधमनीपृष्ठतश्च वर्त्तते। सा चतुरङ्गुलदीर्घा द्व्यङ्गुलायता निम्नतः स्थूला लघुपटोलफलसमाकारा च प्रायः। प्रविशन्ति च तां तिस्रः स्थूलरसायन्यः—द्वे कटिमूलिके, एका च आन्त्रिकीति। ताश्च सर्वा अपि महाधमनीं परितः स्थितेभ्यो रसग्रन्थिभ्यो विनिर्गताः। तासां कटिमूलिके अधरशरीरार्द्धस्य वस्तिवृक्कादेश्च लसीकामभिवहतः, आन्त्रिकी तु आमाशय-पक्वाशययकृत्प्लीहादेः। ग्रन्थिषु च तेषु प्रविष्टास्तास्ता रसायन्यः, पयस्विन्यश्चान्त्रेभ्यो दुग्धसदृशं पायसाख्यं रसमभिवहन्त्यः।

---

१। Thoracic Duct २। Right Lymphatic Duct. ३। Cisterna Chyli.

[ १२४ चित्रम् ]

## रसप्रपादिसंस्थानम् ।




११ अन्नाधरा सिरा । २१२ अनुमन्या सिरा ।

सेयं रसप्रपा ऊर्द्ध्वं क्रमशः संकुचितमुखी महत्यां रसकुल्यायां परिणमति महाप्राचीराधस्तले । युज्यन्ते च तया तत्रैव महाप्राचीरोर्द्ध्वञ्च काश्चन रसायन्यः पश्चिमपर्शुकान्तरालीयेभ्यो लसीकाग्रन्थिभ्यः समागताः, फुस्फुसान्तरालीय-ग्रन्थिभ्यः समागताश्च । ग्रीवामूलं प्राप्तां च तां प्रविशन्ति तिस्रः स्थूलतर-रसायन्यः । तद्यथा—वामा ग्रीवामूला या शिरोग्रीववामार्द्धस्य रसायनीनां संग्राहिणी, वामा बाहुमूला, वामा उरोमूला चेति ।

---

## द्वितीयोऽध्यायः ।

अथातो रसायनीविशेषवर्णनीयमध्यायं व्याख्यास्यामः ।

सत्यपि सामान्यतो रसायनीविज्ञाने विशेषा अवश्यं ज्ञातव्याः, स्थान-सम्बन्धपरिज्ञानार्थम्, वीसर्पगतिनिर्णयार्थञ्च । तस्मादिहाधुना रसग्रन्थीन् रसायनीश्च ससम्बन्धं नातिसंक्षेपविस्तरञ्च ब्रूमः ।

तेषां विभागः पञ्चसु प्रदेशेषु—शिरोग्रीवे, ऊर्द्ध्वाधःशाखासु, उदरोरसोश्चेति ।

अथ शिरोग्रीवीया रसग्रन्थयो रसायन्यश्च ।

तत्र शिरसि रसग्रन्थयः सप्तसु बाह्यप्रदेशेषु द्रश्याः । तद्यथा—

(१) **कपालमूलिकाः**[१] नाम द्वित्रा ग्रन्थयः ( १२५ चित्रम् ) शिरो-ग्रीवसन्धेः पृष्ठतः पश्चिमकपालमूलस्थाः । तान् प्रविशन्ति करोटिपश्चिमा रसायन्यः ।

(२) **पश्चिमकर्णिका**[२] नाम ( १२५ चित्रम् ) तावन्त एव ग्रन्थयः कणपृष्ठे एकैकतः । तान् प्रविशन्ति शंखदेशादूर्द्ध्वंगताः कर्णपश्चिमाश्च रसायन्यः ।

(३) **अग्रिमकर्णिका**[३] नाम च तावन्तः कर्णपालीपुरस्तादूर्द्ध्वभागे । तेषु प्रविष्टाः कर्णपालीप्रभवाः काश्चन रसायन्यः ।

(४) **पुरःकर्णमूलिका**[४] नाम रसग्रन्थयः ( १२५ चित्रम् ) कर्णमूले पुरस्तादेकैकतः । ते द्वयोः ग्रन्थिपुंजयोर्विभक्ताः । तयोराद्यो ग्रन्थिपुञ्ज उत्तानः,

---

१ । Occipital Glands. २ । Posterior Auricular Glands. ३ । Anterior Auricular Glands. ४ । Parotid Lymph-glands.

स त्वगधस्तात् कर्णमूलिकाख्यस्य महतो लालाग्रन्थेः पिण्डान्तरे च वर्त्तते, तं प्रविशन्ति शिरोऽपाङ्ग-कर्ण-ललाटाऽगता रसायन्यः। द्वितीयो ग्रन्थिपुंजो गम्भीरो गलविलपार्श्वस्थः, तस्मिन् नासा-तालु-गल-विलप्रभवाणां रसायनीनां प्रवेशः।

(५) **मौखिका**[१] नाम मुखसम्बन्धिनः सप्ताष्टौ वा क्षुद्रा रसग्रन्थयो मुखस्य एकैकपार्श्वे त्रिधा सन्निविष्टाः। नेत्राऽधरप्रदेशे नेत्राऽधरीया नाम द्वित्राः, कपोले सृक्कणीबहिर्देशे तावन्तः कपोलिका नाम, तदधश्चाधो-हनुपार्श्वतो हनुपार्श्विका नाम इति। तेषु नेत्रपुट-नेत्रवत्मप्रभवाणां गण्ड-नासा-मुखोत्थानाञ्च रसायनीनां प्रवेशः। सन्ति च गभीरग्रन्थयोऽपि द्वित्रास्तत्रैव हनुकुन्त-कूटयोरन्तराले, ते मुख-नासा-गलविलरसायनीनां रससंग्राहकाः।

(६) **जिह्वामूलिका**[२] नाम द्वित्राः क्षुद्रग्रन्थयो जिह्वामूले चिबुक-जिह्वाकण्ठिकयोः पेश्योर्मध्यस्थाः। जिह्वामूलस्थानां कासाञ्चिद् रसायनीनां तेषु प्रवेशः।

(७) **गलविलपश्चिमा**[३] नाम द्वित्रा ग्रन्थयो ग्रसनिकायाः पश्चिमतो निगूढाः। ते नासागलविलगतानां कासाञ्चिद्रसायनीनां रसं शोधयन्ति।

सर्वेभ्यश्चैतेभ्यो विनिर्गता रसायन्यो गम्भीरग्रीविकेषु ग्रन्थिषु प्रविष्टाः।

ग्रीवायान्तु द्विविधा रसग्रन्थयः—उत्ताना गम्भीराश्च। तत्र—

(१) **उत्तानग्रीविका**[४] नाम ग्रन्थयस्त्रेधा विभज्यन्ते—हन्वधरीयाः, कण्ठिकोत्तराः, पुरोग्रीविकाश्चेति। तेषु—

(क) **हन्वधरीयाः**[५] नाम (१२५ चित्रम्) पञ्चषा रसग्रन्थयो हनुकोणाधस्ताद् वर्त्तन्ते, तन्नामक-लालाग्रन्थेः पुरःस्थाः। तेषु प्रविशन्ति भ्रूमध्य-नासापार्श्व-गण्ड-जिह्वाऽधरोष्ठ-दन्तवेष्टाद्यागता रसायन्यः।

(ख) **कण्ठिकोत्तरा**[६] नाम (१२५ चित्रम्) द्वित्रा रसग्रन्थयः कण्ठिकास्थ्न उपरिष्टान्मध्यरेखामुभयतः। ते जिह्वाग्र-मुखभूमिप्रभवाणां रसायनीनां लसीकामाददते।

---

१। Buccinator Lymph-glands. २। Lingual Lymph-glands. ३। Retro-pharyngeal Lymph-glands. ४। Superficial Cervical Lymph-glands. ५। Sub-maxillary Lymph-glands. ६। Sub-mental or Supra-hyoid Lymph-glands.

(ग) पुरोग्रीविका: **मन्यापुरस्त्या**[1] **वा** नाम बहवो रसग्रन्थयो मन्याख्यपेश्याः पुरस्ताद् अधिमन्याख्यसिरामुभयतः, मध्ये च मन्ययोः, क्लोमनलिकामुभयतो वर्त्तन्ते। तेषु पूर्वोक्तानां कर्णमूल-कपोलाद्यागतानां ग्रीवागतानाञ्च कासाञ्चिद् रसायनीनां प्रवेशः।

(२) **गम्भीरग्रीविका**[2] नाम रसग्रन्थयः (१२५ चित्रम्) प्रायो विंशतिः पञ्चविंशतिर्वा। ते मन्याख्यपेश्या गम्भीरप्रावरण्या च प्रावृता ग्रीवापार्श्वयोरवतिष्ठन्ते, अनुवर्त्तन्ते च प्रायेण अन्तर्मातृकां धमनीमनुमन्याख्यां सिराञ्च आगलमूलमुभयतः।

[ १२५ चित्रम् ]

## शिरोग्रीवीया रसग्रन्थयो रसायन्यश्च।




क—कर्णमूलिकाख्यो लालाग्रन्थिः तत्पृष्ठतश्च अग्रिमकर्णिका रसग्रन्थयः।

१। Anterior Cervical Lymph-glands. २। Deep Cervical Lymph-glands.

सर्वासाञ्च करोटिबाह्यानां, करोटिगुहान्तरीयाणां, गम्भीरग्रीविकाणाञ्च रसायनीनां तैरेव चरमः सम्बन्धः ।

तेभ्यो विनिर्गताश्च सर्वा अपि रसायन्यः क्रमशः परस्परं मिलिताः द्वित्राः स्थूलरसायनीरारचयन्ति ग्रीवामूलयोरेकैकतः । तासां दक्षिणवामयोः रसकुल्ययोर्यथासम्भवं प्रवेशः ।

[ १२६ चित्रम् ]

## ऊर्ध्वशाखीया रसग्रन्थयो रसायन्यश्च ।



अथ ऊर्द्ध्वशाखीया रसग्रन्थयो रसायन्यश्च ।

एकैकस्यामूर्द्ध्वशाखायां द्विविधा रसग्रन्थयः—उत्ताना गम्भीराश्चेति । तत्र—( १२६ चित्रम् )

उत्ताना रसग्रन्थयः कूर्परान्तःसीम्नि, अंसपुरस्ताच्च वर्त्तन्ते । तेषां कूर्परान्तरिको[१] नाम ग्रन्थिरेको ( द्वौ वा ) कूर्परसन्धेरुपरिष्टादन्तर्बाहुकायाः सिरायाः पार्श्वतः । तस्मिन् कासाञ्चिदुत्तानरसायनीनां करप्रकोष्ठान्तःसीमस्थानां प्रवेशः । अंसान्तरिकोऽपि ग्रन्थिरेको द्वौ वा अंसच्छदायाः पेश्या अन्तःसीम्नि पुरश्च दृश्यः । तत्र कासाञ्चिदंसगतानामुत्तानरसायनीनाम् प्रवेशः ।

गम्भीराः रसग्रन्थयः पुनः कक्षान्तरीया[२] नाम एकैकतः कक्षादर्यां तदुपकण्ठे च दृश्याः । ते प्रायेण कक्षाधरे सिराधमन्यौ अनुवर्त्तन्ते, छाद्यन्ते च उरश्छदाभ्यां पेशीभ्याम् । सन्ति च तत्सम्बन्धिनो ग्रन्थयः अक्षकास्थ्नोऽधस्तादपि पेशीच्छादिताः, तेषु विशेषेण उरःपुरःस्थानां स्तनप्रभवाणाञ्च कासाञ्चिद्रसायनीनां प्रवेशः । सर्वासां बाहवीयानां, बह्वनामुरःपुरःस्थानाञ्च कक्षान्तरीयेषु परिणामे ।

कक्षान्तरीयग्रन्थिभ्यो विनिर्गता रसायन्यस्तु क्रमेण परस्परमिलिताः ग्रीवामूले एकैकतो द्वित्रासुः स्थूलरसायनीषुः परिणमन्ति । तासां पूर्वोक्तदिशा शिरोग्रीवीयस्थूलरसायनीभिर्मिलितानां रसकुल्ययोः प्रवेशः । क्वचित् पृथगपि वा पूर्वोक्तसिरासन्धौ ।

अथ अधःशाखीया रसग्रन्थयो रसायन्यश्च ।

एकैकस्यामधःशाखायां द्विविधा रसग्रन्थयः—उत्ताना गम्भीराश्च । तेषां त्रिषु प्रदेशेषु विभागः—जानुपृष्ठिके खाते, अनुवंक्षणीयच्छिद्रं परितः, वंक्षणदेशे च । तत्र—

जानुपृष्ठिका[३] नाम क्षुद्रा रसग्रन्थयः षट् सप्त वा साकल्येन । तेषां चत्वारः पञ्च वा उत्तानाः जानुपृष्ठस्थे खाते मेदोऽनुविद्धाः, ते जंघापश्चिमानां रसायनीनां संग्राहिण्यः । अवशिष्टो ग्रन्थिः ( ग्रन्थिद्वयं वा ) जानुसन्धिकोषस्य

---

१ । Supra-trochlear Lymph-gland. २ । Axillary Lymph-glands.

३ । Popliteal Lymph-glands.

[ १२७ चित्रम् ]

## अधःशाखीया रसग्रन्थयो रसायन्यश्च ।



पृष्ठस्थः, स जानुसन्धिवेष्टनीः रसायनीरादत्ते। तेभ्यो निर्गताश्च रसायन्यः प्रायेण और्वीसंज्ञे सिराधमन्यौ अनुवर्त्तमाना गम्भीरवंक्षणीयान् ग्रन्थीन् प्रविशन्ति।

**अनुवंक्षणीया**[1] नाम पञ्चषा ग्रन्थयो वंक्षणाधस्तादूरुमूलपुरोभागे वर्त्तन्ते (१२७ चित्रम्) अनुवंक्षणीयं 'ठकारच्छिद्र' परितः। तेषां त्रिचतुरा उत्तानाः, द्वित्राश्च गम्भीराः। तेषु प्राधान्येन कासांचित् शिश्नाण्डकोषीयाणामधःशाखीयानाञ्च रसायनीनां प्रवेशः।

**वंक्षणीया**[2] नाम रसग्रन्थयो वंक्षणिकाख्यस्नायुरज्वा अनुक्रमेण तिर्य्यगास्तृताः—उत्ताना गम्भीराश्च (१२७ चित्रम्)। तेषां संख्या दशकादारभ्य विंशतिपर्य्यन्ता। ते गुदोपस्थवृषणनितम्बीयानाम् अधःशाखीयानाञ्च रसायनीनां पूर्वोक्तग्रन्थिभ्यो विनिर्गतानां लसीकां विशोधयन्ति। उदरनिम्नार्द्धपरिसरीया अपि रसायन्यस्तानेव प्रविष्टाः। चरणक्षतादिसम्भूतं हि वीसर्पादिविषं, फिरङ्गादिविषं च शिश्नक्षतादिप्रभवं, वंक्षणग्रन्थिष्वेव प्रसर्पतीति अवधेयम्।

दृश्यते च क्वचिद् गृध्रसीद्वारेऽपि रसग्रन्थिरेको (द्वौ वा), गृध्रसीद्वारिको नाम। स अनिश्चितावस्थानः।

वंक्षणीयग्रन्थिभ्यो विनिर्गताश्च रसायन्यो वंक्षणदरीपथेन और्व्याख्ये सिराधमन्यौ अनुवर्त्तमाना उदरगुहायामधिश्रोणिकान् बाह्यान् नाम रसग्रन्थीन् गाहन्ते।

अथ औदर्य्या रसग्रन्थयो रसायन्यश्च।

**औदर्य्या**[3] नाम असंख्यप्राया रसग्रन्थयो द्विविधाः—परिसरीयाः, आशयिकाश्चेति। परिसरीयाः पुनर्द्विविधाः—बाह्या आभ्यन्तराश्च। आशयिकास्तु आभ्यन्तरा एव। सर्वेऽपि ते महाधमनीं तत्काण्डशाखाश्च विशेषेण अनुवर्त्तन्ते, इतरशाखाप्रशाखाश्च काश्चिदेव। सर्वे च परिसरीया रसग्रन्थयो धमनीशाखानुसारिसंज्ञाः। आशयिकास्तु आशयसंज्ञाभिः संज्ञायन्ते। तेषु चेह मुख्यानेव रसग्रन्थीन् व्याचक्ष्महे, केषांचिदौदर्यरोगाणां संप्राप्तिपरिज्ञानाय। तत्र—

---

१। Sub-inguinal Lymph-glands. २। Inguinal Lymph-glands.

३। Abdominal Lymph-glands.

(१) परिसरीयाः रसग्रन्थयः पुनर्न सन्ति बाह्याः। आभ्यन्तरेषु च अधिश्रोणिका उत्तराः, अधिश्रोणिका अधराः, अनुकटिकाश्चेति त्रिविधा मुख्याः। तेषु—

[ १२८ चित्रम् ]

## अधिश्रोणिका रसग्रन्थयः।




१।१ अधिश्रोणिका उत्तरा नाम रसग्रन्थयः। २।२ त एव अधराः।
३।३ अधिश्रोणिका साधारणी धमनी। ४ बस्तिसमुत्था रसायन्यः।

**अधिश्रोणिका उत्तरा**[१] नाम एकैकतः अष्टौ दश वा पृथुतरा रसग्रन्थयो जघनोदरे महाधमनीमधरमहासिराञ्च अनुवर्त्तन्ते (१२८ चित्रम्)।

---

१। Upper Pelvic Lymph-glands.

तान् प्रविशन्ति अधःशाखीया वंक्षणोदरपरिसरीयाश्च रसायन्यः। उपस्थ-मूल-वस्तिप्रभवाणां योनिगर्भाशयिकानाञ्च कासाञ्चिद्रसायनीनां तेषु प्रसरः।

**अधिश्रोणिका अधरा**[1] नाम ग्रन्थयो बहवो वस्तिगुहान्तरे दृश्याः। वस्तिगुहापरिसरीया गुद-वस्ति-मूलाधाराद्यागताश्च रसायन्यः प्राधान्येन तानेव प्रविशन्ति।

**अनुकटिका** नाम असंख्यकल्पा ग्रन्थयः (१२४ चित्रम्) कटिवंशस्य पुरस्ताद् महाधमनीं परितो वर्त्तन्ते। तेषु पूर्वोक्तग्रन्थिप्रभवाणां रसायनीनां प्रवेशः। तत्प्रभवाणाञ्च रसप्रपायाम्।

(२) आशयिकाश्च ग्रन्थयः त्रिधारां नाम महाधमन्याः अक्ष-शाखाम्, उत्तरान्त्रिकीमधरान्त्रिकीञ्च धमनीमनुवर्त्तन्ते। तत्र त्रिधारायाः प्रधानशाखात्रयसंज्ञानुसारेण ग्रन्थयोऽपि अभि-याकृताः, अभ्यामाशयिकाः, अभिप्लीहिकाश्चेति संज्ञिताः। आन्त्रिक्योर्धमन्योरनुवृत्तयाऽवस्थिता ग्रन्थयस्तु अन्त्रमूलबन्धनीनामभ्यन्तरस्थाः, ता **अन्त्रमूलिका** उत्तरा अधराश्चेति अभिधीयन्ते। तत्र—

अभियाकृता नाम बहवः क्षुद्रग्रन्थयो ग्रहण्यधोदेशे यकृन्मूले च तिष्ठन्ति, ते याकृतरसायनीनां भूम्ना रससंग्रहणार्थाः।

अभ्यामाशयिका नाम बहवः क्षुद्रग्रन्थयः, आमाशयमभितः तदुत्तराधर-देशयोरास्तृताः। आमाशयप्रभवाणां रसायनीनां तेषु प्रसरः।

अभिप्लीहिका नाम ग्रन्थयः अग्न्याशयस्य ऊर्द्ध्वधारानुक्रमेण प्लीहमूलमभि-गताः। ते प्लीहाग्न्याशयोत्थानां रसायनीनां रसं संगृह्णन्ति।

**अन्त्रमूलिका**[2] नाम रसग्रन्थयः पुनः सार्द्धशतसंख्याः प्रायः। तांश्च अन्त्रेभ्यः सौम्यरसाकर्षण्यः पयस्विन्यो नाम रसायन्यः प्रविशन्ति। तद्विनिर्गतानां तु रसायनीनां प्रवेशो रसप्रपायामेव (१२४ चित्रम्)।

तेषां च ग्रन्थीनां रुजाशोथौ कठिनीभावश्च औदर्य्ययक्ष्मणि विशेषात्, आन्त्रिकज्वरादौ च स्तोकेन भवन्तीति विशेषेण स्मर्त्तव्यम्।

---

१। Upper Pelvic Lymph-glands. २। Mesenteric Lymph-glands.

औदर्य्यो रसायन्यस्तु बहिःपरिसरीया वंक्षणीयग्रन्थिषु प्रविष्टा नाभेरधःस्थाः, उरोऽन्तःपरिसरीयग्रन्थिषु च नाभेरूर्द्ध्वस्थाः। कटीपृष्ठस्थास्तु पेशीर्निर्भिद्य उदरान्तःस्थेषु अनुकटिकाख्येषु पश्चिमग्रन्थिषु प्रविशन्ति। अभ्यन्तरपरिसरीयाः पुनर्यथासम्भवम् अन्तःपरिसरीयग्रन्थीनधिश्रोणिकादीन् गाहन्ते। आशयिकास्तु आशयान् परिवृत्य वर्त्तमाना आशयिकग्रन्थीन् पूर्वोक्तान् यथासम्भवमभिसंविशन्ति।

अथ औरस्या रसग्रन्थयो रसायन्यश्च।

ते द्विविधाः—परिसरीया आशयिकाश्च। परिसरीयाः पुनर्द्विविधाः—बाह्या आभ्यन्तराश्च। आशयिकास्तु आभ्यन्तरा एव। तत्रादौ रसग्रन्थीन् ब्रूमः।

(१) परिसरीया रसग्रन्थयो बाह्याः केचनैव उरःपुरोभागे (१२६ चित्रम्)। दृश्यन्ते तु कक्षान्तरीयाः अक्षकाधरीयाश्च उरोबाहुसन्धौ, ते वर्णितपूर्वाः। उरःपूर्विकाणां बाह्यरसायनीनां भूम्ना तेषु प्रवेशः, अभ्यन्तरतश्च कासाञ्चित्। प्रविशन्ति च प्रायस्तानेव स्त्रीणां स्तनपरिसरीयाः स्थूलतमाः। उरोऽन्तःपरिसरीयाणां तु रसायनीनाम् अभ्यन्तरत एव रसग्रन्थिषु प्रवेशः।

आभ्यन्तरा रसग्रन्थयः पुनरुरःपरिसरे त्रिविधाः। तद्यथा—

उरःफलकपार्श्वगाः[1] (उपपर्शुकान्तरालीया वा) नाम ग्रन्थयः उरःफलकमुभयतो वर्त्तमानयोरन्तःस्तनिकाख्यधमन्योरनुसारिणः। ते एकैकतः पञ्चषाः, क्षुद्रतराश्च उपपर्शुकान्तरालेषु दृश्याः। तेषु प्रवेशः—कासाञ्चित् स्तनोत्थानां रसायनीनां, नाभेरूर्द्ध्वस्थानामुदरपरिसरीयाणां, उरःपूर्विकाणाञ्च गम्भीराणाम्। तद्विनिर्गता रसायन्यस्तु द्वयोः स्थूलतररसायन्योः परिणमन्ति। ते रसकुल्ययोः प्रविशतः।

पृष्ठवंशपार्श्वगाः[2] (पर्शुकान्तरालीया वा) नाम ग्रन्थयः पृष्ठवंशमुभयतो वर्त्तन्ते पर्शुकान्तरालेषु। ते एकैकतो दश द्वादश वा। पृष्ठस्थानां रसायनीनां पृष्ठपेश्यादिकं निर्भिद्याऽन्तःप्रविष्टानां तेषु प्रसरः। तन्निर्गतानाञ्च स्थूलतरासु रसायनीषु परिणतानां रसप्रपायां, रसकुल्ययोर्वा।

---

१। Sternal or Internal Mammary Lymph-glands. २। Intercostal Lymph-glands.

[ १२६ चित्रम् ]

## अधिक्लोमका रसग्रन्थयः ।




१।१।१ क्लोमनलिकामुभयतोऽवस्थिता रसग्रन्थयः ।

२।२ क्लोमपरितः स्थिताः ,,

३।३ क्लोमकाण्डिकाः, परितःस्थिताः ग्रन्थयश्च ।

४ फुस्फुसान्तरीया रसग्रन्थयः ।

५।५ फुस्फुसाभिगे धमन्यौ ।

महाप्राचीरोत्तरा:[1] नाम रसग्रन्थयो महाप्राचीराख्यपेश्याः पुरस्तात् पश्चिमतः पार्श्वयोश्च । तेषु क्वाचित् पेशीसमुत्थानां यकृत्पृष्ठादिप्रभवाणां च रसायनीनां प्रवेशः । तन्निर्गतानान्तु पूर्वोक्तेषु ग्रन्थिषु यथासम्भवम् ।

आशयिकाः पुनर्ग्रन्थयः उरोगुहायां त्रिविधाः—अग्रिमफुस्फुसान्तरीयाः, पश्चिमफुस्फुसान्तरीयाः, अधिक्लोमकाश्चेति । तत्र—

**अग्रिमफुस्फुसान्तरीयाः**[2] नाम रसग्रन्थयः पुरस्तादुत्तरे फुस्फुसान्तराले वर्त्तन्ते, तोरण्या महाधमन्याः ऊर्द्ध्वं काण्डसिराधमनीरभितश्च । तेषु बालग्रैवेयकग्रन्थेः, हृत्कोषतश्च समुत्थितानां रसायनीनां प्रवेशः । तेभ्यो विनिर्गतानान्तु अधिक्लोमकाख्येषु रसग्रन्थिषु ।

**पश्चिमफुस्फुसान्तरीया**[3] नाम रसग्रन्थयः हृत्कोषस्य पश्चिमस्थाः । ते अवरोहिणीं महाधमनीमन्ननलिकाञ्च परितो वर्त्तन्ते । तत् प्रवेशिन्यो रसायन्यः, हृत्कोषान्ननलिकादिप्रभवाः । तन्निर्यायिन्यश्च प्रायो दीर्घां रसकुल्यां प्रविशन्ति ।

**अधिक्लोमका**[4] नाम रसग्रन्थयो बहवो नानाविधाकृतयश्च ( १२६ चित्रम् ) । ते क्लोमनलिकामुभयतः, तत्काण्डयोः शाखाप्रशाखादीनाञ्च समन्ताद् दृश्यन्ते श्रेणीबद्धाः । तेषु क्षुद्रतमाः क्लोमकाण्डिकाभिः क्षुद्राभिः सह फुस्फुसान्तरनुप्रविष्टाः । सर्वे च ते क्लोम-फुस्फुस-हृदयप्रभवाणां रसायनीनां विशोधनकर्म्माणः । तद्विनिर्गताश्च रसायन्यो द्वयोः स्थूलरसायन्योः परिणमन्ति । ते चोर्द्ध्वं गत्वा गलमूलमुभयतो रसकुल्ययोः प्रविशन्ति, क्वचिद् वा गलमूलिकयोः सिरयोः पृथगेव ।

एते चाऽधिक्लोमका ग्रन्थयः सङ्कुलजनपदनिवासिनां श्यामाभाः कठिनीभूताश्च दृश्यन्ते, श्वासवायुवाहितरजोधूमादिसम्पर्कात् । राजयक्ष्मादौ च विशेषेण शूनास्ते कृच्छ्रकासादीन् जनयन्तीति स्मर्त्तव्यम् ।

रसायन्यश्च उरस्याः सर्वत्र उरःपरिसरे, आशयिकधमनीः स्रोतांसि च संवेष्ट्य तिष्ठन्ति । तासां प्रवेश-निर्गमादिकं ग्रन्थिव्याख्याने व्याख्यातम् ।

समाप्तं चैतावता रसायनीखण्डम् ।

---

१ । Diaphrgmatic Lymph-glands. २ । Anterior Mediastinal Lymph-glands. ३ । Posterior Mediastinal Lymph-glands. ४ । Tracheo-bronchial Lymph-glands.

# प्रत्यक्षशारीरम्।

## आशयखण्डम्।

### प्रथमोऽध्यायः।

अथात आशयसामान्यविज्ञानीयमध्यायं व्याख्यास्यामः।

इह खलु आशेरते दोषधातुमला एष्वितिकृत्वा अन्नमलमूत्रादीनामाधारा आशया इत्युच्यन्ते। तैरेव साधनभूतैः शारीरकार्य्याणां नियमनात्। शारीरयन्त्राणीति तु तेषां, क्वचित् तत्सहायभूताणां दन्तजिह्वादीनाञ्च साधारणी संज्ञा।

ते चाशया द्विविधाः,—सगर्भा अगर्भाश्च। त्रिविधा वा,—महागर्भाः, क्षुद्रगर्भाः, अगर्भाश्चेति। तत्र महागर्भाः—आमाशय-पक्वाशय-मूत्राशय-गर्भाशयाद्याः। क्षुद्रगर्भाः—वृक्क-मस्तिष्कादयः, फुस्फुसद्वयञ्च बहुक्षुद्रगर्भत्वात्। अगर्भाः यकृत्प्लीहाद्याः। तेषु महागर्भाणामेव स्वाश्रेयाशयसंज्ञाभिर्व्यवहारः प्रायेण, अन्येषान्तु विलक्षणसंज्ञाविशेषैः। अगर्भाश्च निःस्रोतसो ग्रन्थिविशेषा इति केचित्। तन्मते द्विविधा एव आशयाः—कोषरूपाः, ग्रन्थिरूपाश्च।

निर्म्माणं पुनराशयानां द्विविधं—स्वतन्त्रपेशीप्रधानं विलक्षणवस्तुप्रधानञ्च। तत्र महागर्भाणां पूर्व्वं, परमितरेषाम्। सिराधमनीजालकैरभिव्याप्तानि च सर्व्वत्र आशयनिर्म्माणवस्तूनि।

सर्व्वेषाञ्चाशयानां वहिरावरणं कलामयम्। अन्तरावरणञ्च तादृशमेव सति गर्भे, सूक्ष्मतरञ्च। उभयमपि तनुश्लेष्मस्रावि, विशेषतश्चाभ्यन्तरावरणम्।

निर्म्माणवैचित्र्यविशेषांश्च तेषां प्रत्याशयं विभज्य यथास्थानमुपदेक्ष्यामः।

आशयप्रसङ्गेषु चेह तत्तदाशयसंश्लिष्टानां लालग्रन्थ्यादीनां संग्रहः। ते ह्यनुबन्धा[१] स्तुल्यप्रयोजनाः।

तांश्च तथा तथा कार्य्यविभागेन प्रविभज्याशयान् षोढ़ा पुञ्जीकृत्य व्याचक्षते शारीरविदः। तद्यथा—संज्ञाचेष्टायतनयन्त्राणि, रक्तसंवहनयन्त्राणि,

---

१। आशयानां च सानुबन्धानां तन्त्रमितिसंज्ञा। क्वचित्त् सानुबन्धानां नाड्यादीनामपि, तन्त्रसंज्ञानिर्देश :—यथा नाडीतन्त्रम् (Nervous System.)

श्वसनयन्त्राणि, अन्नपचनयन्त्राणि, मूत्रयन्त्राणि, प्रजननयन्त्राणि चेति। तेषां तिसृषु गुहास्ववस्थानमित्युक्तपूर्व्वम्। तदनुबन्धानां तु बहिरपि गुहाभ्यः।

तत्र शिरोगुहान्तरीयाणां संज्ञाचेष्टायतनयन्त्राणां मस्तिष्कादीनां नाड़ीतंत्रेष्वन्तर्भावः, विस्तरश्च तत्रैव वाच्यः। उरोगुहान्तरीयेषु रक्तसंवहनयन्त्राणि विवृतपूर्व्वाणि। श्वासयन्त्रं[1] पुनरिह व्याख्यास्यते, उदरगुहान्तरीयाणि च यन्त्राणि। उदरोरसोरवस्थितानां च यन्त्राणां 'कोष्ठ' इति संज्ञा प्राचाम्। तदुक्तम्—

"स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च।
हृदुण्डुकः फुस्फुसौ च कोष्ठ इत्यभिधीयते॥"

सर्व्वेषाञ्च यन्त्राणां सारथिभूतास्त्रयो धातवः सूक्ष्मस्थूलरूपाः—वायुः, पित्तं, कफश्चेति वैद्यकविदः। तै र्हि प्रकृतिस्थैः सम्यक् प्रवर्त्यन्तेऽनुगृह्यन्ते प्रगृह्यन्ते च शारीरक्रियाः स्वाभाविक्यः। विकृताश्च ते ता एवोच्छृङ्खलं प्रवर्त्तयन्तस्तांस्तान् रोगान् जनयन्ति।

तत्र वायुः सर्व्वयन्त्रतन्त्रधरः, तदनुगौ च सर्व्वथा पित्तश्लेष्माणौ। ते च सर्व्वशरीरचरा अपि केषुचिदाशयेषु धात्वादिषु च परिस्फुटकार्य्याः। तद्यथा—संज्ञाचेष्टायतनयन्त्रेषु वायुः, अन्नविपचनयन्त्रेषु पित्तं, श्वसनयन्त्रादिषु श्लेष्मा। तद्विस्तरस्त्वाकरेषु सिद्धान्तनिदाने च द्रष्टव्यः।

तदेतदाशयसामान्यविज्ञानमभिहितं बीजरूपेण। विस्तरोऽत ऊर्द्ध्वम्।

भवन्ति चात्र—

"नित्याः प्राणभृतां देहे वातपित्तकफास्त्रयः।
विकृताः प्रकृतिस्था वा तान् बुभुत्सेत पण्डितः॥
उत्साहोच्छ्वासनिःश्वासचेष्टा धातुगतिः समा।
समो मोक्षो गतिमतां वायोः कर्म्माऽविकारजम्॥
दर्शनं पक्तिरूष्मा च क्षुत्तृष्णा देहमार्द्दवम्।
प्रभा प्रसादो मेधा च पित्तकर्म्माऽविकारजम्॥
स्नेहो बन्धः स्थिरत्वं च गौरवं वृषता बलम्।
क्षमा धृतिरलोभश्च कफकर्म्माऽविकारजम्॥"

(चरक० सूत्र० १८ अ,)

इति प्रथमोऽध्यायः।

---

१। क्वचिदेकवचनेनापि साकल्येन यन्त्राणां निर्देशः।

# द्वितीयोऽध्यायः ।

अथातः श्वासयन्त्रवर्णनीयमध्यायं व्याख्यास्यामः ।

उरोगुहायां फुस्फुसौ, श्वासनलिका, अन्ननलिका, हृदयञ्च सानुबन्धमिति कथितपूर्वम् । तत्र फुस्फुसयोः स्वरयन्त्र श्वासनलिकादिसहितयोः श्वास-यन्त्रमिति संज्ञा । अन्ननलिका तु उरोगताऽपि अन्नपचनयन्त्रवर्णने वर्णनीया, तदनुबन्धभूतत्वात् । हृदयं तु व्याख्यातचरम् ।

उरोगुहा च उरःपञ्जरान्तःस्था सूचितपूर्व्वा, सह तदन्तःस्थै र्विशेषैः । धार्य्यते च सा अधस्तात् महाप्राचीरोर्द्ध्वतलेन कूर्म्मपृष्ठाकारेण । पार्श्वयो-र्धनुर्वक्राभिः पर्शुकाभिः । पुरस्तात् सोपपर्शुकेन उरःफलकेन । पश्चिमतः पृष्ठवंशपुरोभागेन । अन्तरालेषु च पर्शुकोपपर्शुकानां तदापूरण्यः पेश्यः पर्शुकान्तरिका नाम । उभयतश्चोरःफलकं तत्पृष्ठस्था पेशी उरस्त्रिकोणिका नाम । सन्ति चापरा अपि पेश्यः उरश्छदाद्या उरःफलक-पर्शुकोपपर्शुकादिषु संलग्नाः श्वासकर्म्मसहायाः ।

सेयमुरोगुहा अभ्यन्तरतः कलावृता । कला चासौ फुस्फुसधरा नाम ।

उरोगुहायतनञ्च स्फारोदरकलशाकारम् अधःसमायतमूर्द्ध्वं च सङ्कुचितम् । विशेषतस्तु पार्श्वयोरधिकायतम् । तलदेशे तु मध्ये पुरश्चाऽगभीरं, गभीरं पश्चात् पार्श्वयोश्च । नियतपरिवृत्तिशीलञ्च तत् प्रश्वासनिःश्वासकालयोः, उरःपञ्जरस्य विस्फारसंकोचाभ्याम्, तौ च फुस्फुसयोर्वायुपूरण-रेचनकृतौ ।

## अथ स्वरयन्त्रम् ।

**स्वरयन्त्र**[१] नाम (१३० चित्रम्) पेशीस्नायुसन्नद्धं तरुणास्थिसंघातमयम् उभयतश्छिद्रं मुकुटाकारं सम्पुटं यत् श्वासनलिकायाः शिखरेऽवतिष्ठते गलपुरोभागमास्थाय श्वासवायुप्रवेशद्वारभूतम् । तदेतत् कण्ठिकास्थिमूलादारभ्य अवटुसंज्ञस्य ग्रीवापुरोवर्त्तिन उत्सेधस्याधःसीमां यावदनुभूयते मध्यरेखायां त्वगधस्तात् पेशीसमावृतम् । संयोगश्च तस्योर्द्ध्वं कण्ठिकास्थ्ना, अधश्च श्वासनलिकया । निर्मीयते च तद् नवभिस्तरुणास्थिभिः । तेषां त्रीणि

१ । स्वरयन्त्रम् = Larynx.

बृहन्ति एकाकीनि च। षट् क्षुद्राणि युग्मानि च। तद्यथा—अवटुकं, कृकाटकम्, अधिजिह्वकं चेति त्रीण्येकाकीनि। घाटिके, कोणिके, कर्णिके चेति षड् युग्मानि।

तत्र **अवटुकं**[1] नाम (१३० चित्रम्) किञ्चिदायतपक्षद्वयात्मकं प्रधानं तरुणास्थि स्वरयन्त्रसम्पुटनिर्मापकम्। तदुत्सेधो यूनां दृश्यः, विशेषतश्च पुंसाम्। पक्षद्वयञ्चास्य मध्यरेखामुभयतः कोणमारचय्य पश्चात् प्रसृतम् तदन्तरालस्थया अवटुपट्टिकाख्यया स्नायुपट्टिकया पश्चिमतः संयोजितम्। तस्य च द्वे द्वे शृङ्गे ऊर्ध्वमधश्च, तत्र उर्ध्वशृङ्गयोः सम्बध्येते कण्ठिकावटुके नाम स्नायुरज्जू, कण्ठिकास्थिपार्श्वाभ्यां सन्धानाय। अधःशृङ्गद्वयस्य तु सन्धानं कृकाटकपार्श्वाभ्याम्। पक्षद्वयसन्धानकोणस्य चोर्ध्वभागे त्रिकोणं खातम्, अधिजिह्वकमूलेन सन्धानाय। ऊर्द्ध्वधारा चास्य संयुज्यते कण्ठिकास्थ्ना स्थूलकलामयीं स्नायुपट्टिकामन्तरीकृत्य—सेयं स्नायुपट्टिका कण्ठिकावटुका नाम। अधोधारा चास्य संयुज्यते तादृशीमेव स्नायु मन्तरीकृत्य कृकाटिकाख्य-तरुणास्थ्ना—सेयं स्नायुरवटुकृकाटिका नाम।

एकैकस्य च पक्षस्य बहिःपृष्ठे संयुज्यन्ते तिस्रः पेश्यः—उरोऽवटुका, अवटु-कण्ठिका, कण्ठसंकोचनी अधरा चेति। अभ्यन्तरपृष्ठे च पक्षद्वयस्य संलग्नाः पञ्च विशेषाः। तद्यथा—मध्ये स्नायुबन्धनीयुता अधिजिह्विका, उभयतश्च परिघ-वदवस्थितं स्वरतन्त्रीद्वयं मुख्यम्, तदेव गौणञ्च। तिस्रस्तिस्रश्च पेश्य एकैकत-स्तत्रैव। तद्यथा—अवटुघाटिका, अवटुगोजिह्विका, अनुतन्त्रिका चेति।

**कृकाटकं**[2] नाम (१३० चित्रम्) अङ्गुरीयकाकारं तरुणास्थि स्वरयन्त्राधरावयवभूतम्। तस्य द्वौ भागौ। तनुवृत्तार्द्धः पुरस्तात्, स्थूलायतार्द्धश्च पश्चात्। तत्र पुरोऽर्द्धे सम्बद्धा ऊर्ध्वमवटुकस्याऽधोधरा, अधश्च श्वास-नलिकाया ऊर्ध्वधारा संयोजनकलाव्यवधानेन। पश्चिमार्द्धस्तावत् सार्द्धाङ्गुला-यतः। तस्य पृष्ठतो मध्यरेखायां सम्बद्धः अन्ननलिकायाः पुरोदेशः। तदेकैकतश्च पेशी कृकाटघाटिका पश्चिमा नाम, तद्बहिश्च स्थालके अवटुकपक्षस्याधःशृङ्गस्थे। ऊर्ध्वधारायां पुनस्तस्य संबध्येते तरूणास्थिनी घाटिके नाम। अधोधारा तु श्वासनलिकाशिखरेण सम्बद्धा कलामयस्नायुः।

---

१। Thyroid Cartilage. २। Cricoid Cartilage.

घाटिके[१] नाम त्रिकोणप्राये तरुणास्थिनी ( १३१ चित्रम् ) कृकाटिकापश्चिमार्द्ध-शिरसि सम्बद्धे । तयोश्चूड़ाद्वयमङ्कुशवद् विवृत्ताग्रम् । पृष्ठतश्च एकैकस्य अङ्कुशस्य संयुज्यते स्वरतन्त्रीद्वयी, तयोरेका मुख्या, अपरा गौणी । उभयोश्च संव्यूहनी पेशी एकैव चूड़ाद्वयस्य मूले पश्चिमतः परिघवदवस्थिता—सा घाटान्तरीया नाम । अपरा स्वत्ति-

[ १३० चित्रम् ]

## स्वरयन्त्रं क्लोमनलिका च




१ Arytenoid Cartilages.

काकारैर्मांससूत्रै रुभयोः संव्यूहनी पश्चात्, सा स्वस्तिक-घाटान्तरीया नाम । एकैकस्या घाटिकायाः पृष्ठतश्चैकैकतः पेशीद्वयं, कृकाटघाटिका पश्चिमा पार्श्वगा चेति ।

**कोणिके**[१], **कर्णिके**[२] चेति नाम द्वे द्वे तनुतरुणास्थिनी घाटिकयोश्चूड़ाद्वयसंयोजन्याः स्नायुसूत्रिकाया अन्तर्निविष्टे तद्दृढ़ीकरणाय । तासामाद्ये क्षुद्रवर्त्तु लाग्रे वक्रदण्डिकाकारे पार्श्वस्थे, अन्त्ये क्षुद्रपुष्पमुकुलकर्णिकाकारे मध्यरेखामुभयतः । स्नायुसूत्रिका चासौ तद्धारिणी अर्द्धचन्द्राकारमास्थाय अधिजिह्विकापार्श्वयोर्मिलिता ।

अथास्य तरुणास्थिसंघातमयस्य स्वरयन्त्रस्य अभ्यन्तरं स्वरयन्त्रोदरं ( १३१ चित्रम् ) नाम । तदन्तःपरिधिस्तनुश्लेष्मस्राविण्या तनुकलया सर्वत्र समावृतः । तस्योर्ध्वद्वारं गलबिलसंयोगि, तदभिरक्ष्यते नियतमूर्ध्वमुख्या गोजिह्विकया । सेयमन्नादिनिगिरणकाले स्वयमेव पिदधाति स्वरयन्त्रद्वारं साकल्येन । अधोद्वारं पुनः स्वरयन्त्रस्य श्वासनलिकानुबन्धि ।

अथ स्वरतन्त्र्यः ।

**स्वरतन्त्र्यो**[३] नाम ( १३१ चित्रम् ) स्वरयन्त्रोदरे शरगत्या पुरःपश्चादायतं तन्त्रीचतुष्टयं कलावृतस्नायुसूत्रमयम् । तस्य उत्तरतन्त्रीद्वयं गौणसंज्ञम्, अधरं पुनः

[ १३१ चित्रम् ]

**स्वरयन्त्रस्य ऊर्ध्वमुखम् ।**




पुरोभागः

[ कृ कृ कृ—कृकाटिका । १ कृकाटघाटिका पेशी पश्चिमा, २ सैव पार्श्वगा । ३ घाटान्तरीया पेशी । ]

---

१ Cuneiform Cartilages. २ Corniculate Cartilages. ३ Vocal Cords.

मुख्यम् । चतसृणामपि तासां पुरस्तादवटुशिखरस्थे कोणे संयोगः, पश्चाच्च घाटिकयो रङ्कुशाग्रचूडाद्वयस्य पृष्ठदेशे ऊर्ध्वाधःक्रमेण । तासां चान्तरालं त्रिकोणं तन्त्रीद्वारं[1] नाम । तस्य विकाशमुद्रणाभ्यां नानाविधविचित्रस्वरनिष्पत्तिः । विकाशमुद्रणे च घाटिकास्थनोराकर्षणापकर्षणाभ्यां तत्तत्पेशीभिः सम्पाद्येते । ताश्च पेश्यः स्वरतन्त्री-पेश्यो नाम । ता एकैकतश्चतस्रश्चतस्र इत्यष्टसंख्याः । तद्यथा—अवटुघाटिके, अवटुकृकाटिके, अवटुगोजिह्विके, अनुतन्त्रीके चेति । श्वासमार्गद्वारिण्यश्च नव तत्-सहकारिण्यः—एका मध्ये घाटान्तरीया नाम, चतस्रश्च एकैकतः—कृकाटघाटिके पश्चिमे पार्श्वगे च, स्वस्तिकघाटिके, गोजिह्वाघाटिके चेति । तासां सप्तदशपेशीनां नामभिरेव प्रायः प्रभवनिवेशा व्याख्याताः ।

कार्य्यं च तासां द्विविधम् । स्वरतन्त्रीणां कर्षणात्मकं, तन्त्रीद्वारस्य विकाश-मुद्रणात्मकञ्च । तत्र साक्षात् तन्त्रीणां तीव्रातीव्रकर्षणं सम्पादयन्ति अवटु-कृका-टिके, अवटुघाटिके, अनुतन्त्रोके चेति षट् पेश्यः । तन्त्रीद्वारावरोधनोन्मोचनाय पुनरन्याः पेश्य एकादश ।

अथास्य स्वरयन्त्रस्य पोषण्यो धमन्यः—उत्तरग्रीविकाऽधरग्रीविकयोर्धमन्योः प्रशाखाः, बहिर्मातृकायाश्च । तासां सहचर्य्यः सिरास्तु अनुमन्याख्यसिराद्वयं गलमूलिकाञ्च प्रविशन्ति । नाड्यः पुनः स्वरयन्त्रस्य—प्राणदयोः शाखाश्चतस्रः प्राधान्येन, द्वे स्वरयन्त्रारोहिण्यौ, द्वे च उत्तरस्वरिण्यौ नाम ।

तदेतत् स्वरयन्त्रं समासेन व्याख्यातम् । एतानि च तद्विवरणसंक्षेपस्मरणाय पद्यानि—

श्वासमार्गप्रतीहार-भूमिः स्यात् स्वरयन्त्रकम् ।
घटितं सम्पुटं चारु नवभिस्तरुणास्थिभिः ॥
गोजिह्विकाऽवटु-कृकाटक-घाटिकेति
मुख्यानि तेषु, गिलने तु पिधानमाद्यम् ।
सतत्स्नायुजालकलितं ललितस्वरं तद्
यन्त्रं नियन्त्रितमुखं स्वरतन्त्रिकाभिः ॥
विकाशमुद्रणाभ्याञ्च तासां स्वरशतोद्भवः ।
तत्साधनाय चेष्टन्ते सप्त पेश्यो दशाधिकाः ॥

---

[1] Glottis. = Laryngeal ventricle = स्वरयंत्रकुटी . Epiglottis = स्वरयंत्र-[illegible]

अथ श्वासनलिका ।

**श्वासनलिका क्लोमनलिका**[1] वा नाम ( १३० चित्रम् ) प्रायः षडङ्गुल परिमाणा स्वाङ्गुष्ठपरिणाहा नलिका, या ग्रीवापुरस्ताद्वटुदेशाधःसीमत आरभ्य उरोमध्यं प्रविश्य फुस्फुसमूलान्तं गता । सेयमुपर्युपरि संहितैः पश्चादसम्पूर्णैस्तरुणास्थिमण्डलैः स्नायुवृतिसंबद्धैरारचिता कण्ठकूपे त्वगधस्तादनुभवनीया द्वित्राङ्गुलमात्रेण । ततश्च उरोगुहान्तःप्रविष्टाऽसौ पञ्चमपृष्ठकशेरुकासन्धेः पुरस्ताद् द्वयोः शाखानलिकयोर्विभक्ता फुस्फुसद्वयप्रवेशाय । एकैका च सा शाखानलिका पुनः शाखाप्रशाखानुशाखासु विभज्यमाना चरमैः शाखाप्रतानैरणून् वायुकोषान् प्रविष्टा । सेयं शाखाप्रशाख-द्विवती श्वासनलिका सर्व्वत्राप्यभ्यन्तरपरिधौ अवलम्बकाख्यश्लेष्मस्राविण्या सूक्ष्मकलया परिवृता । सोऽसौ श्वासवायोर्गतागतमार्गः ।

व्यतिकरः पुनः श्वासनलिकाया ईदृशः—

ग्रीवायामस्याः पुरस्ताद् ग्रैवेयकग्रन्थिः, अधर-ग्रैवेयक्यौ नाम सिरे, उरो-ग्रैवेयक्यौ, उरःकण्ठिके चेति पेश्यः । पश्चादन्ननलिका । तदाच्छादनी च ग्रीवा-प्रच्छदाख्या प्रावरणी तनुसिराधमन्यादिसहिता । उरसि तु—उत्तरे फुस्फुसान्तरालेऽवस्थितानि क्लोमनलिकायाः पुरस्तात् दृश्यानि (सम्मुखत आरभ्य) एतानि—उरःफलकं, बालग्रैवेयकग्रन्थिशेषः, वामा गलमूलिकाख्या सिरा, महाधमन्यास्तोरणोभागः, काण्डमूला धमनी, वामा महामातृका धमनी, नाड़ीचक्रं च अनाहतचक्राख्यम् । पश्चिमतश्च क्लोमनलिकायाः—अन्ननलिका । दक्षिणतः काण्डमूला धमनी, प्राणदाख्या च नाड़ी दक्षिणा । वामतः पुनर्महाधमन्यास्तोरणांशः, महामातृकाख्या धमनी अक्षाधरा च । समग्रायाश्च शाखाद्वयविभक्तायाः श्वासनलिकायाः क्लोमेति संज्ञा वेदविदाम् ।

इह तु विभागभेदावबोधार्थं मुख्यायाः श्वासनलिकायाः क्लोमनलिकेति संज्ञा । प्रधानशाखाद्वयस्य पुनर्दक्षिणवामे क्लोमशाखे इति, तच्छाखाप्रशाखानान्तु क्लोम-काण्डिकेति[3] । सर्वासां वा शाखाप्रशाखानां कचित् क्लोमकाण्डिकेति ।

तत्र **दक्षिणा क्लोमशाखा**[2] स्थूलतरा सार्द्धाङ्गुलायता हृदयस्योत्तरमहा-सिरायाश्च दक्षिणतोऽवस्थिता पश्चाद्भागमाश्रित्य । सा षड्भिरष्टभिर्वा तरुणास्थि-मण्डलैः स्नायुजालनिबद्धैर्विनिर्म्मिता । तस्या द्वयोः क्लोमकाण्डिकयोर्विभागः ।

---

१ Trachea. २ Right Bronchus. 3. Bronchial tube

ते फुस्फुसाभिगाया धमन्या उत्तराधरदेशावधितिष्ठतः। तयोरुत्तरा दक्षिणफुस्फुसस्य उत्तरपिण्डं प्रविशति; अधरा तु पुनर्द्विधाविभक्ता अधरं पिण्डद्वयम्।

**वामा क्लोमशाखा**[1] षड्ङ्गुलायता प्रायो दशभिर्द्वादशभिर्वा तरुणास्थिमण्डलैर्निर्म्मिता। सा महाधमनीतोरणस्याधस्तात् प्रविश्य अन्ननलिकाया रसकुल्यायाश्च पुरस्तात् फुस्फुसाभिगधमन्याश्च पश्चादवतिष्ठते, विभज्यते च तिसृषु शाखासु वामफुस्फुसस्य पिण्डद्वयप्रवेशाय।

अथेमाः सशाखायाः श्वासनलिकायास्तर्पण्यो धमन्यः। श्वासनलिकायाः-अधरग्रीविका नाम धमनी अक्षाधरोत्था। क्लोमकाण्डिकानान्तु क्लोमकाण्डानुगाः, ता औरस्यधमनीषु व्याख्याताः। सिराश्च तासां तुल्यसंज्ञाः। नाड्यः पुनः प्राणदयोरेव शाखाप्रशाखाः प्राधान्येन।

अथ उरस्या, फुस्फुसधरा वा कला।

**उरस्ये, फुस्फुसधरे कले**[2] वा नाम विशालायतने तनुमसृणे कले। तयोरेकैका उरोगुहाया एकैकार्द्धे एकैकं फुस्फुसं प्रावृत्य धारयति एकेन स्तरेण, संसज्यते च उरःपञ्जरार्द्धस्य प्राचीरान्तःपरिधौ ऊर्ध्वाधस्तलयोश्च अपरेण स्तरेण। सेयमेकैका कला स्तरद्वयारचिता, दीर्घायतमुद्रितकोषरूपा। स्तरद्वयान्तश्च तस्या दृश्यते स्तोकमात्रा तनुलसीका, स्तरयोः परस्परसंघर्षणवारणाय। तयोर्बाह्यस्य "परिसरीयभाग" इति संज्ञा, उरःपरिसरान्तर्वेष्टनभूतत्वात्। आभ्यन्तरस्य तु "पर्य्याशयभाग" इति संज्ञा, आशयं परितः संसञ्जनात्। न च कोषरूपायाः कलाया अभ्यन्तरे आशयः, स्तरद्वयस्य परिसरसीमासु नीरन्ध्रमिलनात्।

सोऽसौ परिसरीयभागः[3] पार्श्वयोः पुरः पश्चाच्च क्रमात् पर्शुकामयप्राचीरान्तः उरःफलकपृष्ठतः, पृष्ठवंशपुरोभागे च संसक्तः। ऊर्ध्वभागे तु तत्संस्पर्शः फुस्फुसशीर्षण्याख्याया गम्भीरप्रावरण्यास्तलदेशेन अधोभागेमहाप्राचीरोर्ध्वतलेन। सोऽयम् उत्तरांशेन मध्यरेखां प्रति प्रसृतः क्लोमनलिकापार्श्वं स्पृष्ट्वा फुस्फुसवृन्तं प्रतिगतः। अधरांशेन च हृत्कोषपार्श्वं संचुम्ब्य उर्ध्वं मध्यरेखां प्रति प्रस्थितः तद्वदेव

---

१ Left Bronchus. २ Pleura (प्लुरा) ३ Parietal layer.

फुस्फुसवृन्तं स्पृशति। तत्परितश्च उभाभ्यामंशाभ्यां मिलितोऽसौ सर्व्वतः परावृत्य फुस्फुसावरणेन "पर्याशयभागेन" अनुवध्यते।

अस्ति चान्यस्त्रिकोणाकारो द्विगुणीभूतः परिसरीयभागः पश्चिमतोऽधश्चः प्रसृतः, स फुस्फुसस्य महाप्राचीरामूलेन सम्बन्धनाय। तस्य फुस्फुसबन्धनीति संज्ञा।

पर्य्याशयभागः[1] पुनरेकैकं फुस्फुसं प्रावृत्य फुस्फुसवृन्तं परितः संव्यूहितः परिसरीयभागेन अनुबध्यते पूर्वोक्तशैल्या सङ्गतेन। सेयं विचित्रनिर्म्माणा उरस्या, फुस्फुसधरा वा नाम कला, या फुस्फुसमङ्के धारयन्त्यपि नान्तर्गृह्णाति।

अथास्याः कलायाः स्तरद्वयसान्निध्यं प्रश्वासकाले, फुस्फुसस्य वायुपूर्णत्वात्। व्यवधानाधिक्यञ्च निःश्वासकाले, फुस्फुसस्य संकोचात्। शीतवर्षादिबाधावशाच्च कदाचिद् व्रणशोथः कलैकदेशे, तदा प्रश्वासकाले स्तरद्वयसंघर्षणात् तीव्ररुजाप्रादुर्भावः। जलसञ्चयश्च स्तरद्वयान्तःस्थावकाशे क्रमेण वर्द्धमानः "उरस्तोय"[2] संज्ञः। ततश्च फुस्फुसस्य क्रमेण दृढ़सङ्कोचः क्रियालोपः प्रतीकारविरहे।

## अथ फुस्फुसौ।

**फुस्फुसौ**[3] नाम (१३२ चित्रम्) श्वसनकर्म्मणः प्रधानसाधनं यन्त्रद्वयम् उरोगुहान्तरवस्थितम्। तयोरेकैकमेकैकार्द्धे उरसः। तदन्तराले च हृदयं, क्लोमनलिका, सिराधमनीनाड्यादयश्च विशेषाः। चतुर्द्धा विभक्तं च तत् फुस्फुसान्तरालं सविशेषं वर्णितपूर्वम्।

तौ च फुस्फुसौ फुस्फुसधराभ्यां कलाभ्यां सर्वत्र प्रावृतौ मसृणकोमलस्पर्शौ वायुकोषबहुलत्वाल्लघुभारौ जलप्रतरणार्हौ च। तौ क्लोमनलिकया फूत्कारेण वातप्रवेशनाद् विचित्रविशालाकारौ भवतः, अंगुल्या पीड़नाद् मृदुमर्म्मरशब्दौ च। तत्र पुंसो दक्षिणफुस्फुसः प्रायेण पञ्चपञ्चाशत्तोलकमात्रः, वामस्तु पञ्चाशत्तोलकमितः। स्त्रियास्तु प्रत्येकं तोलकपञ्चकेन न्यूनः। तौ च जातमात्रस्य बालस्य पद्मवर्णौ, प्राप्तवयसस्तु क्रमात् श्यामकर्व्वुरच्छायौ।

आकृतितस्तु—एकैकस्य फुस्फुसस्य परिणाह ऊर्ध्वं संकुचितः, अधस्तादायतः। स बहिःपार्श्वे वृत्तप्रायः, अन्तःपार्श्वे कोटरोदरश्च। तस्य पुरोधारा तन्वी शिथिला स्तोकेन हृदयावरणी चोभयतः। तत्र पञ्च विशेषा लक्षणीयाः। तद्यथा—

---

१ Visceral layer. २ Pleurisy. ३ Lungs.

[ १३२ चित्रम् ]

## फुस्फुसद्वयम्, हृदयञ्च ( महासिरा-धमन्यादि सहितम् )।




( To face p. 181 )

फुस्फुसचूड़ा, फुस्फुसमूलं, फुस्फुसखातम्, फुस्फुसवृन्तम्, पिण्डविभागश्चेति ।

तत्र—फुस्फुसचूड़ा[१]—वृत्तशिखराकारा गलमूले अक्षकास्थ्न ऊर्ध्वं द्व्यङ्गुलमात्रेणोद्गता उरःकर्णमूलिकायाः प्रभवकण्डराद्वयेन प्रच्छादिता ।

फुस्फुसमूलं[२] नाम फुस्फुसस्याधोदेशो महाप्राचीरापृष्ठमधिष्ठाय वर्त्तमानः । तत् कोरोदरमायतं तनुपत्राकारेण पश्चिमांशेनोपलक्षितश्च । सोऽयं पश्चिमपत्रकांशः फुस्फुसस्य वातपूर्णत्वे सति महाप्राचीरापृष्ठपश्चिमस्थे खाते प्रविशति ।

फुस्फुसखातानि[३] तावदनेकानि,—उत्तानानि, गभीराणि च । तेषु त्रीणि प्रधानानि—वृन्तखातद्वयं, हृदयखातश्च । तत्र वृन्तखातमेकैकस्य फुस्फुसस्य मध्यदेशे आन्तरसीम्नि वर्त्तते, यदाश्रित्य प्रविशति फुस्फुसवृन्तम् । हृदयखातं तावद् वामफुस्फुसान्तःसीम्नि विशेषेण दृश्यं, हृद्वामांशधारणम्,तद् दक्षिणफुस्फुसान्तःसीम्नि स्तोकेन लक्ष्यम् । अपराणि खातानि तु अधरमहासिरामहाधमन्योरन्ननलिकादीनाञ्च स्पर्शकृतानि नातिगभीराणि यथास्थानं दृश्यानि ।

फुस्फुसवृन्तं[४] नाम फुस्फुसस्य अन्तःपार्श्वखातप्रवेशी फुस्फुसीयनाड़ीसिराधमनी-क्लोमशाखादिसङ्घातः,—स च फुस्फुसधराख्यकलांशेन द्विगुणीभूतेन संवेष्टितः । तस्य पुरस्तादवस्थिताऽनुकोष्ठिकाख्या नाड़ी, पश्चिमतश्च प्राणदा । फुस्फुसवृन्तान्तश्च सिरादीनामित्थम्भूता स्थितिः—पुरस्तात् फुस्फुसीयसिराद्वयं, मध्ये फुस्फुसाभिगधमन्याः शाखा, पश्चात सकाण्डशाखं क्लोमेति ।

अथ पिण्डविभागः[५] । दक्षिणफुस्फुसे त्रीणि पिण्डानि, वामे द्वे । एकैकस्मिंश्च पिण्डे पृथग्भूते प्रविशति एकैका क्लोमकाण्डिका, प्रसरति च स प्रशाखानुशाखादिभिः क्रमशो विभज्यमाना द्राक्षाफलगुच्छसदृशेषु वायुकोषसंघेषु ( १३५ चित्रम् ) चरमैः शाखाप्रतानैः । एकैकश्च कोषसङ्घः अङ्गुलीषोडशांशमानः प्रायः, तस्मिन् पञ्चषा वायुकोषाः क्वचिदधिकसंख्या वा । तत्सङ्घातनिर्म्मितश्च फुस्फुसः ।

---

१ Apex of Lung. २ Base of Lung ३ Depressions on Lungs. ४ Root of Lungs. ५ Lobes of Lungs.

( १३३ चित्रम् )

क्लोमकाण्डिकाद्वयम् (क), वायुकोषसंघौ च। (१, २)




वायुकोषनिर्म्माणञ्चेदृक्, तत्कार्यञ्च संक्षेपतः। एकैको वायुकोषः[१] स्थिति-स्थापकगुणैः स्नायुसूत्रैर्वेष्टितः, अभ्यन्तरे प्रतनुकलासंवृतश्च। तदन्तराले सूक्ष्म-सिराधमनीमयानि जालकानि कोषं परिवृत्य स्थितानि। तेषु समानीयते सिरारक्तं फुस्फुसाभिगधमन्याश्चरमैः शाखाप्रतानैः। तत्र च श्वासवायुसम्पर्केण वाष्पविनि-मयाद् विशोधितं तद्रक्तं प्रतिनिवर्त्तते सूक्ष्माभिः फुस्फुसीयसिराभिर्हृदयाभिमुखम्।

सिरारक्तं हि सर्वकायप्रचाराद् धात्वग्निपरिपक्वधातूनां मलभूतेन आङ्गारिक[२] वाष्पेण सम्पद्यते मलिनम्। स च वाष्पः वायुकोषान्तर्वेष्टनेषु सिराजालकेषु प्रविष्टेन तद्रक्तेन परित्यज्यते। अतएव निःश्वासवायोस्तद्वाष्पपूर्णत्वाद् मलिनीभावः। प्रश्वासवायुसमानीतस्य विशुद्धवायोः सम्पर्काच्च तदीय "विष्णुपदामृता"[३]ऽदानेन तद्रक्तस्य ततक्षण एव विशुद्धिरुज्ज्वलीभावश्च। तस्य च फुस्फुसीयसिराभिर्हृदया-गतस्य विशुद्धरक्तस्य महाधमनीपथेन सर्वकाये प्रचारः।

तदेतत् फुस्फुसीयरक्तसंवहनप्रयोजनं समासेन व्याख्यातम्।

इति द्वितीयोऽध्यायः।

---

१ Alveoli  २ Carbon Dioxide gas.  ३ Oxygen. तच्च "ओषजनम्"—इति केचित्। सोऽयं वाष्पविनिमयः प्राकृतिक नियमेन सम्पद्यते।

# तृतीयोऽध्यायः ।

अथातः अन्नपचनयन्त्रवर्णनीयमध्यायं व्याख्यास्यामः ।

अन्नपचनयन्त्राणि द्विविधानि – मुख्यगौणभेदात् । तेषु आमाशयः, क्षुद्रान्त्राणि, बृहदन्त्रञ्चेति मुख्यानि, तत्रैव साक्षादन्नविपचनात् । अपराणि दन्त-जिह्वा-लालाग्रन्थि-ग्रसनिकाऽन्ननलिका-यकृदादीनि गौणानि, तेषामादान-चर्व्वण-क्लेदन-निगिरणादिसाधनत्वात् ।

तत्र मुखं, ग्रसनिका, अन्ननलिका, आमाशयः, क्षुद्रान्त्राणि, बृहदन्त्रं-चेत्येतेषां मिलितानां महास्रोत[1] इति संज्ञा प्राचाम् ( १३४ चित्रम् ) । सर्वेषा-मेषामेकस्यैव महतः स्रोतसोऽङ्गभूतत्वात्, गर्भस्याद्यावस्थायां केषुचित् प्राणिषु च यावज्जीवं तस्य नलकरूपेणावस्थानदर्शनाच्च ।

तदेतत् महास्रोतः क्वचित् क्वचित् स्फारीभूतमपि एकमेव प्रायेण विंशतिहस्तदीर्घं स्वतन्त्रपेशीनिर्मितं नलकमिति शारीरविदः । तत्राद्या स्फारता मुखकुहरे, ग्रसनिकायाञ्च, अन्नादीनां धारण-क्लेदन-चर्व्वण-निगिरणार्थम् । ततः स्फुटनलकाकृतिरन्ननलिकायाम् । ततो द्वितीया स्फारता आमाशये, अपक्वस्य प्रचुरान्नपानस्य धारणाय तत्पाकारम्भाय च । ततः पुनः सुदीर्घतनुनलका-कृतिरन्त्रेषु, अर्द्धपक्वस्य अन्नस्य शनैः सम्यक् पाकाय रसाकर्षणाय च । बृहदन्त्रस्य तु स्थूलनलकाकृतिः, मलभूतस्यान्नस्य धारण-शोषण-निःसारणसौकर्य्याय । तदेतद् विचित्रनिर्म्माणं स्रोत आ मुखकुहरादपानदेशान्तं महत्संज्ञया व्यपदिश्यते महायतनत्वात्, निखिलस्रोतसां तदधीनत्वाच्च । अन्नरसो हि मूलं धातूनां, स चाकृष्यते महास्रोतस एव सूक्ष्माभिः सिराभी रसायनीभिश्च ।

तस्य च महास्रोतसः षोढ़ा प्रविभागो वर्णनासौकर्य्याय – मुखकुहरं, ग्रसनिका, अन्ननलिका, आमाशयः, क्षुद्रान्त्राणि, बृहदन्त्रञ्चेति । तत्सहायकाश्च जिह्वा-दन्त-लालाग्रन्थि-यकृदग्न्याशयाः तत्प्रसङ्गेनैव वर्णनीयाः । तत्र आमाशय-क्षुद्रान्त्र-बृहदन्त्र-यकृदग्न्याशयाः उदरगुहान्तर्दृश्याः । अपराणि तद्बाह्यानि । तान्यादौ वर्णनीयानि ।

---

१ । Alimentary Canal.

# महास्रोतःप्रदर्शकं कोष्ठचित्रम् ।

( अत्र हृदयं न प्रदर्श्यते । उरस्याख्यकलाकोषौ तु सम्यक् प्रदर्शितौ )



अथ मुखकुहरम् ।

**मुखकुहरं** नाम ( १३५ चित्रम् ) मुखाभ्यन्तरस्था क्षुद्रनारिकेलफलाकारा गुहा जिह्वादन्तादिमती । तस्याश्छदिः कठिन-कोमलतालुभ्यां निर्म्मिता, भूमिश्च अधोहनुमण्डलान्तरालं सवृन्तजिह्वा पूरितं प्राधान्येन । तस्य द्वारमोष्ठयोर्मध्ये मुखद्वारं नाम । तदन्तश्चादौ मुखालिन्दः अर्द्धचन्द्राकारो दन्तपंक्त्योः पुरःस्थः । दन्तपंक्त्योः पश्चाद् आगलविलद्वारं मुखान्तर्गुहा, ततः परं गलविलम् । मुखकुहरसम्बन्धेन च लक्षणीयास्तदन्तः तत्परिसरे चावस्थिता दश विशेषाः । तद्यथा—

ओष्ठद्वयं, कपोलद्वयं, दन्तवेष्टौ, दन्ताः, जिह्वा, तालुपटलं, गलतोरणिके, उपजिह्विके, अधिजिह्वा, लालाग्रन्थयश्चेति । तेषां मुखकुहरान्तःस्थाः सर्व्वेऽपि भागास्तनुश्लेष्मस्राविण्या सूक्ष्मकलया संवृताः । तत्र—

( १ ) **ओष्ठद्वयं** मुखद्वारकपाटभूतं तत् मुखमुद्रणाख्यपेश्या निर्म्मितं, विशेषेण मेदोमृदुलं जालक-रसायनीबहुलञ्च । परिवृतञ्च तद् बहिर्भागे त्वचा, अन्तश्च श्लेष्मस्राविण्या सूक्ष्मकलया । संवृतञ्च त्वक्कलासन्धानस्थानेऽतितनुत्वचा सर्पकञ्चुकेनेव स्वभावतः परिवर्त्तनशीलया । तयोरधरोष्ठस्य अधरमिति, उत्तरोष्ठस्य च ओष्ठमिति प्रसिद्धं संज्ञाद्वयम् । तत्सन्धिकोणयोश्च सृक्कणीति सृक्कण्याविति वा । एकैकस्य चोष्ठस्याभ्यन्तरतो मध्यरेखायां स्नायुसूत्रनिर्म्मिता सेवनी दन्तवेष्टपुरोभागेण तस्य प्रबन्धनाय, सा ओष्ठसेवनी नाम ( उत्तरा अधरा च ) ।

( २ ) **कपोलद्वयं** कपोलिकाख्यपेशीभ्यां मेदोजालकबहुलाभ्यां निर्म्मितम् । तद् बहिर्भागे त्वचा अन्तश्च श्लेष्मस्राविण्या सूक्ष्मकलया परिवृतम्, पुरः ओष्ठद्वयेन मिलितमूर्द्ध्वाधःसीम्नोस्तु आदन्तवेष्टं प्रतिगतम् । तत्र उत्तरदन्तवेष्टमुभयतो द्वितीयचर्वणकदन्तमूलयोर्द्दृश्ये कर्णमूलिकग्रन्थ्योः स्रोतसी लालास्रावाय । ते कर्णमूलिकस्रोतसी[१] नाम ।

( ३ ) **दन्तवेष्टौ** नाम अस्थिमययोर्दन्तोदूखलमण्डलयोः दृढस्नायुसूत्रनिर्म्मिते वेष्टनिके अस्थिधरकलासम्बद्धे, श्लेष्मस्राविकलापरिवृते च । तौ

१। Parotid ducts or Stenson's ducts. २. दन्तोदूखल (Alveolus) socket of teeth दन्तोदूखलिकं = Alveolar process. ३. Periostium. ४ gums = मसूढ़े दन्त मांस

[ १३५ चित्रम् ]

## मुखकुहरं लालाग्रन्थयश्च ।

( पार्श्वच्छेदेन प्रदर्शिताः )




[ क-क - कर्णमूलिको नाम लालाग्रन्थिः। शं—अनुशंखा उत्ताना धमनी।
१—गोस्तनप्रवर्द्धनम्। २—हनुकूटकर्षणी पेशी।
३—शिंफाकण्ठिका स्नायुः। ४—वक्त्रनाडी।
५—अन्तर्मातृका धमनी, अनुमन्या सिरा च।

दन्तमूलानामुदूखलेषु सम्यक् प्रबन्धनाय। तयोश्च स्पर्शज्ञानं विशेषेण मन्दमिति चित्रम्। दन्तानां सम्यगधावनाच्च प्रायः सम्भवन्ति दन्तवेष्टगता रोगा बहवः।

(४) **दन्ता**स्तावद् द्वात्रिंशदूक्तपूर्वाः। तत्कार्य्याणि कर्त्तनकादि-संज्ञाभिर्व्याख्यातानि। तन्निर्माणं सूक्ष्मशारीरे व्याख्येयम्।

(५) **जिह्वा** तावत् स्वादग्रहण-चर्वण-ग्रसनादिसाधनम्। सा प्रधानतः पेशीमयी, तनुश्लेष्मस्नाविण्या कलया परिवृता, स्वादाङ्कुरैरनुविद्धा च। नद्धा च मुखभूमितले कण्ठिकास्थ्नां सेवन्या च। पश्चिमतः पुनस्तया संलग्ना मध्ये अधिजिह्विका, एकैकतश्च गलस्तम्भिका पूर्व्वा। जिह्वानिर्म्माणविस्तरस्तु रसनेन्द्रियवर्णने वर्णनीयः।

(६) **तालुमण्डलं**[1] नाम मुखान्तगर्तश्छदिरञ्जलिसमाकारः। तस्य पूर्व्वपश्चिमक्रमेण द्वौ भागौ, कठिनतालु कोमलतालु चेति। तत्र—

(क) **कठिनतालु**[2] तावत् कलाच्छादितकठिनास्थिपत्रकमयं मुखान्तर्गुहायाः कोरोदरं पटलम् पुरःस्थम्। तच्च निर्म्मीयते परस्पर-संहिताभ्यामूर्द्ध्वहनुमण्डलस्य तालुपत्रकाभ्यां, तालुस्थ्नो ह्रस्वपत्रकाभ्यां च पश्चिमतः।

(ख) **कोमलतालु**[3] पुनः कठिनतालुनः पश्चिमधारासंलग्ना कोमल-मांसस्नायुतन्तुमयी अधोमुखी जवनिका कलावृता, या गलबिलोत्तरार्द्धमावृत्य तिष्ठति। अन्ननिगिरणकाले तु तदेव पश्चादूर्द्ध्वञ्चाकृष्यमाणं गलबिलायतनं विस्फारयति, वारयति चान्नस्य नासापश्चिमद्वारगमनम्। कोमलतालुनः पश्चिम-सीम्नि च मध्यरेखावलम्बिनी क्षुद्रा शुण्डिकाकारा पेशी काकलकं गलशुण्डिका[4] वा नाम। सा कोमलतालुनः पूर्व्वोक्तकर्म्मसहायभूता।

पेश्यश्च तालुसम्बन्धिन्यो नव। तासु तालूत्तोलनी, तालूत्तंसनी, तालु-जिह्विका, गलतालुका चेति चतस्र एकैकतः सूचितपूर्वाः पेश्यध्याये। तासामाद्या समग्रस्य कोमलतालुन उत्कर्षणी,—सा शङ्खास्थ्नोऽश्मकूटात् सम्भूय मध्यरेखायां स्वनामिकया संसज्यते। द्वितीया जतूकास्थ्नश्चरणफलकात् सम्भूय तद-ग्रस्थमङ्कुशमाश्रित्य विवर्त्तमाना तालूत्तंसनं करोति। अपरे द्वे स्वनामव्याख्यात-प्रभवनिवेशे। ते जिह्वामूलपार्श्वतो गलबिलपार्श्वतश्चाकर्षणं तालुनः कुरुतः,

१। Palate. २। Hard Palate ३। Soft Palate. ४। Uvula.

[ १३६ चित्रम् ]

## गलविलद्वारम् ।

( सम्मुखतो दृष्टम् )




[ १।२ स्वादाङ्कुराणि बृहन्ति क्षुद्राणि च यथाक्रमम् ]

गलद्वारविस्फारणेन निगिरणकर्म्मसहायतार्थम्। काकलकिनी तु काकलकस्य उत्तोलनी तालुमध्यविन्दुतो लम्बते।

(७) **गलतोरणिके**[१] नाम (१३६ चित्रम्) गलविलद्वारमुभयतो वर्त्तमानौ तोरणाकारौ गलावयवौ मध्यविन्दुमिलितौ। ते हि काकलकादारभ्य एकैकतो द्विमुखीभूय अधस्तादवतीर्णे द्वाभ्यां गलस्तम्भिकाभ्यामुपलक्षिते। तयोः पुरःस्तम्भिका[२], पश्चिमस्तम्भिका[३] चेति संज्ञाद्वयम्। तत्र पुरःस्तम्भिकाद्वयं जिह्वामूलमुभयतः सङ्गतमधस्तात्, जिह्वातालुकाभ्यां पेशीभ्यां निर्म्मितञ्च।

(८) **उपजिह्विके**[४] नाम (१३६ चित्रम्) गलविलद्वारमुभयतः पुरः-पश्चिमस्तम्भिकयोर्मध्यस्थे क्षुद्रकोलास्थिप्रमाणे ग्रन्थिमयपिण्डके। तयोः निर्म्माणवस्तु प्रायेण लसीकाग्रन्थिवत्। ते च वालानां कफाधिक्यादिहेतो भृशं प्रवृद्धे शुष्ककासादिकं जनयतः। स्वभावतो गलविलद्वारप्रतिहारिण्यौ हि ते—इति शारीरक्रियाविदः।

(९) **अधिजिह्विका**[५] तु वर्णितपूर्व्वा। सा रसनामूलेन संलग्नमूला अन्नादिनिगिरणकाले श्वासमार्गद्वारं द्राग् निरुणद्धि।

(१०) **लालाग्रन्थयः**[६] तावच्चत्वारः,—कर्णमूलिकाख्यौ द्वौ, चिवुकाधरीय एकः, जिह्वाधरीयश्चापरः। तेभ्यः प्रवृत्ता हि तनुपिच्छिला लाला मुख-कुहरान्तः स्रवन्ती अन्नस्य क्लेदनचर्व्वणादिकर्म्मसहाया भवति, तत्संक्लिन्नश्चौदनादिकं शीघ्रमेव मधुरविपाकं भजते।

तत्र **कर्णमूलिको**[७] नाम (१३५ चित्रम्) वृहत्तमस्तूलपिण्डनिभो लाला-ग्रन्थिर्द्वित्रतोलकपरिमाणः। स कर्णमूलस्य पुरस्तादधश्च हनुमुण्डसन्धिं संवेष्ट्य वर्त्तते। तत् पुरतश्च द्रश्या हनुकूटकर्षणी पेशी, या संकोचमापद्यमाना ग्रन्थिमेनं निपीड्य लालां स्रावयति चर्व्वण-कर्म्म-सौकर्य्याय। एकैकतश्च तदीयं स्रोतः कपोलिकाख्यां पेशीं निर्भिद्य मुखान्तःप्रसृतं कर्णमूलिकस्रोतो नाम। तत् त्र्यङ्गुलदीर्घं कुशेषिकापरिणाहञ्च। तन्मुखञ्च मुखालिन्दे ऊर्द्ध्वहनुमण्डलस्य द्वितीयचर्व्वणकदन्तोदूखलोर्द्ध्वं वर्त्तते शालाकाप्रवेशार्हम्।

---

१। The Palatine Arches or Fauces. २। Anterior Pillar of the Fauces. ३। Posterior Pillar of the Fauces. ४। Tonsils (Palatine). ५। Epiglottis. ६। Salivary glands. ७। Parotid gland.

[ १३७ चित्रम् ]

# गलबिलद्वारम् ।

( पश्चिमतो दृष्टम् )

[ अत्र ग्रसनिका पश्चिमतो विदार्य्य दर्शिता ]



इदञ्चात्र विशेषेण स्मर्त्तव्यं—कर्णमूलपाके सति शस्त्रकर्म्मणो निर्विघ्नतार्थम्। इमं हि खलु ग्रन्थिं निर्भिद्योर्द्ध्वं प्रसृता बहिर्मातृका नाम धमनी, अन्तर्हान्व्यादि-शाखाद्वयेन सहिता। वक्त्रनाड़ी च श्रुतिनाड़ीशाखा सहिता तमेव ग्रन्थिं निर्भिनत्ति। एवञ्च भ्रमवशेन धमनीच्छेदनाद् रक्तातिप्रवृत्तिः। वक्त्रनाड़ीच्छेदनाच्च अर्द्दित[1]प्रादुर्भावः। सन्निपातज्वरादिषु मुखदौर्गन्ध्यादिहेतोश्च प्रायः कर्णमूलिक-ग्रन्थिपाकः, स शक्यः प्रतिषेद्धुं भृशं मुखशोधनेन।

**हन्वधरीयो**[2] ग्रन्थिरधोहनुमण्डलस्याधस्तदुत्सङ्गे च वर्त्तते (१३९ चित्रम्) अक्षोटफलाकारः। तं पश्चिमतो निर्भिद्य प्रसृता बहिर्हानव्या नाम धमनी (वक्त्रधमनी)। वर्त्तते चासौ मुखभूमिनिर्मापिकानां पेशीनामधस्ताद् गलप्रच्छदाख्यया प्रावरण्या दृढ़माच्छादितः। तस्यापि स्रोतस्त्र्यङ्गुलदीर्घं प्रायेण। तद् जिह्वाधरीयसेवन्याः पार्श्वस्थेन जिह्वाधरीयग्रन्थिस्रोतसां मुखेन मिलितं प्रायः।

**जिह्वाधरीयो**[3] नाम (१३५ चित्रम्) प्रियङ्गुफलसदृशो ग्रन्थिर्जिह्वासेवन्या अधस्तात् श्लैष्मिककलावृतो वर्त्तते, अधोहनुमण्डलमध्यस्थे खाते निगूढ़ः। तस्य दश द्वादश वा (क्वचिद् विंशतिरपि वा) स्रोतांसि। तेषां मुखानि हन्वधरीय-ग्रन्थेः स्रोतसा मिलित्वा पृथग् वा जिह्वासेवन्याः पार्श्वत उन्मुच्यन्ते।

तदेतत् सानुबन्धं मुखकुहरं व्याख्यातम्।

अथ ग्रसनिका।

**ग्रसनिका**[4] नाम (१३८ चित्रम्) अन्नादिनिगिरणद्वारभूता आयतोदरा मांसकलामयी नलिका, या अन्ननलिकायाः शिखरमधितिष्ठति। सा ग्रीवा-कशेरुकानां पुरस्ताद् वर्त्तते, मुखनासागुहयोः स्वरयन्त्रस्य च पश्चिमतः। तस्या आकृतिः धुस्तूरपुष्पसदृशी (ऊर्द्ध्वमायता अधश्च संकुचिता)। निर्म्मिता च सा भूम्ना कण्ठसंकोचन्याख्य-पेशीत्रयेण आभ्यन्तरकलावेष्टनीभूतेन।

तस्यास्त्रयो भागाः कल्प्यन्ते वर्णनासौकर्य्याय—ऊर्द्ध्वं नासागुहापश्चिमः, मध्ये गलद्वारपश्चिमः, अधस्तात् स्वरयन्त्रपश्चिमश्चेति। तत्र—

---

१। अर्द्दितं नाम मुखमण्डलार्धस्य पेशीक्रियालोपकरो वातव्याधिः (Facial Paralysis).

२। Submaxillary gland. ३। Sub-lingual gland. ४। Pharynx

[ १३८ चित्रम् ]

## ग्रसनिका, अन्ननलिका, श्वासनलिका च ।

( पृष्ठतो दृष्टा )




( क ) **नासागुहापश्चिमे** भागे[१] दृश्यानि पुरस्तान्नासामध्यप्राचीरं, तदुभयतः पश्चिमं नासागुहाद्वारयुगलं[२], तदुभयतश्च द्वे च्छिद्रे श्रुतिसुरङ्गाद्वारे[३] नाम तद्वेष्टनाभ्यां त्रिकोणतरुणास्थिभ्या[४]मुपलक्षिते । पश्चाच्च तस्य शिरोग्रीवसन्धानस्य पुरोलग्नः तूलपिण्डकाकारः क्षुद्रग्रन्थिः ग्रसनिकाग्रन्थि[५] नाम ।

---

१ । Naso-pharynx. २ । Choanœ. ३ । Mouths of Auditory tubes. ४ । Torus. ५ । Pharyngeal Tonsil.

तस्य निर्म्माणमुपजिह्विकावत् । तस्य च नासागुहापश्चिमांशस्य अधोद्वारं गलविलानुवन्धि । तद् अन्नादिनिगिरणकाले पुरःस्थेन कोमलतालुना किञ्चिदुत्पतिष्णुना सर्वथाऽवरुध्यते तदानीम् अन्नादीनां नासागुहाप्रवेश-वारणाय ।

(ख) **गलद्वारपश्चिमो**[2] भागो **गलविल**-संज्ञः (१३६ चित्रम्)। स ऊर्द्ध्वं नासागुहापश्चिमांशेन अनुबध्यते, अधश्च स्वरयन्त्रपश्चिमांशेन, आ कण्ठिकास्थ्नः । तस्य पुरस्तात् संकुचितप्रायं गलविलद्वारं, गलतोरणिकाभ्यामु-पलक्षितम् । पश्चिमतो द्वितीय-तृतीयग्रीवाकशेरुकयोः पिण्डद्वयं कलावृतम् । उभयतश्च उत्तरमध्यमयोः कण्ठसंकोचन्योः पेश्योः पक्षांशौ कलावृतौ ।

(ग) **स्वरयन्त्रपश्चिमांशः**[2], पुनः कण्ठिकास्थिपृष्ठादारभ्य कृकाटिकापृष्ठान्तमायतः, कलावृतया अधरकण्ठसंकोचन्याख्यपेश्या परिवृतश्च (१३६ चित्रम्)। स चोर्द्ध्वं गलविलेन, अधश्च अन्ननलिकयाऽनुवध्यते । तत्र पुरस्ताद् दृश्यं त्रिकोणं स्वरयन्त्रद्वारं स्वरतन्त्रीभिरुपलक्षितमधिजिह्विकायुतञ्च ।

दश च पेश्यो ग्रसनिकां परितोऽवस्थिताः सूचितपूर्व्वाः । तासां विस्तरमिह ब्रूमः । ता एकैकतः पञ्च—कण्ठसंकोचनीत्रयं, शिफागलान्तरीया, श्रुतिसुरङ्गा-द्वारिका चेति । तत्र—

कण्ठसंकोचन्याख्यं पेशीत्रयम्[3] उत्तरोत्तराश्लेषेण ग्रसनिकां परिवृत्य तिष्ठति, इतरपार्श्वस्थेन पेशीत्रयेण मिलितम् (१३८ चित्रम्)। तस्य क्वचिद् "ग्रासनी" पेशीति साधारणी संज्ञा । तत्प्रावरणी च दृढ़स्नायुमयी प्रच्छदाकृतिः, या पश्चिमतो ग्रीवावंशपुरोभागे निवद्धा । तत्रैव च मध्यरेखायां दृश्या पेशीषट्-कसन्धानरेखा ग्रसनिकासेवनी[4] नाम । तत्रोत्तरायाः कण्ठसंकोचन्याः प्रभवः एकैकतो जतूकाचरणफलकम्, अधोहनुमण्डलीयं पश्चिमदन्तोदूखलमूलञ्च । मध्यमायाः पुनः प्रभवः कण्ठिकास्थ्नः शृङ्गद्वयं सान्तरालं, शिफाकण्ठिकास्नायुश्च । अधरायास्तु स्थूलप्रच्छदाकृतेः प्रभवः अवटुकृकाटिकयोः पार्श्वद्वयम् । निवेशः पुनः सर्व्वासां पूर्व्वोक्ता ग्रसनिकासेवनी दृढ़स्नायुसूत्रमयी ।

---

१। Oral part of Pharynx (or Cavity of Throat). २। Laryngeal part of Pharynx. ३। Constrictor muscles of the Pharynx. ४। Pharyngeal Raphe.

[ १३६ चित्रम् ]

# शिरोग्रीवार्द्धम्।

( मुख-नासा-गलताल्वादिप्रदर्शनाय मध्यरेखाच्छेदेन प्रकटीकृतम् )




[ १। नासासुरङ्गा उत्तरा। २। ऊर्द्धशुक्तिका। ३। नासासुरङ्गा मध्यमा। ४। नासालिन्दः ५। नासासुरङ्गा अधरा। ६। चिवुकजिह्वाकण्ठिका पेशी। ७। चिवुककण्ठिका पेशी। ]

### अथ अन्ननलिका

**अन्ननलिका**[1] नाम ( १४० चित्रम् ) प्रायेण वितस्तिप्रमाणदैर्घ्या द्व्यङ्गुलायता मांसमयी नलिका, या ग्रसनिकया निगीर्णमन्नपानमामाशये प्रवेशयति । तस्या उर्द्धमुखं ग्रसनिकयाऽनुबध्यते, अधोमुखमामाशयेन ।

सेयं षष्ठ्या ग्रीवाकशेरुकाया आरभ्य एकादशीं पृष्ठकशेरुकां यावत् पृष्ठवंशपुरोभागमास्थाय तदनुक्रमेण आलम्बते । त्रयश्च तस्या अंशाः कल्प्यन्ते वर्णनासौकर्य्याय - ग्रीवागतांशः, उरोगतांशः, उदरगतांशश्चेति । तेषामाद्यन्त-भागौ ह्रस्वौ त्रिचतुरङ्गुलमात्रौ च । मध्यभागो दीर्घः, सप्ताष्टाङ्गुलप्रमाणश्च ।

( व्यतिकरः ) अथास्या आदिमभागस्य ग्रीवास्थितस्य पुरस्ताद् दृश्यानि— क्लोमनलिका, ग्रैवेयकग्रन्थेर्वामपिण्डम्, अधरग्रैवेयक्यौ सिराधमन्यौ, नाड्यादयश्च विशेषाः । पश्चात् पृष्ठवंशः । दक्षिणतः दक्षिणा महामातृका धमनी, अनुमन्या सिरा, आरोहिणी स्वरयन्त्रनाड़ी च । वामतः—ता एव वामाः, मुख्या रसकुल्या च ।

मध्यभागस्य तु उरोगुहाप्रविष्टस्य पुरस्ताद् उत्तरफुस्फुसान्तराले दृश्याः— क्लोमनलिका, अनाहताख्यं नाड़ीचक्रम्, वामा अक्षाधरा धमनी महामातृका च । महाधमन्यास्तोरणभागश्च अन्ननलिकां तिर्य्यगुल्लङ्घ्य पश्चात् प्रसृतः । वामतश्च अन्ननलिकायाः तदेव धमनीद्वयं महाधमन्यास्तोरणान्तश्च । दक्षिणतः दक्षिणा फुस्फुसधराकला, आरोहिणी स्वरयन्त्रनाड़ी च । पश्चिमतः पुनः पृष्ठवंशो रसकुल्या च ।

अथ क्रमात् क्लोमविभागस्थानमतिक्रम्य पश्चिमाधरं फुस्फुसान्तरालं प्रविशन्त्या अन्ननलिकायाः पुरस्ताद् आदौ वामा क्लोमशाखा, दक्षिणा फुस्फुसाभिगा धमनी च । तदधस्तात् पुरो हृदयधरः कलाकोषः, पश्चादवरोहिणी महाधमनी, मुख्या रसकुल्या, पुरोवंशिकाः सिराश्च । उभयतश्च फुस्फुसधरौ कलाकोषौ, प्राणदे नाड्यौ च, तच्छाखानिर्म्मितं नाड़ीचक्रञ्च परितः ।

ततो महाप्राचीरां निर्भिद्य उदरगुहायां प्रविष्टायास्तस्याश्चरमो भागः तिर्य्यग्भूय आमाशयमुखेन संबद्धः । तत्र च पुरस्ताद्यकृद्वामपिण्डम् ।

---

१ । Oesophagus or Gullet.

वामतस्तदेव आमाशयस्कन्धश्च। दक्षिणतो यकृत्पिण्डिका दीर्घा। पश्चिमतो महाप्राचीरा।

निर्म्माणं पुनरन्ननलिकाया बहिर्भागे स्वतन्त्रपेशीतन्तुभिरनुदैर्घ्यमनुप्रस्थञ्चावस्थितैः, तेषामनुदैर्घ्या बहिस्तमाः। अभ्यन्तरतश्च तदावेष्टनी स्थूलकला, या तत्परितः स्थितेभ्यः श्लेष्मस्रावियन्थिभ्यः स्रुतेन श्लेष्मणा नियतमार्द्रीक्रियते। परितश्च तां नाड़ीजालकानि, सिराधमनीजालकानि च। तत्र नाड्यः नागिन्योः शाखाप्रशाखाः, प्राणदयोश्च। धमन्यः पुनरधरग्रैवेयक्योः पर्शुकानुगानामन्ननलिकानुगानाञ्च शाखाप्रतानाः।

तान्येतानि उदरगुहाबहिःस्थानि अन्नपचनसहायभूतानि गौणयन्त्राणि। मुख्ययन्त्राणि तु आमाशयादीनि उदरगुहान्तःस्थानि।

## अथ उदरगुहा।

**उदरगुहा**[१] नाम (१४१ चित्रम्) उदराभ्यन्तरस्था महती गुहा अलाबुफलायतना, या मध्यप्राचीरया ऊर्द्ध्वमुरोगुहातः प्रविभक्ता, अधश्च श्रोणिगुहानुबन्धिनी। तस्याः पश्चिमसीमा पृष्ठवंशः, कटिलम्बिनीसंज्ञं पेशीचतुष्टयं, कटिचतुरस्रे पेश्यौ च, तानि च सर्व्वाणि गम्भीरप्रावरणीच्छादितानि। पुरःसीम्नि पार्श्वयोश्चास्या उदरान्तश्छदा नाम गम्भीरप्रावरणी वर्णितपूर्व्वा, निम्नस्थाः पर्शुकोपपर्शुकाः, जघनकपालद्वयञ्च। समग्रायाश्च उदरगुहाया अन्तःपरिधिच्छादिनी तन्वी कला—उदर्य्या नाम। तामग्रे वक्ष्यामः।

सेयमुदरगुहा बहूनां यन्त्रतन्त्राणां धारणी। तानि च—आमाशयः, क्षुद्रान्त्राणि, वृहदन्त्रम्, यकृत्, प्लीहा, अग्न्याशयः, वृक्कौ, गवीन्यौ, वस्तिः (मूत्रपूर्णत्वे सति), अवरोहिणी महाधमनी, अधरा महासिरा, रसप्रपा रसकुल्यासहिता, मणिपूराख्यं नाड़ीचक्रं च।

उदरबहिर्भागश्च नवसु प्रदेशेषु विभज्यते वर्णनासौकर्य्याय (१४१ चित्रम्)। तद्विभाजन्यश्च रेखाश्चतस्रः कल्प्यन्ते—द्वे अनुलम्बे, द्वे च अनुप्रस्थे। तयोरनुलम्बे मध्यरेखामुभयतः अष्टमोपपर्शुकामध्यभागानुक्रमेण ऊर्द्ध्वाधः प्रसृते। एकैका च तयोः स्तनचूचुकाद् वक्षणरज्जुमध्यविन्दुं यावद् द्रष्टव्या। अथ अनुप्रस्थयो

१। Abdominal Cavity.

[ १४० चित्रम् ]

# अन्ननलिका

( कोष्ठयन्त्राणामपसारणेन दर्शिता )




( To face p. 196 )

रेखयोरुत्तरा उत्तरनाभिका नाम, सा नाभेरुपरिष्टात् नवमोपपर्शुकाग्रद्वयं स्पृष्ट्वा प्रसृता। अधरा तु अधरनाभिका नाम जघनकपालशिखरद्वयमाक्रामति। इत्थञ्च विभक्ता नव प्रदेशा यथा—उर्द्ध्वभागे उभयतो दक्षिणवामौ अनुपार्श्विकौ प्रदेशौ, मध्ये हृदयाधरिकः। मध्यभागे कटिपुरस्ताद् उभयतः कुक्षिद्वयं कटिपार्श्विकदेशौ वा, मध्ये नाभिं परितः परिनाभिकः। अधोभागे उभयतो वंक्षणोत्तरिकौ प्रदेशौ, मध्ये अधिवस्तिकः वस्तिदेशो वा इति।

एतेषु च प्रदेशेष्ववस्थिताः शारीरभागा नियतं स्मर्त्तव्याः। तद्यथा—

(१) दक्षिणे अनुपार्श्विकप्रदेशे[१] यकृद्दक्षिणपिण्डम्, वृहदन्त्रस्य याकृतकोणः, दक्षिणवृक्कांशश्च। हृदयाधरिकप्रदेशे[२] अग्न्याशयस्य दक्षिणार्द्धः, यकृतो वामपिण्डं दक्षिणपिण्डांशः, पित्तकोषश्च, ग्रहणिका, अग्न्याशयः, अधिवृक्कसहितौ वृक्कांशौ, अधरा महासिरा, प्रतीहारिणी सिरा, अवरोहिणी महाधमनी, मणिपूराख्यं नाड़ीचक्रम्, रसकुल्यादयश्च। वामे अनुपार्श्विकप्रदेशे[३] आमाशयस्कन्धः, प्लीहा, अग्न्याशयपुच्छम्, वृहदन्त्रस्यप्लैहिककोणः, वामवृक्कांशश्च।

(२) दक्षिणे कटिपार्श्विकदेशे[४] वृहदन्त्रस्य आरोहिभागः, दक्षिणवृक्कस्य अधरार्द्धः, क्षुद्रान्त्रैकदेशश्च। परिनाभिकदेशे[५] वृहदन्त्रस्य अनुप्रस्थभागः, ग्रहणिकांशः, वपामध्यभागः, अन्त्रवन्धनिकांशः, क्षुद्रान्त्राणि च भूम्ना। वामे कटिपार्श्विकदेशे[६] वृहदन्त्रस्य अवरोहिभागः, वामवृक्कस्य अधरार्द्धः, क्षुद्रान्त्रैकदेशश्च।

(३) दक्षिणे वंक्षणोत्तरिकप्रदेशे[७] दक्षिणा गवीनी, उण्डुकम्, उण्डुकपुच्छम्, वृषणधमन्यादयश्च। अधिवस्तिकप्रदेशे[८]—क्षुद्रान्त्रैकदेशः, वालानां वस्तिः(यूनां च मूत्रपूर्णा), गर्भाशयश्च गर्भिणीनाम्। वामे वंक्षणोत्तरिकप्रदेशे[९] वामा गवीनी, वृहदन्त्रस्य कुण्डलिका, वृषणधमन्यादयश्च।

---

१। Right Hypochondriac Region. २। Epigastric Region. ३। Left Hypochondriac Region. ४। Right Lumbar Region. ५। Umbilical Region. ६। Left Lumbar Region. ७। Right Inguinal Region. ८। Hypogastric Region ९। Left Inguinal Region.

[ १४१ चित्रम् ]

## उदरोरसोः पुरस्ताद् बहिर्भागस्थाः काल्पनिकरेखाः ततकृतविभागश्च ।




[ १। हृदयाधरिकः प्रदेशः। २। परिनाभिकः। ३। अधिवस्तिकः ( वस्तिप्रदेशो वा ) ]

अष्टौ च तावद् उदरगुहां परितश्छिद्राणि । तेषां—महाधमनीच्छिद्रम्, अधरमहासिराच्छिद्रम्, अन्ननालविवरञ्चेति त्रयं महाप्राचीरायां गुहाच्छदिभूतायाम् । द्वे अन्तर्वंक्षणीयसंज्ञे वंक्षणदेशयोः, द्वे च वंक्षणदर्य्यौ नाम तत्रैव वंक्षणकाण्डस्नायुरज्ज्वोरधस्ताद् वर्णितपूर्वे ।

अथ उदर्य्या कला ।

**उदर्य्या**[1] नाम तनुस्वच्छमसृणा महाकला (१४२ चित्रम्), या एकेन स्तरेण समग्रमपि उदरगुहापरिसरम्, अपरेण च स्तरेण तदन्तःस्थानि यन्त्राणि समावृणोति । सेयम् उरस्या कलेव निश्छिद्रा कला महाकोषरूपा । महाकोषस्य स्तरद्वयान्तश्च द्रवरूपा तनुपिच्छिला लसीका स्तोकमात्रा, या यन्त्राणां परस्परघर्षणकृतं क्षयं वारयति पैच्छिल्येन । सा च लसीका रोगवशाद् विकृता प्रवृद्धा च जलोदरं जनयति ।

अस्याश्च कलायाः द्वावंशौ कोषरूपौ—बाह्यो महाकोषः, आभ्यन्तरो लघुकोषश्चेति । तत्र बाह्यकोषस्य बहिःस्तरेणावृत उदरगुहापरिधिः सर्व्वत्रैव प्रायः । अन्तःस्तरेण पुनरावृतानि—यकृत्, प्लीहा, आमाशयः, ग्रहणी, बृहदन्त्रम्, क्षुद्रान्त्राणि, वस्तिशिखरम्, स्त्रीणां गर्भाशयश्च सपरिकरः । एतेषां च यन्त्राणां प्रबन्धनाय यत्र यत्र द्विगुणीभावः कलायाः, तत्र तत्र निर्म्मीयन्ते यकृदादीनां बन्धन्यः । तेषु च मुख्या बन्धन्यो यकृत्-प्लीहाऽमाशय-क्षुद्रान्त्र-बृहदन्त्र-वस्ति-गर्भाशय-गुदादिधारण्यः । तद्विस्तरं तत्तदाशयप्रकरणे वक्ष्यामः ।

आभ्यन्तरस्य लघुकोषस्य पुनः संस्थानं यकृदामाशययोरन्तराले तदधः, पृष्ठतश्च । तस्य चाधरांशो दीर्घाकृतिः वपाख्ये स्थूलकलामये प्रच्छदे प्रविष्टः (१४२ चित्रम्)। यकृद्वृन्तस्य चाधस्ताद् उभयोः कलाकोषयोः संयोजनं छिद्रम् उदर्य्यान्तरिकं नाम । तत्पथेन हि कलाकोषद्वयस्य अभ्यन्तरस्था लसीका परस्परसम्बन्धं भजते ।

**वपा**[2] नाम उदर्य्यायाः कलायाः स्तरचतुष्टयात्मको भाग आम्नाय[3]-प्रसिद्धो (१४३ चित्रम्), येन स्थूलजवनिकारूपेण पुरस्तात् संच्छाद्यन्तेऽन्त्राणि । सा चामाशयस्याऽधोधारातो लम्बमाना बृहदन्त्रस्य अनुप्रस्थभागं क्षुद्रान्त्राणि च

---

१। Peritoneum २। Great Omentum. ३। आम्नायो वेदः। याज्ञिका हि घृतभृष्टां वपां यज्ञे निर्वपन्ति।

[ १४२ चित्रम् ]

## उदर्य्याख्य महाकलायाः कोषद्वयप्रदर्शनाय उदरगुहाया उर्ध्वाधश्छेदः ( स्त्रीशरीरस्य )।




१। महाकोषस्य यकृत् पृष्ठस्था चरमसीमा ।

२। उदर्य्याविरहितो यकृत्पृष्ठांशः ।

३। योनिगुदान्तरीयं स्थालीपुटम् ।

४। वस्तिगर्भाशयान्तरीयं स्थालीपुटम् ।

पृ० पृ०—पृष्ठवंशः ।

[ चित्रे वाणाग्रफलक चिह्नाङ्कितम् उदर्य्यान्तरिकं छिद्रम्, लघु कोषश्च ]

[ १४३ चित्रम् ]



## वपा, अन्त्रबन्धनानि च ।

( वपा त्विह ऊर्द्ध्वं प्रत्याक्षिप्य दर्शिता । )




[ १। बृहदन्त्रीया मेदःपुष्पिकाः। २। बृहदन्त्रपट्टिका। ३। उदर्य्याख्य कलायाः परिसरीय-भागः। ४। उण्डुकबन्धनी। ५। उण्डुकखातम्। ६। उण्डुकपुच्छम्। ७। अनुप्रस्थ-बृहदन्त्रस्य बन्धनी। ८। बृहदन्त्रस्य प्लीहान्तकोणः। ९। क्षुद्रान्त्रम् (वामत आकृष्य पातितम्)। १० उण्डुकम् ( रज्जुबन्धनाकृष्टम् )। ११। क्षुद्रान्त्र बन्धनी। ]

संरक्षति। अधोधारा त्वस्या विमुक्ताग्रा। मेदस्विनामुदरे मेदःसञ्चयश्चात्रैव विशेषेण द्रश्यः।

अथैतानि उदर्य्यकलाया स्तत्र तत्र द्विगुणीभावादारचितानि स्थालीपुटानि। तत्र गुद-वस्ति-योनि-गर्भाशयादि व्यतिकरेण स्त्रीणां द्वे स्थालीपुटे स्वनामव्याख्याते वस्ति-गर्भाशयान्तरीयं[1], योनि-गुदान्तरीयं[2] ञ्चेति। पुंसान्तु वस्तिगुदान्तरीयम्[3]—एकमेव। अपराणि तु सर्वेषामपि ग्रहणीमभितः पञ्चषाणि, उण्डुकं परितस्त्रीणि, कुण्डलिकान्तराले चैकमिति।

एते पुनराशयभागाः सर्व्वंश उदर्य्यकलाच्छादिता द्रष्टव्याः। यकृद्, आमाशयः, ग्रहण्या उत्तरांशः, प्लीहा, क्षुद्रान्त्राणि, बृहदन्त्रस्य अनुप्रस्थभागः, कुण्डलिका, उत्तरगुदश्च। स्त्रीणां तु बीजकोषौ, बीजस्रोतसी, गर्भाशयश्चेति विशेषः। बीजस्रोतसोः पुष्पितमुखे तु उदर्य्याकोषान्तरुन्मुक्ते[4]।

इमे पुनरंशतः उदर्य्याख्यकलाच्छादिताः—ग्रहण्या अनुप्रस्थभागः अधरभागश्च, उण्डुकम्, बृहदन्त्रस्य आरोहिभागः अवरोहिभागश्च, मध्यगुदम्, योनेरुत्तरांशः, वस्तिपृष्ठञ्चेति। एतान् पुनः स्पृशति स्तोकेन उदरच्छदा—अग्न्याशयः, वृक्कौ, अधिवृक्कौ चेति।

## अथ आमाशयः।

**आमाशयो**[5] नाम भुक्तपीतस्य अन्नपानस्य मृदुमांसमयः प्रथमाधारः क्षुद्रदृतिसमाकारः। सोऽयमुदरस्य वामानुपार्श्विकभागं हृदयाधरिकभागञ्च तिर्य्यगधिशेते (१४४।१४५ चित्रयोः)। तस्य ऊर्ध्वमुखं महाप्राचीरां निर्भिद्य विनिर्गतेन अन्ननलिकामुखेन अनुबध्यते, अधोमुखं ग्रहणीमुखेन।

तस्य दैर्घ्यं प्रायेण वितस्तिप्रमाणम्। प्रस्थं पञ्चषाङ्गुलमात्रमधिकं वा बहुभोजिनाम्। तस्योर्ध्वं वामतश्च महाप्राचीरा। अधस्ताद् बृहदन्त्रस्य अनुप्रस्थांशो वपाच्छादितः। दक्षिणतो यकृद्। वामतः प्लीहा। पृष्ठतः अग्न्याशयः।

सोऽयम् अन्नपानस्य प्रचुरस्य निषेवणात् स्फारीभूय दीर्घायतः किञ्चिद् विवृत्तकायश्च भवति, अधिकरोति च मध्योदरम् आनाभिविलम्बितः।

---

१। Vesica-uterine Pouch. २। Recto-uterine Pouch. ३। Recto-vesical Pouch. ४। येन क्वचित्तत्रापि गर्भसम्भवः। ५। Stomach.

[ १४४ चित्रम् ]

## आमाशयस्य आकृतिर्निम्माणञ्च ।




[ क-क-क—आमाशयकोडिका धारा। पृ-पृ-पृ—आमाशयपृष्ठिका धारा।
१—हार्दिकद्वारम्। २—तिरश्चीना मांसतन्तवः। ३—अनुप्रस्था मांसतन्तवः। ]

औदरिकाणान्तु स एव कालेन नियतस्फारीभूतस्तिष्ठति, जनयति च क्रमाद् आमाशयविस्फारं[१] नाम दुःखदं रोगम्।

अथात्र लक्षणीया नव विशेषाः—द्वारद्वयं, धाराद्वयं, तलद्वयम्, आमाशयस्कन्धः, आमाशयमध्यम्, आमाशयप्रणालिकाचेति। तत्र—

(१) **द्वारद्वयम्** प्रान्तद्वयस्थम्। तत्रापि ऊर्ध्वद्वारम् अन्ननलिकाद्वारानुबन्धि—तस्य <u>हार्दिकद्वार</u>[२]मिति संज्ञा हृदयसान्निध्यात्। अधोद्वारम्

१। Dilatation of Stomach. २। Cardiac Orifice.

ग्रहणीमुखानुबन्धि—तत् मुद्रिकाद्वारं[१] नाम। तद्धि मुद्रिकाकारया संकोच-विस्फारशीलया कलावृतयामांसमयकपाटिकया सुरक्षितम्। सा च कपाटिका मुद्राकपाटिका[२] नाम।

(२) धाराद्वयं—तावद् उर्द्ध्वधारा अधोधारा चेति। रिक्तस्य तु आमाशयस्य त एव पूर्व-पश्चिमधारे भवतः। तयोरूर्ध्वधारा अन्ननलिकाया दक्षिणधारानुबन्धिनी ह्रस्वा दक्षिणाभिमुखी च। सा आमाशयक्रोडिका[३] नाम। अधोधारा तु आमाशयस्कन्धं वामतः संवेष्ट्य आमाशयतलं प्राप्नोति, सा आमाशयपृष्ठिका आमाशयतलिका[४] वा नाम। तस्यां च धारायां संलग्ना वपाख्या स्थूलकला वर्णितपूर्वा।

(३) तलद्वयं नाम आमाशयस्य बाह्यप्रदेशौ धाराद्वयान्तरालस्थौ। तयोः पुरस्तलं पश्चिमतलञ्चेति संज्ञे। रिक्तस्य तु आमाशयस्य संकोचकृत-विवर्त्तनात् तयोरेव ऊर्ध्वाधस्तलयोः परिणामः। अभ्यन्तरं पुनरामाशयस्य तन्निर्माणवर्णने वर्णनीयम्।

(४) आमाशयस्कन्धो[५] नाम आमाशयस्य कुब्जाकारः स्कन्धो वामानुपार्श्विकदेशे वर्त्तते महाप्राचीराया उत्सङ्गस्थः। सोऽयं स्फारतमो भाग आमाशयस्य। स च कलाबन्धन्या संबध्यते वामतः।

(५) आमाशयमध्यं[६] नाम आमाशयस्य मध्यभागः स्फारोदरः, स हि धारयति अन्नपानं प्राधान्येन।

(६) आमाशय प्रणालिका[७] नाम आमाशयस्य चरमो भागः स्थूलनलकाकारः। सा पित्तकोषस्य समीपस्था ग्रहण्याऽनुबध्यते, तदन्ते चान्तर्दृश्या मुद्राकपाटिका।

निर्माणं पुनरामाशयस्य वृतिचतुष्टयेन सम्पद्यते। तद्यथा—बहिर्भागे वृतिरुदर्य्याकलामयी, तदन्तर्मांसमयी, तदन्तः संयोजनतन्तुमयी, तदन्तश्च (आभ्यन्तरी वृतिः) स्थूलकलामयीति। तत्र—

---

१। Pyloric Orifice २। Pyloric Valve. ३। Lesser Curvature. ४। Greater Curvature. ५। Fundus. ६। Body of Stomach. ७। Pyloric Vestibule.

[ १४५ चित्रम् ]

## आमाशयस्य अभ्यन्तरम् ।

( विदार्य्य प्रदर्शितम् )




[ १। आमाशयस्य हार्दिकद्वारम् । २। आमाशयक्रोडम् । ३। आमाशयपृष्ठिका धारा । ]

( क ) वहिर्वृतिः—उदर्य्याख्य कलायाः स्तरद्वयेन पूर्वापरदेशप्रसृतेनाऽरच्यते। सा सर्वमपि आमाशयस्य वहिर्देशमावृणोति, अन्यत्र प्रवन्धनस्थानेभ्यः। तेषु हि द्विगुणीभूता उदर्यांशाः यकृत्-प्लीह-महाप्राचीराभिः सह संवध्नाति आमाशयं कलामयीभिर्वन्धनीभिः। वृहदन्त्रस्यानुप्रस्थांशेन च सम्बद्धा आमाशयस्य अधोधारा वपावन्धनेन।

( ख ) मांसमयीवृतिस्तावत् त्रिविधैः स्वतन्त्रपेशीतन्तुभिरनुदैर्घ्यमनुप्रस्थं तिर्य्यक् च सन्निविष्टैरारच्यते। तत्र अनुदैर्घ्यास्तन्तवो वहिस्तमाः, तदन्तरनुप्रस्थाश्च समग्रमाशयं संवेष्ट्य स्थिताः, तदन्तस्तिरश्चीनाः।

(ग) संयोजनतन्तुमयी वृतिस्तु आभ्यन्तरकलायाः सम्यक् प्रबन्धनार्था। संयोजनतन्तवश्च ऊर्णनाभसूत्रवत् सूक्ष्माणि स्नायुसूत्राणि। तस्यां च वृत्यां प्रसृतानि सिरा-धमनी-रसायनीजालकानि अणुग्रन्थयश्च पाचकरसस्राविणः।

(घ) आभ्यन्तरी वृतिः पुनः स्थूलकलामयी। सेयं कला आमाशयस्य रिक्तावस्थायां वृद्धजनस्य गात्रचर्म्मवद् वलीराजिभिरुपलक्षिता प्रशिथिला च भवति। तस्यां च उन्मुच्यन्ते पाचकाम्लरसस्राविणः क्लेदनश्लेष्मस्राविणश्च अणुग्रन्थयः। तेषां पाचकरसस्राविणो ग्रन्थयः अङ्गुलमात्रे स्थाने शताधिक-संख्याः इति परीक्षकाः। भोजनकाले च ते यथाप्रयोजनमम्लं रसं क्षरन्ति भुक्तविपाकाय।

पोषणं तावदामाशयस्य सम्पद्यते आमाशयकोडिकयोरामाशयतलिकयोश्च धमन्योः शाखाप्रतानैः। सर्वाश्च ता धमन्यो महाधमन्या अर्द्धोदरिकाख्य शाखा-प्रभवाः। सिराश्च तन्नसंज्ञा भुक्तरसभूयिष्ठं रक्तमभिवहन्त्यः प्रतीहारिणीं महासिरां प्रविशन्ति। रसायन्यश्च समन्तादाशयवेष्टन्यः धाराद्वयोपकण्ठस्थैः रसग्रन्थिभिरनुबिद्धाः।

नाडीप्रतानास्तु तत्र प्राणादयोरेव नाड्योः शाखाप्रशाखाऽनुशाखाः, मणिपूरचक्रप्रभवाश्च। तत्रेदं स्मर्त्तव्यम्—प्राणदयोः शाखाप्रताना आमाशयेऽ-जीर्णादिहेतोरुत्तेजिताः हृदयफुस्फुसादिप्रसृतांस्तच्छाखाप्रतानापरान् कोपयन्ति। ततो वातिकहृद्रोगस्य श्वासकासयोश्च वातिकयोः सम्भवो बहुशः। तमक-श्वासश्च प्रायेण तद्धेतुक एव।

## अथ क्षुद्रान्त्रम्।

**क्षुद्रान्त्रम्**[१] (क्षुद्रान्त्राणि वा) नाम मृदुमांसमयी सुदीर्घा नलिका (१३४।१५३ चित्रयोः), या नाभिं परितो रज्जुराशिरिव समूह्य रक्षिता। आमाशयेनाऽर्धपक्कमन्नं हि तत्रैव शनैः सम्यक् पच्यते। अतएवास्य पच्यमानाशय इति संज्ञा। पक्वाशय इति वा बृहदन्त्रसहितस्य। तस्योर्ध्वमुखमामाशयेन सम्बद्धम्, अधोमुखं बृहदन्त्रस्योण्डुकभागेन। तानि च क्षुद्रान्त्राणि दैर्घ्येण सार्धत्रिव्यामानि पुंसां, स्त्रीणां तु अर्धव्यामहीनानि—इति प्राञ्चः। तदेतत् प्रायिकं मानं, बहुधा अल्पाधिकदैर्घ्यदर्शनात्। परिणाहस्तु तेषां कराङ्गुष्ठवत्।

१। Small Intestine

[ १४६ चित्रम् ]

# ग्रहणीसंस्थानम् ।

( अत्र यकृद् ऊर्ध्वं प्रत्याक्षिप्य प्रतिबद्धम् । आमाशयो ग्रहणीवर्जक्षुद्रान्त्रं बृहदन्त्रस्य अनुप्रस्थभागश्च अपसारितानि ) ।




[ अ०—अग्न्याशयः । आ०—आमाशयस्कन्धः( कर्त्तितः ) । म० ध०—महाधमनी । अ० म०—अधरा महासिरा । बृ० आ०—बृहदन्त्रस्य आरोहिभागः । बृ० अ०—तस्यैव अवरोहिभागः । उ० ध०—उत्तरान्त्रिकी धमनी । १—अभिप्लीहिका धमनी । २-३—महाप्राचीराया मूलद्वयम् । ४—अभियाकृती धमनी । ५—याकृतं पित्तस्रोतः । ६—प्रतीहारिणी महासिरा । ]

संबध्यन्ते च तानि उदर्य्यकलारचिताभिर्बन्धनीभिः पृष्ठवंशपुरोभागेन । तासाम् अन्त्रबन्धनी[१]ति संज्ञा ।

संरक्ष्यन्ते च बृहदन्त्रानुप्रस्थभागसहितानि क्षुद्रान्त्राणि वपाख्यया बहुमेदोऽनुविद्धया स्थूलकलया पुरस्तात्तदाच्छादन्या । अभितश्च क्षुद्रान्त्राणि दृश्यं बृहदन्त्रम् ।

अथाऽस्य क्षुद्रान्त्रस्य त्रयो विभागाः कल्प्यन्ते वर्णनासौकर्य्याय—ग्रहणी, मध्यान्त्रकं, शेषान्त्रकं चेति । तत्र—

**ग्रहणी**[२] नाम क्षुद्रान्त्रस्य आद्यभागो द्वादशाङ्गुलमानः ( १३४।१४६।१४७ चित्रेषु )। तत्र पित्तकोषादागतं पाचकपित्तम्, अग्न्याशयादागत आग्नेयरसश्च पृथक् स्रोतोद्वयेन सम्मिलितमुखेन प्रसिच्येते, अर्धपक्वस्य अन्नस्य सम्यग् विपाकाय । मध्ये च आमाशयग्रहणीमुखयोर्द्वारं मुद्रिकाद्वारं नाम ।

सोऽयमन्त्रभागः कुटिलगत्या अग्न्याशयस्य शीर्षभागं क्रोडीकृत्य निम्नतः प्रसृतः अनुप्रस्थबृहदन्त्रस्य पश्चिमतोऽवतिष्ठते, ततो वामाभिमुखः पृष्ठवंशमुल्लंघ्य द्वितीयकटिकशेरुकाया वामपार्श्वं यावत् प्रसर्पति । ततः पुनर्वक्रीभूय नाभिं प्रति प्रतिष्ठते—इति तस्याः संस्थानवैचित्र्यम् । विदारितायाश्च ग्रहण्यां दृश्यते आभ्यन्तरवृतौ पूर्वोक्तस्य स्रोतोद्वयस्य सम्मिलितं मुखं शलाकाप्रवेशार्हम् ( १४७ चित्रम् ), वलीराज्यश्च रसाङ्कुरिकाधारिण्यः ।

अत्रेदं स्मर्त्तव्यम् । ग्रहण्या मार्द्दवात् क्रियालाघवाच्च प्रायेण ग्रहणीरोग-सम्भवः । सा हि अर्धपक्वमन्नं गृह्णाति, पचति च भुक्तामार्गाऽर्गलभूता ।

**मध्यान्त्रकं**[३] नाम पञ्चहस्तदीर्घः क्षुद्रान्त्रभागो ग्रहण्या अनुबन्धी । तत् नाभिं परितोऽवस्थितं भूम्ना, अन्त्रबन्धनीभिर्दृढं प्रतिबद्धञ्च पृष्ठतः ।

**शेषान्त्रकं**[४] नाम तत्परवर्त्ती क्षुद्रान्त्रभागश्चरमः । स अधिवस्तिदेशस्थो भूम्ना । तस्याधःप्रान्तः उण्डुकनाम्ना बृहदन्त्रस्य आद्यभागेन दक्षिणवंक्षणोत्तरिक-प्रदेशे सम्बद्धः अर्धचन्द्राकारखातद्वयाङ्कितया बन्धन्या ।

निर्म्माणं पुनः क्षुद्रान्त्राणां चतसृभिरेव वृतिभिरामाशयवत् । ताश्च यथा—

( क ) उदर्य्या वृतिः—उदर्य्यया कलया निर्म्मिता, ग्रहणीवर्जं सर्वत्र

---

१ । Mesenteries. २ । Duodenum. ग्रहणीपदं क्वचित् समग्रक्षुद्रान्त्राभ्यन्तरीयां कलामपि लक्षयति वैद्यकग्रन्थेषु, साऽसौ 'पित्तधरा' कलासंज्ञाऽपि । ३ । Jejunum. ४ । Ileum,

[ १४७ चित्रम् ]

## ग्रहणी, अग्न्याशयश्च ।




[ १—पित्तस्रोतः। २—प्रतीहारिणी महासिरा। ३—याकृती धमनी। ४—उत्तरान्त्रिकी सिरा धमनी च। ५—ग्रहण्या अभ्यन्तरम् ( विदार्य्य दर्शितम् )। अग्न्याशयोऽपीह मध्ये विदारितः। ]

सर्वान्त्रच्छादनी। सेयमन्त्रनलिकां सर्वतः संवेष्ट्य द्विगुणीभूता दीर्घाभिरन्त्रबन्धनीभिः स्वकीयस्तरद्वयारचिताभिः सन्धारयति अन्त्राणि। ग्रहणी तु पुरस्ताद् उदर्य्यकलया स्तोकेनावृता अन्त्रबन्धनीविहीनैव पश्चात्।

( ख ) पेशीवृतिः—स्वतन्त्रपेशीतन्तुभिरारचिता। पेशीतन्तवश्च बहिरनुदैर्घ्यं, तदन्तश्च अनुप्रस्थमन्त्रनलिकां संवेष्ट्य प्रसृताः।

( ग ) योजनीवृतिः—संयोजनीभिः ऊर्णनाभतन्तुवत् सूक्ष्मस्नायुसूत्रिकाभिरारचिता आभ्यन्तरकलासंधारणी। सा श्लेष्मस्राविणां क्षाररसस्राविणां च अणुग्रन्थिकानामायतनम्।

(घ) आभ्यन्तरी वृतिः--मृदुमसृणकलामयी पूर्वोक्तानामणुग्रन्थिकानां स्रोतोमुखधारणी (१४८ क चित्रम्)। सेयं कला कदम्बकेशरैरिव रसाकर्षणीभिरङ्कुरिकाभिराचिता, अनुप्रस्थाभिर्वलीराजीभिरुपलक्षिता च। ताश्च रसाङ्कुरिकाः[१] क्षुद्रान्त्राणामभ्यन्तरतः सहस्रशो दृश्याः। एकैकस्यां च अङ्कुरिकायामेकैका सूक्ष्मा रसायनीजालिका मध्यतः (१४८ ख चित्रम्), सा सिराधमनीजालकेन सम्यक् परिवृता, सुरक्षिता च मांसतन्तुभिः। संख्यातश्च अर्धकोटिरङ्कुरिकाः क्षुद्रान्त्रेषु—इति परीक्षकाः। ताभिश्च रसाकर्षणीभिराकृष्टः सौम्योऽन्नरस उदर्यासु रसायनीषु सञ्चरन् अन्त्रमूलिकैः रसग्रन्थिभिर्मध्येपथं विशोधितः क्रमाद् रसप्रपां प्रविशति। रसग्रन्थयश्च अन्त्रबन्धनीनां स्तरद्वयान्तः परितश्च दृश्याः भूम्ना— इत्यवोचाम।

अन्त्रपोषण्यस्तावद् धमन्यः—उत्तरान्त्रिक्या अधरान्त्रिक्याश्च धमन्याः शाखाप्रताना वर्णितपूर्वाः। सिरास्तु तत्सहचर्य्यः प्रतीहारिणीं महासिरां प्रविशन्ति, अभिवहन्ति च आग्नेयमन्नरसं रक्तमिश्रम्—इति विशेषः।

नाड्यः पुनरन्त्राणां मणिपूराख्यात् नाडीचक्रात् प्राधान्येन प्रभवन्ति। ताः समानवायोः क्रियासाधनभूताः। ताश्च क्रियाः[२] रसादानाऽन्त्रसंकोचनाद्याः नाडीतन्त्रवर्णने वर्णनीयाः।

## अथ बृहदन्त्रम्

**बृहदन्त्रं**[३] नाम क्षुद्रान्त्रविपक्कस्यान्नस्य मलीभूतस्याऽधारभूतं स्थूलनलकम् (१३४।१४६ चित्रयोः)। तस्य दैर्घ्यं सार्धहस्तत्रयप्रमाणं, परिणाहः पादाङ्गुष्ठवत् स्थूलतरो वा। तच्च उदरगुहायां दक्षिणवंक्षणोत्तरिकप्रदेशादुत्थाय वामावर्त्तेन क्षुद्रान्त्राणि प्रदक्षिणीकृत्य वामं वंक्षणोत्तरिकप्रदेशं प्राप्नोति, ततश्चादौ कुण्डलिकामारचय्य पश्चान्मध्यरेखानुक्रमेण सरलीभूयाऽवतीर्णं परिणमति गुदनलिकायां धनुर्वक्रायाम् पृष्ठवंशपुरस्ताद्।

तस्य च बृहदन्त्रस्य पक्वाशय[४] इति मलाशय इति वा संज्ञा। अन्नस्य खलु विपक्वस्य आप्यभागशोषणात् तत्रैव हि सर्वथा मलभावपरिणामः।

---

१। Villi. २। नाड्यो हि रसादानाय नियोजयन्ति रसाङ्कुरिकादीन्। ३। Large Intestine ४। पक्वाशयपदं क्वचित् सामान्यतः सर्वान्त्रवाचकमपि। 'मलाशय' पदं तु बृहदन्त्रार्थे रूढम्।

[ १४८ चित्रम् ]

## क्षुद्रान्त्राभ्यन्तरस्था वलिराजयः रसाङ्कुरिकाश्च ।

( क ) ( ख )






[ १। रसायनीजालिका। २। मध्यसिरा। (ख)—चित्रस्थाः सूक्ष्मपदार्थाः अणुवीक्षणसहायेन चक्षुषा दृश्याः ]

तस्य निर्म्माणं क्षुद्रान्त्रवत्, केवलमत्र अङ्कुरिकाणामभावः। विशेषतस्तु पेशीमयी वृतिस्तिसृभिस्तनुदीर्घपट्टिकाभिरुपलक्षिता, ताभिश्च संकोचितग्रथितं बृहदन्त्रनलकं क्षुद्रस्थालिकामालामयमिव लक्ष्यते।

अथास्य षोढ़ा प्रविभागो वर्णनासौकर्य्याय - उण्डुकम्, आरोहिभागः, अनुप्रस्थभागः, अवरोहिभागः, कुण्डलिका, गुदनलिका चेति। तत्र—

**उण्डुकं पुरीषोण्डुकं**[१] **वा** नाम बृहदन्त्रस्य आद्यभागश्चतुरङ्गुलायतः स्थालिकाकारो दक्षिणवंक्षणोत्तरिकप्रदेशस्थः ( १४६।१५० चित्रयोः )। तं वामपार्श्वतः प्रविशति क्षुद्रान्त्रभागश्चरमः स्वबन्धन्यां खातद्वयोपलक्षितः। प्रवेशद्वारश्च सन्दंशाकाराभ्यां कलावृतमांसतन्तुमयीभ्यां कपाटिकाभ्यामुपलक्षितम्—मलस्य विपरीतगतिवारणाय। तयोश्च सन्दंशकपाटिके[२] इति संज्ञा। निम्नतश्चोण्डुके विलग्ना शष्कुलिकाकारा प्रायश्चतुरङ्गुलदीर्घा तन्वी नलिका, उण्डुकपुच्छं[३] नाम। सा गर्भस्थबालस्य अन्त्रनिर्माणावशेषभूता निष्क्रियप्राया च। तस्याञ्च कदाचिद् जम्बीरवीजादिदुर्जरवस्तुप्रवेशाद् विद्रधि[४] सम्भवः।

---

१। Caecum. २। Ileo-caecal Valve. ३। Appendix. ४—Appendicitis.

[ १४६ चित्रम् ]—उण्डुकम् सप्रबन्धनम् ।




[ १५० चित्रम् ]—उण्डुकस्य अभ्यन्तरभागः ( विदार्य्य दर्शितः ) ।




( सं० क०- सन्दंशकपाटिकाद्वयम् )

**आरोहि बृहदन्त्रं**[१] नाम उण्डुकादूर्द्ध्वस्थो बृहदन्त्रस्य आरोहिभागो दक्षिणकुक्षिदेशस्थः। स यकृत्तलं यावद् गत्वा वक्रीभूय अनुप्रस्थभागेन मिलितः। तथाऽरचितस्य च बृहदन्त्रकोणस्य याकृतकोण[२] इति संज्ञा।

**अनुप्रस्थ बृहदन्त्रं**[३] तु यकृत्तलदेशात् प्लीहतलं यावत् परिघवदवस्थितो बृहदन्त्रभागः, स नाभेरुपरिष्टाद् आमाशयतलानुक्रमेण किञ्चिदिव धनुर्वक्रस्तिष्ठति। तञ्च क्रोडीकृत्याऽवलम्बते उदर्य्याख्यमहाकलाया वपा नाम स्थूलतमो भाग अन्त्राच्छादनः।

**अवरोहि बृहदन्त्रं**[४] नाम अनुप्रस्थबृहदन्त्रस्य प्लीहतले किञ्चिद् वक्रीभूतस्यानुबन्धी बृहदन्त्रभागो वामकुक्षिदेशस्थः। तथाऽरचितस्य च कोणस्य प्लैहिककोण[५] इति संज्ञा। अधःप्रान्तश्च अवरोहिबृहदन्त्रस्य वामे वंक्षणोत्तरिकप्रदेशे वक्रीभूय बृहदन्त्रकुण्डलिकयाऽनुबध्यते।

**बृहदन्त्र-कुण्डलिका**[६] नाम लुप्ताकारचिह्नवत् शम्बूकवद् वा वक्रीभूतो बृहदन्त्रप्रान्तः (१५१ चित्रम्)। सा अधिवस्तिकप्रदेशं वस्तिगुहाञ्चाऽऽक्रम्य तिष्ठति, गुदनलिकया चाऽनुबध्यतेऽधस्तात्।

**गुदनलिका**[७] नाम बृहदन्त्रस्य अधःप्रान्तः प्रायेण वितस्तिप्रमाणः (१५२ चित्रम्)। सेयं त्रिकास्थ्नः पुरस्तात् किञ्चिदिव धनुर्वक्रा सरलगात्रा नलिका, या ऊर्ध्वं बृहदन्त्रकुण्डलिकया अधश्च पायुद्वारेणानुबध्यते। तस्याश्च पुरस्तात् पुंसो वस्तिः, स्त्रियास्तु गर्भाशयो योनिश्च। पश्चात् त्रिकपुरःस्था नाडीप्रवेण्यः अनुत्रिकाख्याः, शाखाश्च आभ्यन्तर्य्या अधिश्रोणिकाख्य धमन्याः (वामायाः)। अथास्यास्त्रयो भागाः कल्प्यन्ते वर्णनासौकर्य्याय—उत्तरगुदम्, मध्यगुदम्, अधरगुदञ्चेति। तत्राद्यं स्थालिकायतं सार्धचतुरङ्गुलमानं च प्रायेण, तत् शुण्डिकाख्यपेश्याः पुरःस्थम्। द्वितीयं द्वित्राङ्गुलमानं किञ्चित् संकुचितं पुंसो वस्तिद्वारपृष्ठस्थं च, तत् पुरः पौरुषग्रन्थिं शुक्राधारिके च संस्पृश्यावतिष्ठते। स्त्रियास्तु योनिपृष्ठप्राचीरेण संबद्धोऽस्य पुरोभागः। अधरगुदं पुनः संकुचिततरं

---

१। Ascending Colon. २। Hepatic Flexure. ३। Transverse Colon.
४। Descending Colon. ५। Splenic Flexure. ६। Sigmoid Flexure.
७। Rectum.

[ १५१ चित्रम् ]—बृहदन्त्रस्य कुण्डलिका।




[ १५२ चित्रम् ]—गुदनलिका ( विदार्य्य दर्शिता )



सार्धाङ्गुलमात्रं द्व्यङ्गुलमात्रं वा अनुत्रिकास्थिपुरःस्थं, तद् गुदसंकोचनीभ्यां पेशीभ्यां पायुधारण्याख्यपेश्या च संवेष्टितम्। तस्य चरमप्रान्तः पायव्यत्रिकोण मध्यस्थः **पायु**-संज्ञः।

अथास्या गुदनलिकाया अभ्यन्तरे दृश्या अनुप्रस्थावस्थिताश्चक्रप्रायास्तिस्रो वलयः (चतस्रो वा क्वचित्) कलावृतमांसतन्तुनिर्मिताः। ताः गुदसंकोचे सति मलसन्धारणसहायाः मध्ये जवनिकाभूताः, गुदविस्फारे तु मार्गोन्मोचनात् मलविसर्जन्यः। प्रवाहणन्तु सम्पद्यते औदर्यपेशीनामुत्तरगुदस्य च संकोचनेनैव पायुधारण्याः शिथिलीकरणेन च। मलविसर्जनं गुदनलिकाया अधोऽधःक्रमेण संकोचनात्। गुदसंवरणं पुनः गुदसंकोचन्याख्यपेशीद्वयस्य संकोचेन, पायुधारण्या पायुकर्षणेन च।

प्राचां वलित्रयं तु पूर्वोक्ताद् वलित्रयात् किञ्चिद्भिन्नं प्रतिभाति। तत्तत्-क्रियाधिष्ठानसान्निध्यादेव हि तत्र तत्र वली-पेश्यादौ कथमपि प्रवाहणी-विसर्जनी-संवरणीति संज्ञात्रयस्य सङ्गतिरूर्ध्वाधःक्रमेण। तथाहि प्रथमवलि-चक्रोपलक्षितभागेन मलस्य अधःपीडनात्, प्रथमा प्रवाहणी। गुदविस्फारणेन मलविसर्जनाद् द्वितीया विसर्जनी। गुदसंकोचन्याख्यपेशीद्वयकृता चक्राकारा वलिस्तु संवरणी नाम। (१५२ चित्रे १।२।३)।

**गुदद्वारं पायुद्वारं वा**[१] नाम (१५२ चित्रम्) अधरगुदस्याधःप्रान्तः अनुत्रिकास्थ्नः पुरस्तान्नितम्बद्वयान्तराले दृश्यः। तच्च संक्षेपेण पायुरिति गुदमित्यपि वा क्वचित् संज्ञायते। तत्परितश्च तन्वी त्वक् प्रतनुकाभिरनुदैर्घ्यं प्रसृताभिः वलीराजिभिरुपलक्षिता गुदाभ्यन्तरस्थया श्लैष्मिककलया समनुबध्यते। त्वक्कलयोः सन्धिस्थानं च तत्र नीलाभशुभ्ररेखाङ्कितम्। अभ्यन्तरतश्च श्लैष्मिककलायामपि तादृश्य एव वलीराज्यो[२] गभीरतराः। परितस्तु पायुं गुदसंकोचनी बाह्या नाम पेशी वर्णितपूर्वा। पुरस्ताच्च गुदोपस्थयोरन्तरालस्थः प्रदेशो मूलाधारो नाम सेवन्या उपलक्षितः। खातं च गुदं परितो मेदःपूर्णम् भगन्दररोगायतनम्—गुदकौकुन्दरं नाम। तद्विवरणं वर्णितपूर्वम्।

---

१। Anus. २। Rectal Columns (of Morgagni).

इदञ्चात्र स्मर्त्तव्यम्। गुदनलिकां परितोऽवस्थितस्य सिराचक्रस्य भृशं रक्तपूर्णत्वे सति सिरामुखानामधःस्थानां स्फारीभावात् तीव्ररुजाप्रादुर्भावो रक्तस्रुतिश्च। तानि च सिरामुखानि रक्तार्शसामायतनानीति सिराध्याये व्याख्यातचराणि। शुष्कार्शसान्तु सम्भवो गुदद्वारं परितः स्थितानां त्वक्-कलामयीनां प्रतनुवलीनां शिथिलीभावात्। प्रवाहिकादौ अधरगुदाभ्यन्तरा-वरणस्य समग्रकलाभागस्य प्रशिथिलीभावात्तु पुरीषोत्सर्गकाले गुदनिर्गमो बालानां प्रायः।

पोषणं पुनरन्त्राणाम् उत्तराधराख्ययोः आन्त्रिकीसंज्ञयोर्धमन्योः शाखा-प्रतानैः। सिराश्च तदनुवर्त्तिन्यः प्रतीहारिणीं महासिरां प्रविशन्ति, तेन यकृद्रोगेषु स्तोकेनापि तस्यां रक्तावरोधे तदापूरणीषु सिरासु रक्ताधिक्यं, ततो रक्तपित्तस्य रक्तार्शसां वा सम्भवः।

नाड्यस्तावदन्त्राणां मणिपूराख्य नाडीचक्रादुद्गताः संज्ञावहा श्चेष्टावहाश्च। मूलाधारचक्रोद्भवाश्च काश्चन गुदोपस्थादिप्रसृताः। क्रियाः पुनरन्त्राणां न पुरुषेच्छापेक्षिण्यः, अन्यत्र गुदप्रान्तात्। स्वत एव हि ताः प्रवर्त्तन्ते समानापानयो र्वाय्वोरानुलोम्ये सति अन्त्रसंकोचनादिरूपाः स्वभावात्।

समग्रस्य च अन्त्राभ्यन्तरावरण-कलाभागस्य 'मलधरा कलेति' संज्ञा प्राचाम्।

## अथ अन्त्रबन्धन्यः।

**अन्त्रबन्धन्यो**[१] नाम क्षुद्रान्त्राणां बृहदन्त्रस्य च कलामय्यः प्रबन्धन्यः। ता उदर्य्यकलाया अन्त्राणि परितः प्रसृताया द्विगुणीभावेनाऽरचिताः सिरा-धमनी-रसायनी-रसग्रन्थ्यादिसन्धारण्यः।

उदर्य्या हि कला क्षुद्रान्त्राणि, अनुप्रस्थाख्यं बृहदन्त्रं, कुण्डलिकान्त्रञ्च कात्स्न्येनाऽवृणोति, रचयति च दृढां बन्धनत्रयीं—क्षुद्रान्त्रबन्धनीम्[२], अनु-प्रस्थान्त्रधरां[३] कुण्डलिकान्त्रधरा[४]ञ्च नाम। आरोहिबृहदन्त्रस्य अवरोहि-बृहदन्त्रस्य च सन्धारणाय तु न सर्वत्र समानाः प्रबन्धन्यः, स्वल्पतराश्च ताः प्रायः।

---

१। Mesenteries and Meso-colon. २। Mesenteries. ३। Transverse Meso-colon. ४। Sigmoid Meso-colon.

तासां संज्ञाः तत्तदन्त्रभागानुसारिण्यः । सन्ति च बृहदन्त्रस्याधोधारालम्बिताः मालतीपुष्पगुच्छाकाराः काश्चन कलावृता मेदोगुच्छिकाः, ता अन्त्रपुष्पिकाः[१] नाम ।

गुदनलिका तु उत्तरगुदांश एव उदर्य्यकलयाच्छादिता । उदर्य्यकलाया द्विगुणीभावाद्धि पुंसां गुदवस्त्यन्तरीयस्य स्थालीपुटस्य सम्भवः, स्त्रीणान्तु योनिगुदान्तरीयस्य वस्तिगर्भाशयान्तरीयस्य च । तद्विवरणमुक्तपूर्वम् ।

## अथ यकृत् ।

**यकृत्**[२] नाम बृहत्तमः प्रधानतमश्च ग्रन्थिरीषद्गर्भ आशयो वा शरीरे (१५३।१५४ चित्रयोः) । स उदरगुहायां दक्षिणानुपार्श्विकदेशे प्रच्छन्नो भूम्ना, प्रसृतश्च हृदयाधरिकदेशे (क्वचिद् वामानुपार्श्विकदेशे च) स्तोकेन ।

सोऽयं बहिःस्निग्ध-मसृण-संहताकृतिस्त्रिकोणप्रायो ग्रन्थिर्महायतनः, पक्वतालफलवर्णश्च । आच्छाद्यते चासौ बहिर्भागे प्रायः सर्वत्र प्रतनुना उदर्य्याख्यकलाभागेन । तस्य च कला कोषस्य याकृतकोष इति संज्ञा । दैर्घ्यं तु यकृतो वितस्तिप्रमाणं प्रायेण, प्रस्थं मध्ये षडङ्गुलं प्रान्तयोस्तु न्यूनम् । गुरुत्वपरिमाणं सार्द्धशरावं शरावद्वयं वा । तदायतनस्य ह्रासवृद्धी तु रोगकृते ।

तस्य द्वे तले—ऊर्द्ध्वतलमधस्तलञ्च । द्वे धारे—पुरोधारा, पश्चिमधारा च । द्वे पिण्डे—दक्षिणं वामञ्च । द्वे पिण्डिके—दीर्घपिण्डिका, चतुरस्रपिण्डिका च । पञ्च सीताः, पञ्च प्रबन्धन्यः, पञ्च आशयसम्पर्काश्च । तस्य तलद्वयं यथा—

**ऊर्द्ध्वतलं** कूर्मपृष्ठाकारं महाप्राचीरोदरस्थं, तद् दक्षिणाभिमुखं पुरोविलम्बि च वाहुल्येन । पुरस्ताच्च तदाच्छादन्त्यः षट् सप्त वा अधराः पर्शुकोपपर्शुकाः पर्शुकान्तरालाभिः पेशीभिरापूरिताः । दृश्यते च तत्रैव यकृत्प्रबन्धनी नाम कलामयी वन्धनी, या वामदक्षिणयोः पिण्डयोर्यकृद् विभजते, धारयति च गर्भस्थशिशोः संवाहिनीं नाम महासिरां वर्णितपूर्वाम् ।

---

१ । Appendices Epiploicæ. २ । Liver.

[ १५३ चित्रम् ]

## यकृत्

( सम्मुखतो दृष्टम् )




[ १।२—पार्श्विकप्रबन्धनी—दक्षिणा वामा च ]

**अधस्तलं** किञ्चित् कोरोदरं वामपश्चिमाभिमुखं विशेषादुच्चावचञ्च, सीताबाहुल्यादाशयसम्पर्काच्च । तथाह्यत्र पञ्च सीताः पिण्डविभजन्य इहैवाग्रे वक्ष्यमाणाः । आशयाश्च तद्व्यतिकरणे दृश्याः पञ्चैव—आमाशयो, ग्रहणी, बृहदन्त्रस्य याकृतकोणः, साधिवृक्को दक्षिणवृक्कः, पित्तकोषश्चेति ।

धाराद्वयं यथा—

**पुरोधारा** दक्षिणानुपार्श्विकदेशस्थानां पर्शुकोपपर्शुकानामधोधारानुवर्त्तिनी तनुपत्राकारा । स्तोकेन खण्डिता च सा द्वयोरंशयोः पित्तकोषधारणाय यकृत्प्रबन्धनीसंयोगाय च ।

[ १५४ चित्रम् ]

# यकृत्

( पश्चिमतो दृष्टम् )




[ १ । उदर्ययाऽनावृतः प्रदेशः । २ । अधिवृक्कस्पर्शजं खातम् । ३।४ । यकृद्बन्धन्याः पूर्वापरभागौ । ५ । वृक्कस्पर्शजं खातम् । ६ । ग्रहणीस्पर्शजं खातम् । ७ । बृहदन्त्रकोणस्पर्शजं खातम् । ८ । चतुरस्रपिण्डिका । ९ । संवाहिनी-सिरावशेषः । १० । पिण्डकूटम् । ११ । आमाशयस्पर्शजं खातम् । १२ । अन्ननलिकास्पर्शजं खातम् ]

**पश्चिमधारा** पुनः स्थूला गभीरखाताङ्किता च अधरमहासिराधारणाय ।

पिण्डद्वयं यथा—

**दक्षिणपिण्डं**[१] बृहत्तरं दक्षिणानुपार्श्विकदेशप्रच्छन्नं वामपिण्डस्य षड्गुणायतनम् । तस्यैव वामपश्चिमसीमायामधरमहासिराधरं खातम् । अधस्तले च चत्वारि आशयस्पर्शलक्ष्माणि—अधिवृक्क वृक्क-ग्रहणी-बृहदन्त्र-स्पर्शनात् ।

१ । Right Lobe.

**वामपिण्डं**[१] लघुतरं पत्राकारं हृदयाधरिकप्रदेशस्थं च। तस्याधस्तले दृश्यमामाशयस्य अन्ननलिकासंयुक्तस्य स्पर्शकृतं खातमीषद्गभीरम्।

पिण्डिकाद्वयं यथा—

**चतुरस्रपिण्डिका**[२], **दीर्घपिण्डिका**[३] च। ते यकृत्तले पिण्डद्वयस्यान्तराले पूर्वापरक्रमेणाऽवतिष्ठते। तयोराद्यायाः पुरो दक्षिणतश्च दृश्यः पित्तकोषः। द्वितीयायास्तु पश्चाद् दक्षिणतोऽधरा महासिरा गभीरखातप्रविष्टा। पिण्डिकाद्वयान्तराले च दृश्या प्रतीहारिणीसंज्ञक-महासिरादिधरा द्वारसीता।

लक्षणीयश्चात्र द्वारसीतायाः पुरस्तात् दक्षिणपिण्डस्य चतुरस्रपिण्डिकया संयोजनोऽवयवः—**पिण्डयोजनिका**[४] नाम।

सीतापञ्चकं पुनर्यकृत्पश्चिमस्तले स्फुटं दृश्यं )—( इत्याकारेणावस्थितम्। तत्र यकृद्द्वारभूता मध्यस्था सीता—**द्वारसीता**[५] नाम। तामाश्रित्य प्रविशति यकृदन्तरं प्रतीहारिणी महासिरा, 'याकृती'-संज्ञकनाडी-धमनी-सहिता। निर्गच्छतश्च तेनैव द्वारेण पित्तस्रोतसी रसायनीभिः परिवृते। सोऽयं सिराधमन्यादिसंघात 'उदर्याख्य'-महाकलायाः स्तरद्वयेन याकृतकलाकोषेण च समन्तात् परिवृतो **यकृद्वृन्तं** नाम।

प्रान्तयोस्तु द्वारसीताया द्वे सीते—वामा दक्षिणा चेति। तयोर्वामा सीता सुदीर्घेण पूर्वांशेन पुरस्तले प्रसृता यकृत्पिण्डद्वयस्य विभजनी तस्याः वामपूर्वेति, दीर्घसीतेति वा संज्ञा। पश्चिमांशेन पश्चात् प्रसृतस्तु वामसीतांशः गर्भस्थशिशोः सेतुसिराधारणः, तस्य वामपश्चिमेति, सेतुसीतेति वा संज्ञा।

दक्षिणा पुनः सीता मध्ये नातिगभीरा। सा पूर्वार्द्धेन पित्तकोषधारणं नातिगभीरं खातम्, पश्चार्द्धेन च अधरमहासिराधरं गभीरखातमारचयति। तयोरंशयोः क्रमाद् दक्षिणपूर्वा, दक्षिणपश्चिमा चेति संज्ञा।

**प्रबन्धन्यः**[६] पुनर्यकृतः पञ्चैव कलामय्यः। तासां दीर्घा प्रबन्धनी पुरस्ताद् यकृत्पिण्डद्वयविभजनी। पार्श्विकप्रबन्धन्यौ च तत्संलग्ने तत्कार्य्ये

---

१। Left Lobe. २। Quadrate Lobe. ३। Caudate or Spigelian Lobe. ४। Caudate Process. ५। Porta Hepatis or Transverse Fissure. ६। Ligaments of the Liver.

[ १५५ चित्रम् ]

## प्रतीहारिमहासिरायाः कन्दिकान्तराला शाखा ।

( अनुवीक्षणयन्त्रसहायेन चक्षुषा दृश्या )




[ १५६ चित्रम् ]

## यकृत्कन्दिका-संस्थानम् ।

( अनुवीक्षणसहायेन चक्षुषा दृश्यम् )



उभयतः, तिस्रश्च ताः पुरः परस्परसंयुक्ताः। पश्चिमप्रबन्धनी—महाप्राचीरया यकृत्पृष्ठं प्रबध्नाति। गर्भस्थशिशोः संवाहिनीसिराया अवशेषधरा त्वपरा, सा दीर्घायाः प्रबन्धन्या अनुवृत्तिरूपा पुरस्तादधश्च रज्जुरूपेण तां प्रबन्धनीं नाभिमूलान्तं प्रबध्नाति, तस्या रज्जुप्रबन्धनीति संज्ञा।

आशयसम्पर्कास्तु व्याख्याताः। पित्तकोषः पृथगिहैव व्याख्यास्यते।

निर्म्माणं पुनर्यकृतः क्षुद्राभिः कन्दिकाभिः सिराधमनीजालकानुविद्धाभिः (१५५।१५६ चित्रयोः)। प्रतीहारिणी हि महासिरा शाखा-प्रशाखानुशाखादिभिर्यकृन्मध्ये प्रसृता चरमैः शाखाप्रतानैः संवेष्टयति तास्ताः कन्दिकाः। तेषाञ्च सिराप्रतानानां कन्दिकान्तरालाः[1] सिरा इति संज्ञा। याकृती धमनी च तथैव विभज्यमाना चरमैः शाखाप्रतानैः कन्दिकानां संवेष्टनी। तेषाञ्च धमनीप्रतानानां कन्दिकान्तराला धमन्य इति संज्ञा। केन्द्रेषु पुनः कन्दिकानां दृश्यन्ते मुखानि सूक्ष्मानां याकृतसिराणाम्। ताश्च सिराः कन्दिकाकेन्द्रिण्यो[2] नाम। तासां हि केन्द्रिणीसंज्ञकसिराणां पुञ्जीभावात् सम्भवन्ति याकृत्यः सिराः स्थूलस्थूलतराः। तासामधरमहासिरायां प्रवेशः।

पित्तस्रोतांसि[3] तु सूक्ष्मतमानि कन्दिकान्तवर्त्तिभ्यः सिराधमनी-जालकेभ्यः सम्भूतानि तत्सहचराण्येव। तेषां परस्परसम्मेलनात् सम्भवन्ति तनूनि पित्तस्रोतांसि, तानि कन्दिकान्तरालानां सिराधमनीनां सहचराणि। तेषाञ्च क्रमशः परस्परसंयोगात् सम्पद्यन्ते स्थूलानि पित्तस्रोतांसि। तासां प्रधानयोर्याकृतपित्तस्रोतसोः परिणामः। ते यकृद्द्वारसीतायां स्फुटं दृश्ये। तयोश्चैकीभावात् सम्भूता याकृती नाम पित्तनलिका। सा च 'कौषिकी'संज्ञकनलिकया ग्रहणीपार्श्वे मिलिता साधारणीं पित्तनलिकां निर्म्मिमीते। तस्या मुखं ग्रहण्यन्तर्द्दृश्यम् (१४७ चित्रम्)।

यकृत्कन्दिकाः[4] पुनः सूक्ष्मानां यकृद्वस्तुनिर्म्मापककोषाणूनां[5] संघातमय्यः। तेषाञ्च कोषाणूनां त्रिविधानि कार्य्याणि—अन्नरसशोधनं, पित्तनिर्म्माणं, "मधुरक" रक्षणञ्चेति। ओदन-शर्करादिसम्भवो हि मधुरको[6] नाम मधुरधातुविशेषो याकृतकोषाणुषु संरक्ष्यते, मांसादिशारीरधातूनां सतिप्रयोजने व्यवहाराय।

---

१। Inter-lobular Veins. २। Intra-lobular Veins. ३। Bile-capillaries. ४। Liver-lobules. ५। Liver-cells. ६। Glycogen.

अत एव मधुररसभूयिष्ठं यकृद् विशेषेण रोचते मांसाशिभ्यः । शोणितशोणिमप्रदस्य रञ्जकपित्तस्य[1] च निर्म्माणं यकृत्प्लीह्नोः सम्भवतीति प्राञ्चः । प्लीह्नि एवेति प्रतीच्याः ।

अथ पित्तकोषः ।

**पित्तकोषो**[2] नाम क्षुद्रतुम्बीसमाकार ऊर्द्ध्वमुखः कोषो यकृदधस्तले संलग्नः ( १५७ चित्रम् ) । तस्य तलभागो यकृत्पुरोधारास्पर्शी नवमोपपर्शुकाग्रदेशे वर्त्तते, स विदारितोदरे स्तोकेन पुरस्ताद् दृश्यः । ऊर्द्ध्वभागस्तु तस्य मरालग्रीवावद् वक्रीभूतमुखो यकृद्द्वारसीतां यावत् प्रसृतः । तत्र च नलिकारूपेण परिणतमस्य मुखं प्रतिहारिणीं सिरामनु वर्त्तते ।

[ १५७ चित्रम् ]

पित्तकोषः पित्तनलिकासहितः ।

( विदार्य्य दर्शितः )




१ । Haemoglobin or Haemoglobinogen. २ । Gall-bladder.

तस्य दैर्घ्य पञ्चषाङ्गुलपरिमाणं, प्रस्थं मूले द्वित्र्याङ्गुलं, मुखे तु सार्द्धाङ्गुल मङ्गुलमात्रं वा। आयतनं त्रिचतुरतोलकपरिमाणपित्तस्य धारणक्षमम्। निर्म्मीयते चासौ स्नायुतन्तुभूयिष्ठैः स्वतन्त्रमांसतन्तुभिरुदर्य्यकलाच्छादितैः। अभ्यन्तरतश्च तदावरणी कला सर्पनिर्मोकवद् विचित्रवलीकदम्बकाङ्किता। कोषनलिकान्तस्तु वर्त्तमाना तदनुवृत्तिभूता कला आवर्त्तमालाङ्किता। सेयं पित्तकोषनलिका[१] शरेषीकापरिणाहा प्रायेण त्र्यङ्गुलदीर्घा याकृत्या पित्तनलिकया[२]ऽनुवध्यते ग्रहणीपार्श्वतः। मिलितयोश्च नलिकयोः पित्तप्रसेक इति साधारणी पित्तनलिकेति[३] वा संज्ञा। अवस्थानवैचित्र्याच्च यकृन्निःस्रुतस्य पित्तस्य पित्तकोषे सञ्चयः, सद्यःस्रुतिर्वा यथाप्रयोजनं ग्रहण्याम्।

## अथ अग्न्याशयः।

**अग्न्याशयो**[४] नाम प्रायेण दशाङ्गुलदीर्घः त्रिचतुराङ्गुलायतो ग्रन्थिसंघातमय आशयः, स आमाशयस्य पृष्ठतः प्रथमकटिकशेरुकायाः पुरस्तात् परिघवदधिशेते ( १५८ चित्रम् )। तस्य स्थूलः शिरोभागो दक्षिणाभिगो ग्रहण्या क्रोडीकृतः, तनुः पुच्छभागस्तु वामाभिगः प्लीहा। तस्योर्द्ध्वधारानुक्रमेण प्रसृता अभिप्लीहिका नाम धमनी। पश्चिमतस्तु द्रश्याः--साधारणी पित्तनलिका, अधरा महासिरा, वामा अनुवृक्का सिरा, महाधमनी, उत्तरान्त्रिकाख्ये सिराधमन्यौ, महाप्राचीराया मूलद्वयं पृष्ठवंशसहितम्, वामवृक्कः अधिवृक्कसंहितः, वामा कटिचतुरस्रा पेशी च। अधोधारा पुनस्तस्य दक्षिणभागे ग्रहण्या उत्सङ्गे धृता; वामभागे अनुप्रस्थवृहदन्त्रस्य प्रवन्धन्या। अस्य च तावदग्न्याशयस्य अनुलम्बविदारणेन द्रश्यं दीर्घं स्रोतोद्वयम् आग्नेयरसस्रावि। तच्च मिलितम् एकमेव स्रोतः सम्पद्यते, आग्नेयस्रोतो[५] नाम, उन्मुच्यते च तद् ग्रहण्यन्तः सह साधारण्या पित्तनलिकया।

सोऽयम् अग्न्याशय आमाशये अर्द्धविपक्वस्य सर्व्वविधस्यान्नपानस्य पचनक्षममाग्नेयरसं प्रक्षरति पूर्व्वोक्तेन स्रोतसा ग्रहण्याम्। तत्परिमाणञ्च साधारणम् अन्नपानं भुञ्जानस्य पुरुषस्य अहोरात्रेण प्रायः शरावमात्रमिति परीक्षकाः।

---

१। Cystic Duct. २। Hepatic Duct. ३। Common Bile-duct.
४। Pancreas. ५। Pancreatic Duct.

[ अस्ति च क्वचिद् अग्न्याशयात् पृथग्भूतो द्वितीयोऽपि ग्रन्थिस्तादृश एव तत्पार्श्वे तादृशस्रोतसा सहितः, स तत्कार्य्य एव ]। निर्म्माणवैचित्र्यन्तु अग्न्याशयस्य सूक्ष्मशारीरवर्णने वर्णयिष्यामः।

[ १५८ चित्रम् ]

## अग्न्याशयो ग्रहणी च।




[ १—पित्तस्रोतः। २।—प्रतीहारिणी महासिरा। ३--याकृती धमनी। ४—उत्तरान्त्रिकी सिरा धमनी च। ५—ग्रहण्या अभ्यन्तरम् ( विदार्य्य दर्शितम् )। अग्न्याशयोऽपीह मध्ये बिदारितः। ]

### अथ प्लीहा

प्लीहा[१] नाम निःस्रोतस्कग्रन्थिषु मुख्यो बृहत्तमश्च ग्रन्थिः ( १५९ चित्रम् ) उदरगुहायां वामानुपार्श्विकभागे वर्त्तमानः। स प्रायेण सप्ताष्टाङ्गुल-दीर्घः, चतुरङ्गुलप्रस्थः, द्व्यङ्गुलस्थूलः, किञ्चिद् विवृत्तकायः, स्थूलकपालिकाकारः पक्वजम्बूफलश्यामश्च। तस्य गुरुत्वपरिमाणं प्रायेण पञ्चदशतोलकमात्रम्।

---

१। Spleen.

[ १५६ चित्रम् ]

## प्लीहा ( परावृत्य दर्शितः )




ज्वरादिहेतोस्तु तस्य आयतनं गुरुत्वञ्च क्रमाद् विवर्द्धते। प्लीहोदरे[१] पुनः स एवाभिप्रवृद्ध आवंक्षणं प्रसृतः प्रायः समग्रामपि उदरगुहामधिकरोति।

एष चास्य प्रकृतिस्थस्य व्यतिकरः। पुरस्ताद् दक्षिणतश्च प्लीह आमाशयस्कन्धः, पश्चाद् ऊर्द्ध्वञ्च महाप्राचीरा नाम पेशी नवम-दशमैकादश-वामपर्शुकाभिः सम्बद्धा। अन्तस्सीम्नि चास्य खातं प्लीहद्वारकं[२] नाम। तत्र दृश्या अभिप्लीहिका धमनी, प्लैहिकी सिरा च। तदधस्ताद् अग्न्याशयपुच्छम्। अधोधारा त्वस्य त्रिकोणप्राया बृहदन्त्रस्य प्लैहिकं कोणं स्पृशति।

---

१। प्लीहोदरञ्च इदानीं कालज्वरे दृश्यं प्रायः। २। Hilum of Spleen.

सोऽयं सर्व्वतोऽपि उदर्य्याख्यकलयाऽच्छादितः प्लीहा तिसृभिः कलामय-बन्धनीभिर्यथास्थानमभिरक्ष्यते। तासामाद्या प्लीहामाशयिका[1] नाम बन्धनी आमाशयस्कन्धस्य प्लीहा प्रबन्धनी। द्वितीया प्राचीरबन्धनी[2] नाम, सा महाप्राचीरापार्श्वेण प्रबध्नाति प्लीहानम्। तृतीया वृक्कप्लीहिका[3] नाम, या प्लीह्नो वामवृक्केण प्रबन्धनी।

सिरा-धमनी-रसायन्यः पुनः प्लीह्नो यथास्थानं वर्णितपूर्व्वाः। नाड्यस्तु—भूम्ना मणिपूरचक्रतः सम्भूताः शाखाः, प्राणदाख्या नाडी च।

निर्म्माणं तावत् प्लीह्नः सूक्ष्मशारीरवर्णने कथयिष्यामः।

कार्य्यं पुनः प्लीह्नः शोणितस्य शोणकणिकानिर्म्माणं प्राधान्येन इति नव्याः, प्राञ्चस्तु रञ्जकपित्तनिर्म्माणमिति। तच्च रक्तस्य शोणिमप्रदं पित्तं प्लैहिकसिरामार्गेण प्रविशति प्रतिहारिणीं सिरामित्यवोचाम। नव्यास्तु प्लीह्नः सूक्ष्मतर आभ्यन्तरनिःस्रवोऽपि वर्त्तते—इत्याहुः। तद्विवरणं निःस्रोतस्कग्रन्थि-वर्णने वक्ष्यामः।

---

# चतुर्थोऽध्यायः।

अथातो मूत्रण-प्रजनन-यन्त्र[4] वर्णनीयमध्यायं व्याख्यास्यामः।

इह खलु मूत्रोत्पादन-निष्कासन-यन्त्राणि मूत्रणयन्त्राणीत्युच्यन्ते। शुक्रार्त्तव-गर्भोत्पादन-धारण-निरसन-यन्त्राणि तु प्रजनन-यन्त्राणीति। तेषां सम्बन्धोऽतिघनिष्ठः, परस्पर-सन्निकर्षात् परस्परापेक्षित्वाच्च।

तत्र वृक्कौ, गवीन्यौ, वस्तिर्मूत्रप्रसेकश्चेति मूत्रणयन्त्राणि। प्रजनन-यन्त्राणि तु पुंसां शिश्नो, वृषणौ, शुक्रवाहिन्यौ, शुक्रप्रपिके चेति। तत्पारि-पार्श्विकश्च पौरुषग्रन्थिः शिश्नमूलिकग्रन्थिद्वयसहितः। स्त्रीणां प्रजननयन्त्राणि पुनर्योनिर्गर्भाशयः, बीजकोषौ, बीजवाहिन्यौ चेति। तत्पारिपार्श्विकञ्च योनिद्वारिकं ग्रन्थिद्वयम्।

---

१। Gastro-splenic Ligament. २। Phreno-splenic Lig. ३। Lieno-renal Lig ४। Uro-genital Apparatus.

[ १६० चित्रम् ]

## वामवृक्कः ( अनुलम्बच्छेदेन दर्शितः ) ।




### अथ वृक्कौ गवीन्यौ च ।

**वृक्कौ**[१] नाम—महाशिम्बीवीजसमाकारे मुख्ये मूत्रप्रजनन-यन्त्रे स्त्रीपुंसयोस्तुल्ये ( १६० चित्रम् )। तयोरवस्थानमुदरगुहायां कटिप्रदेशे पृष्ठ-वंशमुभयत एकादश-द्वादशपर्शुकयोरुपकण्ठे। तत्र दक्षिणवृक्कस्य स्थितिर्वामा-वृक्कात् स्तोकेन निम्नतरा, दक्षिणपार्श्वे यकृदवस्थानात्। उदर्य्या कला च वृक्कयोः पुरःस्थैव ( न परितश्छादनी )।

एकैकस्य च वृक्कस्य धनुर्वक्रा बहिर्धारा कटिपार्श्वाभिमुखी, सा कटि-त्रिकोणाख्येन पेश्यवकाशेन स्पर्शनयोग्या ( दृश्यतां पेशीखण्डे ३१श पृष्ठम् )। अन्तर्धारा तु मध्ये खाताङ्किता पृष्ठवंशाभिमुखी च। तच्च खातं.. वृक्कद्वारं[२] नाम। तद्धि संश्रित्य प्रविशति अनुवृक्का नाम धमनी पञ्चधासु शाखासु

१। Kidneys. २। Hilum of Kidney.

# वृक्कद्वयस्य गवीन्योश्च व्यतिकरः ।

( उदरं विदार्य्य अन्त्राणामपसारणेन दर्शितः )




[ १। महाप्राचीरिका धमनी ( कर्त्तितमूला )। २। उत्तरान्त्रिकी धमनी। ३। अधरान्त्रिकी धमनी। ४। अनुवृक्के धमन्यौ। ५। अधरा महासिरा। ६। महाधमन्याश्चरमभागः। ७। अनुत्रिकिणी सिरा धमनी च। ८। वस्तिःशिरस्थं रज्जुकात्रयम्। ९। कटिप्रावरणी। १०। कटिचतुरस्रा पेशी। ११। कटिलम्बिनी दीर्घा पेशी। अधि० अधिवृक्कः। ]

विभक्ता, नाड्यश्च वृक्कान्तःप्रसर्पिण्यः। निर्गच्छन्ति च तेनैव द्वारेण वृक्कप्रभवाः सिरा रसायन्यो गवीनी च।

( व्यतिकरः ) उदरगुहायां पृष्ठवंशमुभयतो मेदःपुञ्जपरिवृतयोर्वृक्कयोरेष तावदाशयान्तरसम्पर्कः ( १६१ चित्रम् )। स्पृशति हि दक्षिणवृक्कस्य पुरोदेशो यकृद्दक्षिणपिण्डं, ग्रहण्या अग्रभागम्, आरोहि बृहदन्त्रञ्च। वामवृक्कस्य पुरोदेशस्तु प्लीहानम्, अग्न्याशयपुच्छं, स्तोकेन आमाशयम्, अवरोहि बृहदन्त्रञ्चेति। पश्चिमदेशस्तु उभयोरपि स्पृशत एकादशद्वादशाख्यं पर्शुकाद्वयं महाप्राचीराया मूलद्वयं, कटिलम्बिन्यौ पेश्यौ, कटिचतुरस्रे च।

ऊर्ध्वन्तु वृक्कयोः सम्बद्धौ **अधिवृक्कौ**[१] नाम निःस्रोतस्कौ ग्रन्थी त्रिकोणप्रायौ। तयोर्दक्षिणस्य यकृदधःप्रदेशेन, वामस्य च प्लीहाधःप्रदेशेन सम्पर्कः। तयोर्वर्णनं निःस्रोतस्कग्रन्थिवर्णने करिष्यामः।

निर्माणं पुनर्वृक्कयोरनुलम्बच्छेदेन स्फुटं दृश्यं स्थूलतः। सूक्ष्म-निर्माणन्तु अणुवीक्षणयन्त्रसहायेनैव चक्षुषा।

तत्र वृक्कच्छेदेन स्थूलतो लक्षणीयानि—वृक्कवस्तु, वृक्कद्वारं, वृक्कालिन्दा, वृक्ककोषश्चेति ( १६० चित्रम् )। तत्र—

( १ ) वृक्कवस्तु वृक्कस्य स्थूलोपादानभूतम्। तद् द्विविधम्,—वहिर्वस्तु अन्तर्वस्तु चेति। तत्र—( क ) वहिर्वस्तु[२] वृक्कस्य वाह्यपरिधिभागनिर्मापकम्। ( ख ) अन्तर्वस्तु[३] अभ्यन्तरतो रेखावल्यङ्कितं, वृक्कद्वाराभिमुखीभिः शिखरिकाभिरुप-लक्षितञ्च। तासाञ्च शिखरिकाणां स्थूलमूलानि वहिर्वस्तुप्रतिवद्धानि। अग्राणि तु पुष्पमुकुलाकाराणि वृक्कालिन्दाख्ये शून्यभागे दृश्यानि।

( २ ) वृक्कद्वारं[४] नाम वृक्कस्य अन्तःपरिधिस्थं खातं, यत्र संयुज्यते गवीनीमुखम्।

( ३ ) वृक्कालिन्दो[५] नाम—वृक्कद्वारे स्फारीभूयावस्थितं गवीनीमुखं वृक्ककोषाख्यस्थूलकलांशेन परिवृतम्। तत्र सञ्चीयन्ते वृक्कशिखरिकाग्रैः शनैः शनैर्निःस्रुता मूत्रविन्दवः। जाग्रति च तत्र वृक्कशिखरिकाणां दश द्वादश वा मुकुलाग्राणि, तानि कलामयीभिरालवालकाभिर्वेष्टितानि।

---

१। Adrenal or Suprarenal Bodies. २। Cortical Matter. ३। Medullary or Pyramidal matter ४। Hilum of Kidney. ५। Pelvis of Kidney.

[ १६२ चित्रम् ]

## वृक्कस्य सूक्ष्मनिर्माणम् ।

( अणुवीक्षणयन्त्रसहायेन चक्षुषा दृश्यम् )




[ ध १—उत्सिकाप्रवेशिनी 'गुच्छमुखी' धमनी । स १—उत्सिकाविनिर्गता सिरा । स० ज०—सिराजालकम् । स २—ऋजुका सिरा । ध २—ऋजुका धमनी । ध—स्थूलतरा धमनी । सि०—स्थूलतरा सिरा । ध० ज०—धमनीजालकम् । १—उत्सिकाविनिर्गतम् आन्त्राख्यमूत्रस्रोतसो मुखम् । २—तस्यैव आद्यकुण्डलिका । ३-४-५ तस्यैव पाशाकारो भागः । ६—७—तस्यैव शेषकुण्डलिका । ८—ऋजु मूत्रस्रोतः । ९—चरमं मूत्रस्रोतः । ]

(४) वृक्ककोषो[1] नाम—एकैकं वृक्कमभितः संलग्नं स्थूलकलामयं प्रावरणम्। स च वृक्कद्वारोपकण्ठे समूहितो वृक्कद्वारं प्रविश्य वृक्कालिन्दस्य परिसरं निर्मिमीते, ततश्च प्रत्यावृत्तो गवीनी-वेष्टनभूतया स्थूलकलयानुषज्यते।

सूक्ष्मनिर्म्माणन्तु वृक्कस्यातिविचित्रम्। वृक्कपरिधिस्थं हि बहिर्वस्तु मूत्रनिर्म्मापकैः सूक्ष्मैर्वर्त्तुलप्रायैर्यन्त्रकैरेव भूम्ना निर्म्मितम्। तेषां मूत्रोत्सिका[2] इति संज्ञा, उत्सवद् अजस्रं वारिप्रभवत्वात्। नवतिश्च तासामङ्गुलमात्रे प्रदेशे प्रायः। ता ऋजुकाख्यानां सूक्ष्मधमनीनामन्तरालेषु तत्सूक्ष्मतमशाखालम्बिताः फलगुच्छवद् अवतिष्ठन्ते।

एकैकाञ्च उत्सिकां प्रविशति एकैका सूक्ष्मा धमनी गुच्छमुखी। तां हि वर्त्तुलप्राये गुच्छे परिणतां प्रावृणोति विचित्रनिर्म्माणः पुटकाकारः कलाविशेषः। पुटकान्तश्च शनैः शनैः क्षरति अतिसूक्ष्मैः कणैः शोणितस्य त्याज्यभाग आप्यो मूत्रं नाम। तद् उत्सिकानिर्गतेन सूक्ष्मेण मूत्रवहस्रोतसा वृक्कान्तर्नीयते। उत्सिकाभ्यो निर्गतानि च मूत्रस्रोतांसि क्षुद्रान्त्रवत् कुण्डलीभूय केन्द्राभिमुखं प्रवर्त्तन्ते। प्रतिस्रोतश्च दृश्याश्चत्वारो भागाः—(१) आद्यकुण्डलिकाभागः[3]; (२) पाशभागः[4], (३) अन्त्यकुण्डलिकाभागः[5], (४) ऋजुभाग[6]श्चेति। परस्परपार्श्वस्थानि च तानि ऋजुस्रोतांसि वृक्कशिखरिकाणां निर्म्माणाय कल्पन्ते। तेषाञ्च मूत्रस्रोतसामन्त्रवत् प्रवर्त्तनाद् आन्त्राणीति[7] संज्ञा प्राचाम्। अत एव आथर्वणं सूक्तम्—

"यदान्त्रेषु गवीन्यो र्यद्वस्तावधि संश्रितम्।
एवा ते मूत्रं मुच्यतां बहिर्बालिति सर्वकम्॥"

(अथर्व वेद १म काण्डे प्रथमानुवाके ३य सूत्रम्)

एकैकस्याश्च उत्सिकाया विनिवर्त्तते मूत्रभागोत्सर्गावशिष्टं रक्तं सूक्ष्मसिरापथेन। ताश्च सूक्ष्मसिराः परस्परमिलिता धमनीसहचरीः सिराः प्रविशन्ति। ता अपि मूत्रवहस्रोतसां केन्द्राभिमुखानामनुवर्त्तिन्यः क्रमात् सङ्घीभूय वृक्कप्रभवासु स्थूलसिरासु परिणमन्ति।

---

१। Renal Capsule. २। Bowman's Capsules. ३। First Convoluted Tubule. ४। Henle's Loop. ५। Second Convoluted Tubule. ६। Straight Tubule. ७। अन्त्रवत् प्रसर्पन्तीति आन्त्राणि। सादृश्ये संज्ञायामण्।

इदञ्चात्र विशेषेण लक्ष्यम्—अनुवृक्कधमन्या एकैका चरमाणुशाखा वृक्कबहिर्वस्तुनि सरलद्रुमशाखेव फलवती उभयतोऽवस्थिता उत्सिकाः धारयति पुष्णाति च तत्प्रविष्टैः शाखाप्रतानैः। ता ऋजुका नाम धमन्यः[१] तत्पार्श्ववर्त्तिनी च तादृश्येव ऋजुका नाम सिरा[२] उत्सिकाभ्यो विनिर्गतानां सिराणां संग्राहिणी।

आन्त्राख्याणां स्रोतसां संनिवेशस्तु उत्सिकाराजीनामन्तरालेषु वृक्कान्तर्वस्तुनि दृश्यः। तासां क्रमशः ऋजुस्थूलीभूतानां मुखानि शिखरिकाग्रेषु उन्मुच्यन्ते।

**गवीन्यौ**[३] नाम—वृक्काभ्यां विनिर्गते अधोमुखे नलिके। ते वृक्काद्विनिर्गतस्य मूत्रस्य मूत्राशयप्राप्तिसाधने। तयोरेकैकस्या वृक्कालिन्दसंलग्नं मुखं वक्रीभूतधत्तूरपुष्पसदृशं, पञ्चष-चञ्चुभिरुपलक्षितञ्च। ते तिर्य्यगधो गत्वा क्रमेण सङ्कुचितविवरे अभिवस्ति प्रसर्पतः। एकैका च गवीनी वृक्कालिन्दाद् आरभ्य वस्तिपार्श्वं यावत् प्रायेण विंशत्यङ्गुलदीर्घा हंसपक्षनलिकापरिणाहा आयतोदरया ग्रीवया उपलक्ष्यते। ततः तिरश्चीनगत्या पृष्ठवंशपुरस्ताद् महासिराधमन्यावुल्लंघ्य श्रोणिगुहायामवतरति। उन्मुच्यते च तन्मुखं मूत्राशयस्य पश्चादेकैकस्मिन् पार्श्वे वस्त्यन्तः। तस्य च गवीनीद्वार[४]मिति संज्ञा।

निर्म्माणञ्च गवीन्या अनुदैर्घ्यमवस्थितैः स्वतन्त्रपेशीतन्तुभिरन्तर्वहिश्च कलावृतैः। तत्र बाह्या कला स्थूला वृक्ककोषेण अनुषङ्गिणी।

गवीनीनिर्म्माणवैशेष्याच्च वृक्कालिन्दे सञ्चिता मूत्रक्षारजाः सिकताः गुडिकाकारेण कदाचिद् निरुन्धन्ति गवीनीमार्गम्। तेनाश्मरीशूलाख्याः[५] तीव्ररुजः प्रादुर्भवन्ति, विनश्यन्ति च ता गुडिकावतरणेन।

पोषणं पुनर्वृक्कयोः गवीन्योश्च इत्थं संपद्यते महाधमन्या उदर्याख्यशाखाभिः। अनुवृक्के नाम धमन्यौ महाधमन्याः पार्श्वाभ्यां संभूय वृक्कौ प्रविशतः वृक्कद्वारमाश्रित्य। तयोरेकैका पञ्चषासु शाखासु विभज्यमाना प्रतनुभिः शाखाभिः तत्पार्श्ववर्तिनीं गवीनीम् अधिवृक्कञ्च तर्पयति। अवशिष्टाश्च शाखा वृक्कान्तःप्रविष्टा वृक्कान्तर्वस्तुनि वृक्कपोषणीषु सूक्ष्मधमनीषु परिणमन्ति।

---

१। Arteræ Rectæ. २। Venæ Rectæ. ३। Ureters. ४। Orifices of Ureters. ५। Renal Colic. उक्तञ्च—"मूत्रस्रोतोनिरस्ताभिः प्रशमं याति वेदना। यावदस्य पुनर्नैति गुडिका स्रोतसो मुखम्" इति—(सुश्रुत, निदान ८ अध्यायः)।

तासां सूक्ष्मतमाश्चरमशाखाः ऋजुका नाम धमन्यो भवन्ति। ता गुच्छमुखीभिर्धमनीभिरूत्सिकास्तपयन्तीति व्याख्यातपूर्वम्। अधिवृक्कयोस्तर्पणन्तु उत्तरमध्यमाधराभिः अधिवृक्किणीसंज्ञाभिर्धमनीभिः।

सिराः पुनर्धमनीनामनुसारिण्यः प्रायः। विशेषतस्तु उत्सिकाभ्यो मूत्रक्षरणावशिष्टं रक्तं वहन्त्यः सूक्ष्मसिराजालेषु परिणम्य पुनः ऋजुसिरासु प्ररिणमन्तीति विशेषः।

गवीनीपोषण्यो धमन्यस्तु अनुवृक्काभ्याम् अनुवृषणिकाभ्यां च सम्भूताः, वस्तिगाख्यधमनीभ्यश्च।

## अथ वस्तिः।

**वस्तिर्मूत्राशयो**[1] **वा** नाम—क्षुद्रालावुफलसमाकारो मूत्राधारो वस्तिगुहायां भगास्थिसन्धिपृष्ठतोऽवस्थितः, स पुंसो गुदनलकस्य पुरोवर्त्ती, स्त्रियास्तु योनेर्गर्भाशयस्य च। आच्छाद्यते चासौ ऊर्द्ध्वं पश्चिमतश्च उदर्य्याख्यया कलया। सम्बध्यते च वस्तेरूर्द्ध्वं तनुशिखराकारा कलामयी प्रबन्धनी आनाभिप्रसृता, सा वस्तिशीर्षिका नाम। सेयं प्राचां "वस्तिशिरः"संज्ञा। तदुभयोर्धारयोश्च द्वश्ये शुष्कसंवाहिन्याख्यधमन्योरवशेषभूते वन्धनिके, मध्यरेखायाञ्च स्नायुमयी वन्धनी। तासां वस्तिरज्जुका[2] इति संज्ञा।

अस्ति च वस्तिद्वारं संवेष्ट्यावस्थितो ग्रन्थिः पौरुषग्रन्थिर्नाम। वस्तिपृष्ठतश्च एकैकस्मिन् पार्श्वे तिर्य्यगवस्थिते शुक्रवहे शुक्रवाहिनी शुक्रप्रपिका च, ते वस्तिद्वारोपकण्ठे परस्परमिलितमूले, तच्च मिलितमूलं शुक्रप्रसेको नाम। तान्येतानि प्रजननयन्त्रवर्णने वर्णयिष्यन्ते।

निर्म्माणं पुनर्वस्तेरामाशयवत् त्रिधा सन्निविष्टैः स्वतन्त्रमांसतन्तुभिः। तैर्निपीड्यते मूत्रपूर्णो वस्तिर्मूत्रनिष्कासनाय। अभ्यन्तरतश्च वस्तेर्द्दृश्या वलिराजिभिरुपलक्षिता कलामयी वृतिर्वस्त्यन्तरीया नाम। त्रिकोणाकारश्च तत्र प्रदेशो वस्त्यन्तरीयं त्रिकोणं[3] नाम। तस्योर्द्ध्वभागे उभयोः कोणयोर्द्दृश्ये गवीनीद्वारे, अधःकोणे तु मूत्रप्रसेकानुबन्धि मूत्रद्वारं क्षुद्रकलायिकाकारेणोत्सेधेनोपलक्षितम्। सेयं कलायिका मूत्रार्गलिका नाम, या अर्गलमिव मूत्रद्वारं निरुणद्धि, उत्थाप्यते च मूत्रणकाले पायुधारिण्याः पेश्याः सङ्कोचवशादिति केचित्।

---

१। Bladder. २। Ligaments of the bladder. ३। Trigone.

[ १६३ चित्रम् ] **वस्तेरभ्यन्तरम् ।** ( वस्तिं विदार्य्य दर्शितम् )




**मूत्रप्रसेको**[१] नाम—मूत्रवाहिनी कलामयी नलिका वितस्तिप्रमाणा, या पुंसो वस्तिद्वारात् शिश्नाग्रपर्य्यन्तं शिश्नाधस्तात् मध्यरेखानुक्रमेण प्रसृता। तस्यास्त्रयो भागाः—आद्यो वस्तिद्वारिकः,[२] मध्यो मूलाधारिकः,[३] शेषः शैश्निकश्चेति[४]। तत्राद्यो द्व्यङ्गुलमात्रो वस्तिद्वारानुषङ्गी पौरुषग्रन्थिं मध्ये निर्भिद्य प्रसृतः। तद्विदारणेन उभयतो द्वश्ये शुक्रप्रसेकयोश्छिद्रे। मध्यभागो मूलाधारदेशे वर्त्तमानः प्रतनुकलामयोऽङ्गुलमात्रः, स क्वचित् कलामयभाग इत्यपि संज्ञायते। तं संवेष्ट्य स्थिता मूत्रद्वारसंकोचनी पेशी। तदावरणी च औपस्थिकत्रिकोणच्छादनी स्थूलकला त्रिकोण प्रावरणी नाम। अथ चरमः शैश्निकभागः शिश्नाधः संलग्नो दीर्घतमः। स आदावन्ते च किञ्चिदायतोदरो नवाङ्गुलप्रमाणश्च प्रायः। तस्य आदिमभाग आयतो वर्त्तुलप्रायः शिश्नमूलस्थः। तद्बहिरुभयतो द्वश्यौ मुद्गनिभौ ग्रन्थी शिश्नमूलिकौ नाम, तत्स्रोतसी च मूत्रमार्गान्तः।

१। Urethra. २। Prostatic portion (of Urethra.) ३। Membranous portion (Do). ४। Penile portion (Do).

स्त्रीणान्तु मूत्रप्रसेको द्व्यङ्गुलमात्रो योनेः पुरःप्राचीरे सम्बद्धः शरेषिकापरिणाहः । तस्य द्वारं योनिद्वारस्योर्द्ध्वं पुरस्ताच्च भगशिश्निकाधो दृश्यम् ।

अथ प्रजननयन्त्राणि ।

इह खलु सर्वेषां प्रजननयन्त्राणां मूलं गर्भोत्पादनसाधनं ग्रन्थिद्वयम् । तत् पुंसो बहिःस्थं वृषणसंज्ञं शुक्रप्रभवम्, तत्स्रोतसी च शुक्रवाहिन्यौ नाम । स्त्रियास्तु ग्रन्थिद्वय-मन्तर्गतं गर्भाशयोभयपार्श्वस्थं बीजकोषसंज्ञं बीजार्त्तवप्रभवम्, तत्स्रोतसी च गर्भाशय-

[ १६४ चित्रम् ] पौरुषग्रन्थिसहितः शिश्नः ( निम्नदेशादवलोकितः )



पार्श्वयोः प्रविबद्धे । गर्भाधानसाधनन्तु पुंसां शेफः, स्त्रीणां योनिः । गर्भाधिकरणं पुनर्गर्भाशयः । तदेतद्द्वीजरूपं प्रजननयन्त्रवर्णनं, विस्तरोऽत ऊर्द्ध्वम् ।

अथ पुंसः प्रजननयन्त्राणि ।

शिश्नो, वृषणौ, शुक्रवाहिन्यौ, शुक्रप्रपिके, पौरुषग्रन्थिः, शिश्नमूलपार्श्विकौ ग्रन्थी चेति पुंसां प्रजननयन्त्राणि । तत्र—

**शिश्नो**[1] नाम—मेढ्रमेहनादिपर्य्यायं पुंसो मैथुनसाधनं यन्त्रं, मूत्रप्रसेकधरम् ।

( १६५ चित्रम् । )

शिश्ननिर्माणम् ।




शिश्नपार्श्विक्योः पेश्योर्मूलद्वयम्
( व —मूत्रप्रसेकधराया वर्तुलभागः )

१ । Penis.

तत् तिसृभिः पेशीभिर्दीर्घ दण्डिकाकाराभिर्निर्म्मितम्, प्रहृष्टदशायां त्रिधारदण्डप्रायम्। ताश्च पेश्य उत्तेजनवशात् प्रहर्षणशीलाः दृढस्नायुजालेन परस्परं निबद्धाः।

तत्र शिश्नपार्श्वयोः परस्परसंसक्ते प्राधान्येन शिश्ननिर्म्मापिके स्थूलमांसले पेश्यौ शिश्नपार्श्विके[1] नाम (१६५ चित्रम्)। तयोर्मूलद्वयं भगास्थिसन्धानमुभयतः सम्बद्धम्। पेश्योरधस्ताच्च मध्यरेखायां संसक्ता मृणालसंस्थानाऽपरा तन्वी पेशी मूत्रप्रसेकधरा नाम। सा मध्ये मूत्रप्रसेकाख्यं मूत्रमार्गं धारयति।

तस्याश्च मूत्रप्रसेकधराख्यपेश्याः पश्चिमभागो वर्त्तुलप्रायो मूलाधारदेशस्थः। तं निर्भिद्य प्रविष्टो मूत्रप्रसेकः। अथास्याः पेश्याश्छत्राकसदृशोऽग्रभागः[3] शिश्नमुण्डं[4] शिश्नमणिर्वा नाम, स शिश्नपार्श्विकाख्य पेश्योः पुरःप्रान्तच्छादनः।

[ १६६ चित्रम् ]

## शिश्ननिर्माणम्।

( अनुप्रस्थच्छेदेन दर्शितम् )




[ चित्रव्याख्या—१। शिश्नपृष्ठिके सिराधमन्यौ। २। कामसंवेदिन्यौ नाड्यौ। ३-४। त्वक्, प्रावरणी च ५। शिश्नपार्श्विकाख्यं पेशीद्वयम्। ६। पेशीद्वयान्तराला स्नायुप्राचीरिका। ७। मूत्रप्रसेकधरा पेशी ]

तदेतत् शिश्नमुण्डं तनुमृदुलारक्तकलावृतं समन्तादुच्छ्रितया चक्रनेमितुल्यया धारया उपलक्ष्यते। तत्र च दृश्या गौरसर्षपाभाः पूतिरसस्राविण्यो ग्रन्थयः। सेयं धारा शिश्ननेमिका[5] नाम। पश्चिमतश्च धाराया दृश्यं शिश्नमुण्डवेष्टनं खातं शिश्नकण्ठिका[6] नाम। तत्परितः स्थिता शिथिलकोमला शिश्नावरणी त्वक् शिश्नच्छदा[7] नाम, सा अभ्यन्तरतः कलावृता स्वभावतः शिश्नमुण्डमावृणोति, प्रकाशयति च तत् पश्चादाकृष्टा।

१। Corpora Cavernosa. २। Corpora Spongiosa. ३। छत्राकं शिलीन्ध्रम् (mushroom). ४। Glans Penis. ५। Corona glandis. ६। Cervix of glans. ७। Prepuce.

सेयमशिथिलीभूता निरुद्धप्रकशं[१] नाम रोगं जनयति शिश्नमुण्डस्य प्रकाशं निरुद्धय। सैव परावृत्य दृढीभूता शिश्नमुण्डस्य प्रावरणाऽसमर्था अवपाटिकाख्यं[२] रोगम्।

अधश्च शिश्नमुण्डस्य मध्यरेखायां दृश्यां शिश्नच्छदायाः प्रवन्धनस्थानं शिश्नसेवनी[३] नाम। सा शिश्नमुण्डं द्विदलमिव विभजते पश्चात्। तत्पुरतश्च दृश्यं बाह्यं मूत्रप्रसेकद्वारम्[४], तत् शिश्नमुण्डाभ्यन्तरे किञ्चिदायतं बहिश्च संकुचितम्।

उभयतश्च शिश्नमूलं दृश्या उपस्थसंकोचनी संज्ञा पेशी मध्यरेखायां सेवन्या योजिता। अस्ति चापरा पेशी एकैकत शिश्नमूले संयुक्ता शिश्नप्रहर्षणी नाम। सर्वाश्च ताः प्रावृणोति त्रिकोणप्रावरणी नाम दृढकला। ताः सर्वा अप्युक्तपूर्वाः। उपरिष्टाच्च शिश्नपृष्ठे दृश्या मध्ये शिश्नसिरा, उभयतश्च शिश्नधमन्यौ, तदुभयतश्च नाड्यौ कामसंवेदन्यौ नाम।

अस्ति च स्त्रीपुंसोः शिश्नभगोपरिष्टाद् मृदुमेदुरः कोमलत्वगावृत उत्सेधः, स यौवनारम्भात्प्रभृति मृदुरोमजालैराच्छाद्यते। तस्य कामपीठं भगपीठमिति[५] वा संज्ञा।

### अथ वृषणौ।

**अण्डौ, मुष्कौ, वृषणौ**[६] वा नाम—पुंसां शुक्रजननौ ग्रन्थी। तौ वृषणबन्धनीभ्यामवलम्बितौ वृषणकोषान्तः। गर्भस्थ-शिशोस्तु तावेव वस्तिगुहाभ्यन्तरमधितिष्ठत आ सप्तममासात्। ततः क्रमाद् वंक्षणसुरङ्गापथेनावतीर्णौ पुरःस्थया त्वचा प्रावरण्यादिसहितयाच्छादितौ वृषण कोषेण धार्य्येते। क्वचिदनवतीर्णौ तु तौ 'गूढाण्ड' पुमांसं जनयतः।

एवञ्च वृषणवर्णने परिज्ञेयाः—वृषणकोषः, वृषणग्रन्थी, वृषणवन्धन्यौ शुक्रवाहिनीधरे। तत्र—

**वृषणकोषः अण्डकोषो**[७] **वा**—नाम यो शिथिलचर्म्मावृतस्थूलकलामय—वाह्यपुटकः, सबन्धनीकवृषणद्वयस्य सन्धारणः। तत्र चर्म्मपुटकमात्रस्य चर्म्मकोष इति संज्ञा। आभ्यन्तर-स्थूलकलापुटकस्य तु दृढ़प्रावरणीमयत्वात् प्रावरणकोष इति। स च मध्यस्थेन कलाप्राचीरेण भागद्वये विभक्तः। एकैकस्मिंश्च भागे दृश्य एकैको वृषणः, आम्रशलाटु-सदृशः।

---

१। Phimosis. २। Para-phimosis. ३। Frœnum Preputii. ४। External Urinary Meatus. ५। Mons Veneris. ६। Testes or Testicles. ७। Scrotum.

अस्ति च प्रतिवृषणं तदाच्छादनं तनुकलामयमपरमपि पुटकम् । तदेकेन स्तरेण वृषणग्रन्थिमावृत्य अपरेण स्तरेण तद्वारणं कोषं निर्म्मिमीते । तस्य अण्डधरपुटकमिति[1] संज्ञा । स च वृषणावतरणकाले वृषणेण सह पुरस्तान्नीत उदर्य्याकलांश एव पृथग्भूतइति सूक्ष्मदृशः । तस्मिंश्च कोषे स्तरद्वयाभ्यन्तः सञ्चीयमानं जलं, प्राचां मूत्रवृद्धिं[2] नाम उदकवृद्धिं जनयति ।

दृश्यन्ते च अण्डधरपुटकस्य बहिःस्तरसंलग्नानि कानिचित् कलान्तर्धृतानि पेशीसूत्राण्यपि, तानि अण्डावतरणकालेऽवतीर्णानि मध्यमायाः उदरच्छदाख्य-पेश्याः कतिचित् सूत्राणीति गर्भव्याकरणाभिज्ञाः । सा च फलकोषकर्षणी नाम तनुसूत्रा पेशी वर्णितपूर्वा । सा च कलायुता वृषणस्य पेशीमयः कोषः[3] इति केचित् ।

[ १६७ चित्रम् ]

## वृषणग्रन्थिर्वृषणबन्धनी-सहितः ।

( वृषणकोषापसारणेन आभ्यन्तरवृषणवृतीनां विदारणेन च प्रदर्शितः )




[अधि०(आ) (अ) अधिवृषणिकाया आद्यन्तभागौ । १।२—वृषणाधिवृषणस्थं स्वाभाविकविन्दुचि द्वयम्]

**वृषणग्रन्थी**[4] तावद् आम्रशलाटुनिभौ खगाण्डसंस्थानौ वा ग्रन्थी वृषणबन्धनीभ्यां सह अण्डधरपुटकान्तर्दृश्यौ ( १६७ चित्रम् ) । तयोरण्डाविति आण्डाविति वा संज्ञामाचक्षते आथर्वणाः ।

१ । Tunica Vaginalis. २ । Hydrocele. ३ । Cremasteric Fascia. ४ । Testes.

अस्ति च एकैकस्य वृषणग्रन्थेः पार्श्वतः संलग्न अर्द्धचन्द्राभो योऽवयवः अधिवृषणिका[1] नाम। तं प्रविशन्ति सूक्ष्माणि शुक्रवहस्रोतांसि अण्डशिखराद् विनिर्गतानि। सेयमधिवृषणिका स्वल्पकायाऽपि प्रत्युत अतिदीर्घा सूक्ष्मा शुक्रनलिकैव पुनः पुनर्द्विगुणीभूय अण्डपार्श्वेऽवस्थिता। सावधानमाकृष्य ऋजूकृता तु सा प्रायेण त्रयोदशहस्तदीर्घा भवतीति हन्त विचित्रमस्या निर्म्माणम्।

सेयमधिवृषणिका उपरिष्टात् स्थूलग्रन्थिनिभा अधःप्रान्ते च तनूकृता वृषणग्रन्थिं क्रोडीकृत्य अवतिष्ठते। ततश्च क्रमात् लताशुङ्गावदावर्त्तवती सा तनुनलिकारूपेण पार्श्वतः समुत्थिता। सेयं स्थूलीभूता शुक्रवाहिनी संज्ञा वृषणबन्धनीमाश्रित्य ऊर्द्ध्वंगता वंक्षणसुरङ्गां प्रविशति।

सोऽयं वृषणग्रन्थिरधिवृषणिकासहितः जीवच्छरीरेऽपि स्पर्शनयोग्यः।

[ १६८ चित्रम् ]

## वृषणग्रन्थेः सूक्ष्मनिर्म्माणम्।




[ पु १—अण्डधर पुटकस्य परिसरीय भागः। पु – २ तस्यैव आशयिकभागः। पु – ३ स्तरद्वयस्य अवकाशः। शु० शु० शुक्रनिर्मापका ग्रन्थयः। ]

---

१। Epidydimus.

पूयमेहादिरोगे तु प्रायेण व्रणशोथवानसौ भवति, कालेन कठिनीभूतश्च । तदा वीर्य्य-स्रोतसामवरोधात् क्लैब्य-सम्भवः ।

सूक्ष्मनिर्म्माणं पुनर्वृषणस्य अनुलम्बच्छेदेन स्फुटं दृश्यते स्थूलतः, स्फुटतरञ्च 'अणुवीक्षणयन्त्र'-सहायेन चक्षुषा(१६८ चित्रम्)। तत्र अण्डधर पुटकान्तर्दृश्यो ग्रन्थिच्छादनः तनुकलामयः कोषोऽपरः अण्डच्छदो[१] नाम । तच्छाखाभूताश्च स्नायुपत्रिका-स्तनुकुशपत्र-संस्थाना दश द्वादश वा ग्रन्थिवस्तुनोऽन्तःप्रविश्य तावतीषु प्रकोष्ठिकासु विभजन्ते एकैक-मण्डग्रन्थिम् । एकैकस्याञ्च प्रकोष्ठिकायां दृश्यं शुक्रनिर्म्मापकेण ग्रन्थिवस्तुना परिवृत-मेकैकं सूक्ष्मं शुक्रस्रोतः मूले कुण्डलीभूतम् । एकैकस्याञ्च प्रकोष्ठिकायां दृश्यं ग्रन्थि-वस्तुवेष्टनं सूक्ष्मं सिराधमनीजालकं, ततो नियतं स्रवति लसीका शुक्रनिर्माणाय । इत्थञ्च ग्रन्थिवस्तुना निर्म्मितं शुक्रं शुक्रवहस्रोतोभिर्नीयमानं कतिचित् प्रधानस्रोतांसि संश्रित्य अण्डशिरसि अधिवृषणिकामभिप्रपद्यते । ततश्च तदन्तः क्रमादुपचीयमानमूर्द्ध्वं नीयते शुक्रवाहिन्येति संक्षेपतः शुक्रनिर्म्माणं व्याख्यातम् । अतएव प्राञ्चः—"शुक्रवहानां स्रोतसां वृषणौ मूल" मिति । शुक्रन्तु सूक्ष्म शुक्रकीटाणुभूयिष्ठमिति सूक्ष्मशारीरवर्णने व्याख्येयम् ।

## अथ शुक्रवाहिन्यौ ।

**शुक्रवाहिन्यौ**[२] नाम—अधिवृषणिकाभ्यां विनिर्गते कपोतपक्षनलिकाकारे स्नायुभूयिष्ठमांसतन्तुनिर्मिते नलिके(१६६ चित्रम्),वृषणविनिर्गतस्य शुक्रस्य अभिवस्तिद्वारं वहनाय । ते वृषणबन्धनीभ्यामूर्द्ध्वं गच्छतोऽनुवृषणिकाख्यसिराजालवेष्टिते, तत्संज्ञक-धमनीसहचर्य्यौ नाड़ीजालपरिवृते च । तयोर्गतिः सरलोर्द्ध्वमुखी आवंक्षणसुरङ्गाद्वारम्, वंक्षणसुरङ्गायान्तु बहिस्तिरश्चीना । ततः श्रोणिगुहान्तः प्रविष्टे ते द्विगुणीभूय तिर्य्यगधो गत्वा वस्तिपृष्ठाश्रयेण वस्तिद्वारमुभयतस्तिष्ठतः । शुक्रप्रपिके च तत्पार्श्वयोर्दृश्ये गवोनी-सहचर्य्यौ । एकैकतश्च वस्तिद्वारसमीपे शुक्रप्रपिका-शुक्रवाहिन्योः सम्मिलनात् प्रभवति शुक्रप्रसेकः । तद्द्वारञ्च मूत्रप्रसेकान्तर्दृश्यम् ।

## शुक्रप्रपिके ।

**शुक्रप्रपिके**[३] नाम—मधुचक्र निर्म्माणे स्नायुतन्तुभूयिष्ठे शुक्राधारिके(१६६ चित्रम्)। ते प्रायश्चतुरङ्गुलप्रमाणदैर्घ्ये कनिष्ठिकापरिणाहे तिर्य्यग्वस्तिपृष्ठमधितिष्ठतः शुक्रवाहिन्योः सहचर्य्यौ । तयोः सञ्चीयते शुक्रं ब्रह्मचर्य्यकाले । एकैकस्याश्च शुक्रप्रपायाः तनूकृत-मधोमुखं शुक्रवाहिन्या मुखेन सम्बद्धम् । उभयोश्च मुखयोर्मिलितयोः साधारणं

१ । Tunica Albuginea. २ । Ducta Deferentia. ३ । Vesiculae Seminales.

( १६६ चित्रम् । )

## शुक्रवाहिन्यौ शुक्रप्रपिके पौरुषग्रन्थिश्च ।

( वस्तिपृष्ठतो दृष्टाः )




स्रोतो वस्तिद्वारपार्श्वस्थं **शुक्रप्रसेको**[1] नाम। तस्य सूक्ष्मं द्वारं मूत्रप्रसेकस्य मूलभागान्तर्दृश्यमेकैकस्मिन् पार्श्वे ।

प्राञ्चोऽप्याहुः—"द्व्यङ्गुले दक्षिणे वामे[2] वस्तिद्वारस्य चाप्यधः ।
मूत्रस्रोतःपथाच्छुक्रं पुरुषस्यः प्रवर्त्तते ।" इति (सु० शा० अ० ४)

### पौरुषग्रन्थिः ।

**पौरुषग्रन्थि**[3]-र्नाम—वस्तिद्वारं मूत्रप्रसेकस्याद्यभागञ्च संवेष्ट्य स्थितोऽक्षोट-फलाकारो ग्रन्थिः (१६६ चित्रम्)। स वहिः स्नायुमयकोषपरिवृतोऽभ्यन्तरतश्च मधुचक्र-संस्थानः। तस्मात् स्रवति पिच्छिल उपस्नेहः कामोद्रेकादौ। तस्य दश द्वादश वा (क्वचिद् विंशतिर्वा) स्रोतांसि मूत्रप्रसेकान्तरुन्मुच्यन्ते सुसूक्ष्मैश्छिद्रैः।

वार्द्धके तु स्नायुतन्तुभूयिष्ठामभिवृद्धिं गतोऽसौ कदाचिद् मूत्रमार्गं संकोचयति।

---

१। Ejaculatory Duct. २। "द्व्यङ्गुलि दक्षिणे पार्श्वे"—इति पाठस्तु लिपिकरप्रमादकृतः प्रतिभाति।
३। Prostate gland. सौश्रुतीयं संज्ञा।

**शिश्नमूलपार्श्विके**[१] नाम—मुद्गसंस्थानौ ग्रन्थी पुनर्मूत्रप्रसेकस्य मध्यमभागमुभयतो बहिर्वर्त्तेते (१६४ चित्रम्)। तयोः स्रोतसी तदन्तर्द्दृश्ये। ताभ्यां निःस्रुत उपस्नेहो मूत्रप्रसेकं तर्पयतीति केचित्।

अथ स्त्रीणां प्रजनन-यन्त्राणि ।

भगं, गर्भाशयो, बीजाधारौ, बीजवाहिन्यौ चेति स्त्रीणां प्रजननयन्त्राणि। तत्र—

**भगं, योनिर्वा**[२] नाम—स्त्रीणां बहिरवयवैः सहितोऽपत्यपथः। तस्य बहिर्भगम्, अन्तर्भगश्चेति द्वेधा विभागो वर्णनासौकर्य्याय। (भगपीठन्तु भगोपरिष्टाद् वर्त्तमानो मृदुमेदुर उत्सेधो वर्णितपूर्वः।) तत्र—

(१७० चित्रम्।)

बहिर्भगम्।




(क—कुमारीच्छदः। ख—भगाञ्जलिका। ग—मूलपीठम्)

१। Cowper's glands. २। Female Genital Apparatus. भगशब्दः क्वचित् सामान्यतो जननेन्द्रियवाची च।

अथ बहिर्भगम्।

**बहिर्भगं**[1] नाम—भगस्य बाह्यः प्रदेशो गवाक्षाकारः सप्तावयवः ( १७० चित्रम् )। ते चावयवाः—बृहद्भगोष्ठद्वयं, लघुभगोष्ठद्वयं, भगशिश्निका, भगालिन्दो, मूत्रप्रसेकद्वारं, भगद्वारं, भगाञ्जलिका चेति। मध्ये च भगद्वार-पायुद्वारयोः सेवन्यंकितो भागो मूलाधारपीठं मूलपीठं वा नाम। तत्र—

(१) **बृहद्भगोष्ठद्वयं**[2] नाम—भगपीठाद् मूलपीठं यावदुभयतोऽवस्थितं किञ्चित्स्थूलकोमलमोष्ठसदृशं भगावयवद्वयम् ( १७० चित्रम् )। तद् बहिर्लोमशतनुत्वगावृतमन्तर्मेदुरं स्नायुसूत्रमयप्रावरणेन दृढ़ीकृतञ्च। यस्तावत्पुंसामण्डकोषः स एवाण्डवर्जितो द्विधाभिन्नो बृहद्भगोष्ठद्वये परिणत इत्याहुः सूक्ष्मदृशः।

तच्च भगोष्ठद्वयमुपरिष्टाद् भगशिश्निकापार्श्वयोर्मिलितम्, अधस्ताच्च भगाञ्जलिकायाम्। तदन्तश्च दृश्यानि सूक्ष्माणि सिराधमनीजालकानि कामसंवेदनीभिर्नाड़ीभिः पूतिग्रन्थिभिश्च सहितानि।

(२) **लघुभगोष्ठद्वयं**[3] नाम—तनु स्वल्पावयवमोष्ठद्वयं बृहद्भगोष्ठयोरन्तर्निगूढमेकैकतो द्व्यङ्गुलमात्रायतम् (१७० चित्रम्)। तद् मूत्रप्रसेकद्वारस्य योनिद्वारस्य च पार्श्वयोः स्तोकेन अवतिष्ठते। अनुविद्धञ्च तद् विशेषेण पूतिग्रन्थिस्रोतोभिः।

(३) **भगशिश्निका**[4] नाम—भगपीठाधो मध्यरेखायां त्वगन्तर्निगूढो वटप्ररोहवद् नीरन्ध्रोऽवयवः ( १७० चित्रम् )। तस्याग्रभागमात्रं शिश्नमुण्डवत् लघुभगोष्ठसन्धाने दृश्यम्। छाद्यते च तत् स्तोकेन तन्व्या शिश्निकाच्छदाख्यया त्वचा।

सेयं भगशिश्निका तनूकृतः शिश्नावशेष इति गर्भव्याकरणविदः।

(४) **भगालिन्दो**[5] नाम—लघुभगोष्ठयोरन्तराले वर्त्तमानस्त्रिकोणाकारः प्रदेशो योनिद्वारोपरिष्टात् ( १७० चित्रम् )। तन्मध्ये दृश्यं काकपक्षनलिकाप्रवेशार्हं छिद्रं मूत्रप्रसेकद्वारं नाम, स्त्रीणां हि मूत्रप्रसेको द्व्यङ्गुलमात्रदीर्घ इत्यवोचाम।

(५) **भगद्वारं योनिद्वारं**[6] **वा** नाम—कुक्कुटाण्डायतनं द्वारं लघुभगोष्ठयोरन्तराले मूत्रप्रसेक-द्वारस्याधस्तादवस्थितम् ( १७० चित्रम् )। तद् योनिसंकोचन्याख्यपेशीद्वयेनोपलक्षितम्। अभिरक्षितञ्च प्रायो निम्नार्द्धमात्रे कुमारीषु कुमारीच्छदाख्यया जवनिकया[7]। सेयं स्थूलकला यौवने कन्दर्पलीलया क्रमशः शीर्य्यति।

---

१। External genital organs. २। Labia Majora. ३। Labia Minora.
४। Clitoris. ५। Vestibule. ६। Vaginal Orifice. ७। Hymen.

कदाचित्तु साकल्येन योनिद्वारं प्रावृण्वती मासिकमार्त्तवं निरुणद्धि। तदा दारुणं शूलमार्त्तवसञ्चयश्च योनिमार्गे भूयान् ।

उभयतश्च योनिद्वारमभ्यन्तरतो दृश्यं कलान्त-र्निगूढं ग्रन्थिद्वयं योनिद्वारिकं[1] नाम। तत् स्फुटाभ्यां सूक्ष्मस्रोतोभ्यां पिच्छिलमुपस्नेहं स्रवति। स च उपस्नेहः स्त्रीशुक्रमित्याचक्षते केचन साम्प्रदायिकाः ।

(७) **भगाञ्जलिका**[2] नाम—भगद्वारस्य अधोधारायाम् अञ्जलिवत् स्थितो भगावयवः कलामयः। सेयं मूलाधारपीठस्य पुरःसीमस्था। सा प्रायः प्रसवकालेऽवदीर्य्यते सह मूलपीठेन सेवनीप्रदेशे। तन्मूलावदरणमित्याहुः प्रसूतितन्त्रज्ञाः। तेन च सम्भवति योनिव्यापत्कष्टकरी। तदेतत् सप्तावयवं बहिर्भगं व्याख्यातम् ।

अथान्तर्भगम् ।

**अन्तर्भगं योनिमार्गो**[3] **वा** नाम—भगद्वाराद्गर्भाशयमुखं यावत् प्रसृतो वक्रीभूतो मार्गो वस्तिगुदयोरन्तरालस्थः स पुरःप्राचीरानुक्रमेण चतुरङ्गुलदीर्घः, पश्चिमप्राचीरानुक्रमेण तु पञ्चषाङ्गुलायतः, तत्प्राचीराणां नियतसंकोचात्। स्वभावतो रुद्धप्रायोऽपि, सति प्रयोजने विशेषेण विस्फारणयोग्यः। तदूर्द्ध्वप्रान्तश्च जरायुग्रीवां संवेष्ट्य तिष्ठति। सोऽयं मार्गः पश्चिमभागे तिर्य्यग्दूरतरश्च प्रसृतः ।

(व्यतिकरः) पुरस्ताद्—योनेः पुरःप्राचीरव्यवहितं वस्तिमूलं मूत्रप्रसेकश्च। पश्चिमतः—योनेः पश्चिमप्राचीरव्यवहिता गुदनलिका, योनिगुदान्तरीय-स्थालीपुटश्च (उदर्य्याकलानिर्म्मितम्) (१४२ चित्रम्) पार्श्वयोस्तु—पार्श्वप्राचीर-व्यवहिते पायुधारिण्यौ पेश्यौ ।

निर्म्माणं पुनर्योनिप्राचीराणां स्वतन्त्रपेशीतन्तुभिस्तनुश्लेष्मस्त्राविकलया चाभ्यन्तरतः। सेयं कला संकोचकाले अङ्गुरीयकाकाराभि-र्वलिराजिभिरुपलक्षिता। सेवनीचिह्नांकिता च पुरः पश्चाच्च मध्यरेखायाम् ।

योनिद्वारन्तु व्याख्यातचरं, योनिसंकोचन्यौ पेश्यौ च तत्पार्श्वस्थे ।

पोषणं पुनर्योनेराभ्यन्तर्य्योरधिश्रोणिकयोर्धमन्योरनुयोनिकाभ्यां शाखाभ्याम् गुदोपस्थिकायाश्च तनुप्रशाखाभिः ।

अथ गर्भाशयः ।

**गर्भाशयो**[4] नाम—अधोमुख-क्षुद्रतुम्बीफलाकारः कोषः स्थूलपेशीमयो योने-

१। Glands of Bartholin. २। Fourchette. ३। Vaginal Canal. ४। Uterus. = wom

रूर्द्ध्वमुखे प्रतिबद्धः । तस्यायतनं स्वमुष्टिमात्रमगृहीतगर्भायाः, गृहीतगर्भायास्तु यथागर्भम् ।

अथास्य त्रयो भागाः कल्प्यन्ते वर्णनासौकर्य्याय—मुखं, ग्रीवा, शरीरञ्चेति । तत्र—

**गर्भाशयमुखं**[१] योनिशिखरावलम्बि अधोऽभिमुखत्वाद् । तत्र लक्षणीयं छिद्रं—बाह्यगर्भच्छिद्रं[२] नाम, तद् गर्भाशयस्य द्वाररूपम् । तच्च नियतं संकुचितमेवावतिष्ठते । स्फारीभवति च प्रसवकाले आर्त्तवकाले च स्तोकेन षोड़शदिनपर्य्यन्तं प्रायो गर्भाधानाय । रजःकृच्छ्रे तु सम्यगस्फारीभूतं तन्निरुणद्धि रजःप्रवाहमिति रजःशूलसम्भवः ।

**ग्रीवा**[३] पुनर्गर्भाशयस्य मुख-शरीरयोरन्तरालस्थः संकुचितभागो द्व्यङ्गुलमात्रः । तत्प्राचीराणां स्थूलता तु अङ्गुलचतुर्थांश-परिमाणा । तदन्तर्वर्त्ती मार्गश्च क्षुद्रपटोल-फलाकारः प्रायेण श्लेष्मार्गलिकाप्रतिबद्धः, अन्यत्र रजःकालात् । तस्य ग्रीवासरणिरिति[४] संज्ञा ।

**शरीरं**[५] पुनर्गर्भाशयस्य तुम्बीफलस्यस्थूलभागवदायतः । तदन्तर्द्ध्यस्त्रिकोणाकारोऽवकाशः । तस्य च त्रिकोणस्य ऊर्द्ध्वगं कोणद्वयं वीजस्रोतोभ्यां प्रतिबद्धम्, अधोगश्च कोणो ग्रीवासरण्या । तस्य आभ्यन्तर गर्भच्छिद्रमिति[६] संज्ञा । गर्भाशयप्राचीरिकाश्च तच्छरीर एव स्थूलतमाः, तासां प्रायेण अर्द्धाङ्गुलस्थूलत्वात् । शिखरञ्च गर्भाशयस्य गर्भतुम्बी[७] संज्ञम् ।

सोऽयं गर्भाशयः अष्टाभि-र्बन्धनिकाभि-र्यथास्थानं धार्य्यते वस्तिगुदयोरन्तराले । प्राव्रियते च समन्तादुदर्य्यया कलया ग्रीवां परितः सङ्कृत्य द्विगुणीभूतया । द्विगुणीभावाच्च तस्याः स्तरद्वयान्तराले विरच्यते स्थालीपुटम् पुरस्ताद् वस्ति-गर्भाशयान्तरीयं, पश्चाद् योनिगुदान्तरीयं नाम ।

**बन्धनिकाश्च** गर्भाशयस्य एका अग्रिमा, एका पश्चिमा, द्वे पक्षबन्धन्यौ, द्वे रज्जुबन्धनिके, द्वे त्रिकगर्भाशयिके चेति । तत्र—

अग्रिमा पश्चिमा चेति द्वे बन्धनिके उदर्य्याख्य-कलाया द्विगुणीभावादारचिते पूर्वोक्तस्थालीपुटद्वयस्य पूर्वापरांशभूते ।

**पक्षबन्धन्यौ**[८] नाम-गर्भाशयपार्श्वस्थे पक्षवदायते बन्धनिके (१७१ चित्रम्) । ताभ्यां मध्यप्राचीरवत् स्थिताभ्यां विभज्यते वस्तिगुहा पूर्वापरयोरंशयोः । निर्म्माणञ्च

१ । Os Uteri. २ । External Os. ३ । Cervix. ४ । Cervical Canal. ५ । Body of the Uterus. ६ । Internal Os. ७ । Fundus Uteri. ८ । Broad Ligaments.

पक्षबन्धन्योः सिरा-धमन्यादिजालाच्छादन्या उदर्य्याख्यकलाया द्विगुणीभावात्। दृश्यन्ते च एकैकस्यां पक्षबन्धन्यां कलास्तरद्वयान्तराले बीजस्रोतसी, सप्रबन्धनौ बीजाधारौ, रज्जुबन्धनिके, नाड़ी-सिरा-धमनी-रसायन्यश्च।

( १७१ चित्रम्। )

## गर्भाशयो बीजाधारौ बीजवाहिन्यौ च।




१। १— बीजवाहिन्योः पुष्पितप्रान्तौ [ × चिह्निता गर्भाशय-ग्रीवा ]

**रज्जुबन्धनिके**[१] नाम—रज्ज्वाकारे बन्धनिके पञ्चषाङ्गुलदीर्घे। ते गर्भाशयशरीरस्य पार्श्वकोणाभ्यां पुरस्तात् तिर्य्यक् प्रसृते। ततो वंक्षणसुरङ्गयोः प्रविश्य तत्रैव क्रमशः प्रनष्टे। तयोर्वृषणबन्धनिकाभ्यां स्फुटं सादृश्यमिति गर्भव्याकरणज्ञाः।

**त्रिकगर्भाशयिके**[२] नाम—ह्रस्वप्राये बन्धनिके, ते गर्भाशय-पार्श्वकोणाभ्यां सम्भूय पश्चाद् धनुर्वद्वक्रीभूय त्रिकास्थिपार्श्वयोः सम्बद्धे।

ताश्च बन्धनिकाः पेशीस्नायुसूत्रभूयिष्ठाः गर्भाशयं सम्यक् समन्तात् प्रबध्नन्ति, धारयन्ति च यथास्थानं सर्वास्ववस्थासु।

---

१। Round Ligaments. २। Sacro-uterine Ligaments.

( १७२ चित्रम् )

## गर्भाशयस्य अभ्यन्तरम् ।

( अनुलम्बच्छेदेन दर्शितम् )




[ १।१ बीजवाहिन्यो-र्द्वारद्वयम् । २।२ गर्भाशय-प्राचीरम् । ३ गर्भाशयस्य अभ्यन्तरम् । ४ आभ्यन्तरं गर्भच्छिद्रम् । ५ ग्रीवासरणिः । ६ वाह्यं गर्भच्छिद्रम् । ७ योनि-प्राचीरिका ]

### अथ बीजाधारौ बीजवाहिन्यौ च ।

**बीजाधारौ बीजकोषौ**[१] **वा** नाम—चटकाण्डसमाकारौ ग्रन्थी गर्भाशय-पार्श्वस्थौ । तौ पक्षबन्धन्याः स्तरद्वयान्तराले गर्भाशयकोणयोरुपकण्ठं तिर्य्यगधितिष्ठतः । तयोरेकैकस्य द्वौ प्रान्तौ, अन्तरभिमुखो बहिरभिमुखश्च । तत्राद्यो गर्भाशयाभिमुखः गर्भाशयेन सम्बद्धो द्वित्राङ्गुलदार्घ्येण रज्ज्वाकारेण ह्रस्व-प्रबन्धनेन । तस्य बीजाधारबन्धनिके[२]ति संज्ञा । अथास्य बहिरभिमुखेन प्रान्तेन सम्बद्धा तन्वी कुल्या बीजार्तवप्रवहणाय, सेयं बीजकुल्या[३] बीजवाहिन्याः पुष्पितप्रान्तेनानुबध्यते ।

निर्म्माणं पुनर्बीजाधारस्य स्नायुमयवस्त्वभ्यन्तरे अतिसूक्ष्म-सिरा-धमनी-स्नायुसूत्र-जालकानुविद्धानां सिकताकणानामिव सूक्ष्म-स्त्रीबीजानां[४] तनुपुटकावृतानां सन्निवेशात् । एकैकस्मिंश्च बीजाधारे सप्ततिसहस्रं बीजानामिति सूक्ष्मद्रष्टृशः । तानि च बीजानि यौवनारम्भे क्रमशः स्फुटीभूय काले पुष्टतराणि सम्भवन्ति । तेषु पुष्टतमानां मासि मासि

---

१ । Ovaries. २ । Ligament of the ovary. ३ । Ovarian Fimbria.
४ । स्त्रीबीजम् Ovum.

बीजाधारगात्रस्फुटनाद् बहिर्निःक्षेपः, निःक्षिप्तानि च बीजानि बीजकुल्यामार्गेण (अन्यथापि वा) प्रचलितानि बीजवाहिन्योः पुष्पितमुखाभ्यामाह्रियन्ते, ततस्तेषां बीजवाहिनीपथेन गर्भाशये प्रवेशः ।

(१७३ चित्रम्)

बीजाधारस्य सूक्ष्मनिर्म्माणम् ।




[ १।१।१।१।१—बीजानां बाल्यावस्था । २।२—तेषां पुटकान्तः पृथग्भूतानां मध्यावस्था । ३।३—तेषां परिणतावस्था । ४—बीजपुटकस्य शुष्यमाणोऽवशेषः । ५—बीजनिर्गमकृतो विदारः । ]

एवञ्च एकैकस्मिन् बीजकोषे दृश्यानि बीजनिर्गमावशिष्टाणि पुटकानि बीजकिण-पुट[१] संज्ञानि । दृश्यानि च प्रायो बीजनिर्गमकृतानि विदारलक्ष्माण्यपि बीजाधारगात्रेषु ।

**बीजवाहिन्यौ बीजस्रोतसी**[२] **वा** नाम—गर्भाशयपार्श्वकोणाभ्यां बाहुवदुभयतः प्रसृते स्वतन्त्रपेशीतन्तुभूयिष्ठे नलिके । तयोर्बहिःप्रान्तौ प्रस्फुटित-कूष्माण्ड-पुष्पाकारौ पुष्पितप्रान्तौ[३] नाम । ताभ्यामाह्रियन्ते मासि मासि बीजाधार-गात्रस्फुटनविनिर्गतानि स्त्रीबीजानि ।

आभ्यन्तरस्रोतसी च बीजवाहिन्योः कुशेषिकाप्रवेशार्हे गर्भाशयपार्श्वकोणयोरुन्मुच्येते ।

अथ स्तनौ ।

**स्तनौ कुचौ**[४] वा नाम—स्त्रीणां दुग्धनिर्मापकौ ग्रन्थि-संघातौ वक्षःस्थौ, तयोः प्रजननयन्त्रै रतिघनिष्ठः सम्बन्धः । तौ च प्रायेण यौवने विल्वफलार्द्धसदृशौ ।

---

१ । Corpus Luteum. २ । Oviducts or Fallopian tubes or Uterine tubes.
३ । Fimbriated ends. ४ । Mammary glands or Breasts.

( १७४ चित्रम् )

## स्तनाभ्यन्तस्था दुग्धग्रन्थयः दुग्धस्रोतांसि च ।




( दु१— दुग्धहरिण्याः कलसिका-भागः ।
दु२— तस्या एव चरमप्रान्तः ।
स० स्नायुजालरचिताः कोष्ठिकाः—यत्राधीयन्ते ग्रन्थयः ।

तयोः शैशवे पुंस्तनाभ्यामविशेषः । कैशोरे वयसि तु क्रमात् पुष्टिरायौवनपरिणामात् । पुष्टतमौ च तौ दृश्येते गर्भिण्याः प्रसूतायाश्च शनैर्दुग्धापूर्णत्वात् । वयःपरिणामे तु (अकालवार्द्धके वा) तयोः क्रमात् परिशोषः, प्रलम्बितत्वङ्मात्रशेषता च ।

तावेतौ स्तनौ सम्यक् परिणतौ त्वचा मेदोभूयिष्ठया कलया च परिवृतौ नातिकठिनौ ग्रन्थिसङ्घातमयो च सम्पद्येते । सन्ति हि एकैकस्मिन् स्तने षोडशाष्टादश वा ग्रन्थयो दुग्धप्रभवाः ।

एकैकतश्च ग्रन्थेः सम्भूता दुग्धहरिण्यो[१] नाम प्रणालिकाः । ताः क्रमशः परस्पर-

---

१ । Lactiferous ducts. तथाच सुश्रुतः—"पक्वे तु दुग्धहरिणीः परिहृत्य नालीः"—इत्यादि ( सु० चिकि १८ अ० ) स्तनविद्रधौ पक्वे शस्त्रावचारणस्यायं विधिः ।

मिलनेन शेषे कलसिकावत्[१] स्फारीभूताः सर्वतः समूहिताश्च चूचुकं केन्द्रीकृत्य सम्मिलन्ति, उन्मुच्यन्ते च सूक्ष्मैर्मुखैस्तत्रैव । अन्तरालेषु च दुग्धहरिणीनां द्वश्या मेदोऽनुविद्धाः सिरा-धमनीजालकैर्व्याप्ताः स्नायुमय्यः प्राचीरिकाः । ताः सर्वावरणभूतात् स्नायु-कोषात् सम्भूय स्तनान्तःप्रसृताः ।

**चूचुकं**[२] नाम—दुग्धवाहिस्रोतसां मुखसङ्घातमयं स्नायुसूत्रभूयिष्ठं स्तनशिखरम् । तदावरणी च त्वक् स्वभावतस्ताम्रवर्णा श्यामा वा भवति । विशेषेण कृष्णमण्डलोपलक्षितश्च तद् गर्भिण्याः । तत्स्फुटनाच्च बहुधा सम्भवति स्तनविद्रधिः प्रसूतानाम् ।

तान्येतानि स्त्रीपुंसोः प्रजननयन्त्राणि व्याख्यातानि ।

इदमाशयविज्ञानं सद्वैद्यशरणं परम् ।
सदाशयानां सर्वस्वं दुराशयदुरासदम् ॥
यद्यार्षीं रोगसंप्राप्तिं संप्राप्तुं चेतसि स्पृहा ।
तदेमं दीपमादाय स्वान्तर्ध्वान्तमपाकुरु ॥

समाप्तश्चेदमाशयखण्डम् ।

---

१। Ampulee. २। Nipple.

# सोऽयम्

श्रीमन्नारायणकरुणावतारश्रीकृष्णचैतन्यतनयीकृत-
धन्यजनिश्रीमद्रघुनन्दनगोस्वामिदौहित्रवंशावतंसस्य
निखिलराढ़ाभूमिसौरभप्रभवश्रीखण्डपुरादिवास्तव्यस्य
विद्याकल्पद्रुमेत्यन्वर्थनामधेय-सर्व्वतन्त्रस्वतन्त्र-
वाराणसीभूषण सर्वपण्डितमान्य
श्रीविश्वनाथोपमविश्वनाथकविराजात्मजस्य
महामहोपाध्याय-श्रीगणनाथसेन-शर्म-सरस्वती-कविराजस्य

## नवीनकृतौ प्रत्यक्षशारीरे
## पेशी-धमनी-सिरा-रसायन्याशयवर्णनीयो नाम
## द्वितीयो भागः

समाप्तः ।

॥ श्रीकृष्णचरणार्पणमस्तु ॥

# प्रत्यक्षशारीर-द्वितीयभागस्य
# शुद्धिपत्रम् ।

मुद्राकरकराघातकातरा क्वापि भारती ।
करुणार्द्रकरस्पर्शैः सुधियः सान्त्वयन्तु ताम् ॥
ऊर्द्ध्व शब्दे व लोपञ्च मात्राभंगञ्च कुत्रचित् ।
व-वयोश्च विपर्य्यासं शोधयन्तु कृपालवः ॥

| ( पृष्ठे ) | | ( पंक्तौ ) | ( अशुद्धपाठः ) | ( शुद्धपाठः ) |
|---|---|---|---|---|
| १ | | ६ | प्रवर्त्तकश्वेष्टाना | प्रवर्त्तकश्चेष्टाना |
| २ | | २ | आभ्यन्तराः | अभ्यन्तरस्थाः |
| ” | | १२ | तावस्थो | तावस्थ्नो |
| ” | ( पादटीकायां ) | | स्वतन्त्वा | स्वतन्त्वाः |
| ” | ” | | कणउराः | कण्डराः |
| ३ | | ७ | निष्याद्यते | निष्पाद्यते |
| ” | | १६ | नाड़यः | नाड्यः |
| १२ | ( पादटीकायां ) | | मुखभूमिकण्टिका | मुखभूमिकण्ठिका |
| १३ | | ६ | पृष्ठत | पृष्ठतः |
| ” | | १७ | शृङ्गाध संलग्ना | शृङ्गाधः संलग्ना |
| १४ | | २२ | पर्शकाकर्ष | पर्शुकाकर्ष |
| १५ | ६६ चित्रे | | पूर्व्वर्द्धापसारणेन | पूर्व्वार्द्धापसारणेन |
| १८ | | ६ | सन्धिप्रवद्धनेभ्य | सन्धिप्रवर्द्धनेभ्य |
| ” | | २० | चतुर्मुला | चतुर्मूला |
| २० | | १७ | पृष्ठठदेशस्य | पृष्ठदेशस्य |
| २२ | | २० | वणिता | वर्णिता |
| २३ | | २ | मूर्द्ध्वाकषण | मूर्द्ध्वाकर्षण |

| ( पृष्ठे ) | | ( पंक्तौ ) | ( अशुद्धपाठः ) | ( शुद्धपाठः ) |
|---|---|---|---|---|
| २३ | | २१ | एकेकतः | एकैकतः |
| २४ | | १५ | काय्यश्चास्याः | कार्य्यश्चास्याः |
| २६ | | १७ | कोष्ठधरकलया | उदर्य्यकलया |
| २८ | | २ | फलकापार्श्वात् | फलकपार्श्वात् |
| २८ | | ६ | अंसफलकस | अंसफलकस्य |
| ,, | | १० | श्चासकण्ठे | श्वासकण्ठे |
| ,, | | १५ | कायमंसफलकस्य | कार्यमंसफलकस्य |
| २६ | ७४ चित्रे | ८ | उरश्छछायाः | उरश्छदायाः |
| ३० | | १३ | कूमपृष्ठा | कूर्मपृष्ठा |
| ३२ | | २ | रसवहा | रसकुल्या |
| ,, | | २५ | ७४ चित्रम् | ७६ चित्रम् |
| ३५ | | १ | भगमुण्ड | भगास्थिमुण्ड |
| ३५ | | ११ | आदिमायाः | मध्यमायाः |
| ३६ | | २ | सेयमस्ताद् | सेयमधस्ताद् |
| ३८ | | १६ | पायुकषणं | पायुकर्षणं |
| ४० | | ३ | चरमत्रितयं | चरमद्वितयं |
| ४१ | | २१ | पश्विमा | पश्चिमा |
| ,, | | २४ | वक्षयमाणा | वक्ष्यमाणा |
| ४२ | | १४ | आभ्यन्तरा | अन्तःस्था |
| ,, | | १८ | ,, | ,, |
| ४६ | ८० चित्रे | | द्विशीरस्काया | द्विशिरस्काया |
| ५१ | | १० | तस्यचतुर्भि | तस्याश्चतुर्भि |
| ५२ | ८३ चित्रे | | कंकुणिका | कंकणिका |
| ५३ | | १४ | शलाकामुले | शलाकामूले |
| ,, | | १६ | वाह्यादवदार्वुहिः | वाह्यार्वुदाद्बहिः |
| ५४ | | १७ | बहिपार्श्विका | बहिःपार्श्विका |
| ५५ | | ४ | पूववत् | पूर्व्ववत् |
| ५५ | | १५ | पट्टिकाश्वात्र | पट्टिकाश्चात्र |
| ५७ | | २४ | शाखाद्वयेन | पक्षद्वयेन |

| ( पृष्ठे ) | ( पंक्तौ ) | ( अशुद्धपाठः ) | ( शुद्धपाठः ) |
|---|---|---|---|
| ५६ पादटीकायां | | Plantaris | Palmaris |
| ६१ | २१ | थ्रोणि | श्रोणि |
| ६३ | ५ | अनुवंक्षणिकाख्याः | दीर्घोत्ताना नाम |
| ६५ | ११ | वहिविवर्तनं | वहिर्विवर्त्तनं |
| ६५ | १५ | काय्यम् | कार्य्यम् |
| ६५ | १६ | नाज्या | नाड्या |
| ६६ | १८ | जङ्धास्थ्नः | जङ्घायाः |
| ७२ | १३ | पाश्वगे | पार्श्वगे |
| ७३ | ३ | पूववत् | पूर्ववत् |
| ” | १३ | वहिविवर्त्तनम् | वहिर्विवर्त्तनम् |
| ७४ | २२ | पवमूलेषु | पर्वमूलेषु |
| ७८ | ३ | पाष्णितल | पार्ष्णितल |
| ” | ४ | निभिद्य | निर्भिद्य |
| ,, पादटीकायां | | Inter-ossei | Lumbricales |
| ७६ ६२ चित्रे | | स्तस्थाः | स्तरस्था |
| ८० पादटीकायां | | Dorsal | Planter |
| ८१ ६३ चित्रे | | दाघ | दार्घ |
| ८२ पादटीकायां | | Planter | Dorsal |
| ८५ | २२ | पुनहृदयात् | पुनर्हृदयात् |
| ८६ | ६ | सौम्यश्चा | सौम्यश्चा |
| ” | १६ | द्ररसस्य | द्रसस्य |
| ” | २५ | परस्परया | परम्परया |
| ८७ | १५ | उच्छास | उच्छ्वास |
| ” | २१ | वणना | वर्णना |
| ८८ | ६ | अन्तस्तलिकाख्ये | अन्तस्तनिकाख्ये |
| ” | २१ | इडा | ईडा |
| ” | २६ | वणने | वर्णने |
| ८६ | १४ | अन्तस्तलिकायाः | अन्तःस्तनिकायाः |

| ( पृष्ठे ) | ( पंक्तौ ) | ( अशुद्धपाठः ) | ( शुद्धपाठः ) |
|---|---|---|---|
| ८९ | १८ | पशीनिर्मितं | पेशीनिर्मितं |
| ९१ ९४ चित्रे | | फुस्फुसाभिग महासिरायाः | फुस्फुसाभिग महाधमन्याः |
| ,, ,, ,, | | ,, महासिरा | ,, धमनी |
| ९२ | २१ | कपटवत् | कपाटवत् |
| ९३ | १० | पत्रकाण | पत्रकाणा |
| ९६ | १ | पञ्चभिर्दिन | पञ्चभिर्दिनै |
| ९७ | २ | वणनीय | वर्णनीय |
| ,, | १४ | सम्भूता | सम्भूता |
| ९८ | ३ | अक्षशाखाणां | शाखानां |
| ,, | ६ | चक्रानि | चक्राणि |
| ,, | २५ | तत्रव | तत्रैव |
| ९९ | १५ | फुस्फुसभिग | फुस्फुसाभिग |
| ,, | २४ | ग्रीवांशोरः | ग्रीवांसोरः |
| ,, | २५ | वाह्वो | वाह्वो |
| ,, | ,, | कर्परसन्धेः | कूर्परसन्धेः |
| ,, | २६ | ऽनुशाभिश्च | ऽनुशाखाभिश्च |
| १०० | ५ | तदक्षिण | तद्दक्षिण |
| ,, | १२ | पार्श्वस्थाः | पार्श्वस्था |
| ,, | १८ | प्राचीरांश्च | प्राचीरांशश्च |
| ,, | २६ | अधरा, महासिरा | अधरा महासिरा |
| १०२ | १ | सन्धानस्य | सन्धानस्य पुरःस्थायाः |
| १०२ | ७ | वहिःग्रीवीय | वहिर्ग्रीवीया |
| ,, | १५ | नाडया | नाड्या |
| १०२ | १८ | द्वयं ग्रीवा | द्वयमेकैकतो ग्रीवा |
| ,, | १९ | इडा दक्षिणगश्च | ईडा दक्षिणतश्च |
| ,, | ,, | नाडयौ | नाड्यौ |
| १०३ | २१ | पाश्विका | पार्श्विका |
| ,, | २४ | तिय्यगन्त | तिर्य्यगन्त |

| ( पृष्ठे ) | ( पंक्तौ ) | ( अशुद्धपाठः ) | ( शुद्धपाठः ) |
|---|---|---|---|
| १०४ | ५ | कणगे | कर्णगे |
| ” | १७ | ऊद्धगा | ऊर्द्धगा |
| १०६ ९८ चित्रे | | जिह्वामूलधरीया | चिबुकाधरीया |
| ११० | ६ | स्थूलधमन्यौ | स्थूलधमन्यौ (९६ चित्रम्) |
| १११ | १ | आदरिकी | औदरिकी |
| ११३ | २३ | संप्राप्ते | संप्राप्ते अनुवृक्के नाम |
| ११५ | १४ | जधनिका | जघनिका |
| ११६ १०३ चित्रे | | शोणिगुहान्त | श्रोणिगुहान्त |
| ११७ | ११ | प्रतानः | प्रतानैः |
| ११९ | २३ | मुलङ्घ्य | मुल्लंघ्य |
| १२० | ७ | धमन्धा | धमन्या |
| ” | २१ | पुरःस्तात् | पुरस्तात् |
| ” | २२ | अय | अथ |
| ” | ” | प्राकोष्ठीया | प्रकोष्ठीया |
| १२२ | ६ | पश्चाँश्चोर्द्ध | पश्चाच्चोर्द्ध |
| ” | १९ | यीजनी | योजनी |
| १२३ | २ | प्रकीष्ठीय | प्रकोष्ठीय |
| ” | ४ | तर्जन्धा | तर्जन्या |
| ” | १५ | पाश्वमात्र | पार्श्व मात्र |
| १२३ | १५ | करलीय | करतलीय |
| १२६ | ४ | ११० चित्रम् | १०९ चित्रम् |
| ” | १८ | १११ ” | ११० ” |
| ” | २५ | पेशोनां | पेशीनां |
| १२७ | १३ | पाष्ण्यों | पार्ष्ण्यों |
| ” | २० | जंधिका | जंघिका |
| १३० | ८ | थमनीखण्डं | धमनीखण्डं |
| १३१ | २ | वणनीय | वर्णनीय |
| १३२ | १ | सहचय्यः | सहचर्य्यः |

| ( पृष्ठे ) | ( पंक्तौ ) | ( अशुद्धपाठः ) | ( शुद्धपाठः ) |
|---|---|---|---|
| १३३ | १ | कूपर | कूर्पर |
| ” | २० | अप्यभाग | आप्यभाग |
| ” | २२ | मुमूर्षूमपि | मुमूर्षुमपि |
| १३४ | २४ | दीर्घौत्ताना | दीर्घोत्ताना |
| १३६ | १ | उरगुहां | उरोगुहां |
| १३६ | ७ | एकैकार्ध्वे | एकैकार्धे |
| १३७ | १२ | मास्तिष्क | मस्तिष्क |
| १४० | १४ | महावत्तः | महावर्त्तः |
| १४१ | १३ | अनु प्रस्थममव | अनुप्रस्थमत्र |
| १४२ | ८ | निंगमः | निर्गमः |
| ” | २० | अपराभिः औरस्य सिराभिः र्वा | अपराभिरौरस्य सिराभिर्वा |
| ” | २१ | फुसस्फुसा | फुस्फुसा |
| १४४ | १८ | पर्शकानुगाः | पर्शुकानुगाः |
| ” | ” | सहचय्यः | सहचर्य्यः |
| १४६ | ४ | आपूय्यते | आपूर्य्यते |
| ” | ११ | आरच्यन्तै | आरच्यन्ते |
| ” | २१ | सहचर्य्यः | सहचर्य्यः (१२० चित्रम्) |
| १४६ | २२ | पश्चात् | पश्चात् |
| १४७ | ४ | पक्काशयदि | पक्वाशयादि |
| ” | १७ | आभ्यन्तरय्योंः | आभ्यन्तर्योः |
| ” | २० | नितम्बिन्य सिरा | नितम्बिन्यः सिराः |
| ” | २१ | त्रिकपश्चिमा | त्रिकपुरस्काः |
| १४८ | १ | पुञ्जीभूतैः | पुञ्जीभूतैः |
| ” | ३ | गुदन्तिका | गुदान्तिका |
| १४६ | ८ | चदाचित् | कदाचित् |
| ” | १० | शरीराद्धस्य | शरीरार्द्धस्य |
| १५० | २० | तयोदक्षिणा | तयोर्दक्षिणा |

| ( पृष्ठे ) | ( पंक्तौ ) | ( अशुद्धपाठः ) | ( शुद्धपाठः ) |
|---|---|---|---|
| १५३ | १४ | पितकोषिणी | पित्तकोषिणी |
| १५६ | ८ | दिषु र्वाह्य | दिषु बाह्य |
| १५७ | १० | क्षुद्र | क्षुद्रा |
| १५९ | १९ | कणपृष्ठे | कर्णपृष्ठे |
| १६० | ७ | नेत्रवत्म | नेत्रवर्त्म |
| १६३ | १७ | द्वित्रासुःस्थूलरसायनीषुः | द्वित्रासु स्थूलरसायनीषु |
| १७१ | ६ | भूताणां | भूतानां |
| १७४ | २० | कृकाटकं | कृकाटकम् |
| १७८ | २ | षडङ्गल | षडङ्गुल |
| १७९ | ४ | नलिक या | नलिकाया |
| „ | ५ | च तसृषु | चतसृषु |
| „ | १२ | कले | कले ( १३४ चित्रम् ) |
| „ | १६ | सघषण | संघर्षण |
| „ पादटीकायां | | प्लरा | प्लुरा |
| १८१ | २ | द्वयङ्गल | द्वयङ्गुल |
| १८३ | ९ | गर्भस्याद्यास्थायां | गभस्याद्यावस्थायां |
| १९१ | १० | दीर्घः | दीर्घम् |
| १९६ | २६ | वक्षण | वंक्षण |
| २०२ | २५ | दीघायतः | दीर्घायतः |
| २०५ १४५ चित्रे | | हादिक द्वारम् | हार्दिक द्वारम् |
| „ | ३ | संवध्याति | संवर्द्धन्ति |
| २०७ १४६ चित्रे | | ५-याकृतं पित्तस्रोतः ६-प्रतीहारिणी महासिरा | ५-यकृद्वन्धनी ६-याकृतं पित्तस्रोतः |
| २११ १४८ चित्रे | | रसायनी जालिका | मध्यस्था रसायनी |
| „ „ „ | | मध्यसिरा | वेष्टनी सिराजालिका |
| „ | ११ | शस्नलिका | शरनलिका |
| २१५ | २६ | वणितपूर्वम् | वर्णितपूर्वम् |
| २१६ | ८ | संज्ञयोधर्मन्योः | संज्ञयोर्धमन्योः |
| २१७ | २० | कूमपृष्ठाकारं | कूर्मपृष्ठाकारं |
| २२४ | २३ | विपक्कस्य | विपकस्य |

| ( पृष्ठे ) | | ( पंक्तौ ) | ( अशुद्धपाठः ) | ( शुद्धपाठः ) |
|---|---|---|---|---|
| २२७ | | ४ | पार्श्वर्ण | पार्श्वेण |
| „ | | २३ | प्रन्थिद्वयम् | ग्रन्थिद्वयम् |
| २२८ | | १ | मूत्रप्रजनन | मूत्रनिर्म्माण |
| „ | | ३ | स्थितिर्वामा | स्थितिर्वाम- |
| २३० | | १४ | वृक्कालिन्दा | वृक्कालिन्दः |
| „ | | २६ | रालवालकाभि | रालवालिकाभि |
| २३३ | | ३ | ता | सा |
| „ | | „ | धमन्यः | धमनी |
| „ | | १२ | प्रसपतः | प्रसर्पतः |
| २३४ | | २ | स्तपयन्तीति | स्तर्पयन्तीति |
| „ | | ६ | प्ररिणमन्तीति | परिणमन्तीति |
| २३८ | | १२ | शिश्नर्नेमिक्रा | शिश्ननेमिका |
| २३९ | | २० | स्थूलकलामय | स्थूलकलामयो |
| २४३ | | ४ | पुरुषस्यः | पुरुषस्य |
| „ | पादटीकायां | | सौश्रतीयं | सौश्रुतीयं |
| २४६ | | १५ | तिर्य्यंदूरतरश्च | तिर्य्यग्दूरतरश्च |
| २५१ | १७४ चित्रे | | स्तनाभ्यन्तस्था | स्तनाभ्यन्तरस्था |
| २५१ | | ६ | र्वा | वा |
| २५२ | | १२ | स्वार्न्त | स्वान्त |
| २५२ | पादटीकायां | | Ampulee | Ampulae |

---

# प्रकाशकस्य निवेदनम्

एतानि तावदभिनन्दनपत्राणि अस्मदीयगुरुचरणै स्तत्रभवद्भि र्महामहोपाध्याय-कविराजश्रीमद्गणनाथसेनशर्म्मभिः कार्य्यवशाद् भारतीयनानादेशप्रस्थितैः तत्तद्देशीय-विद्वद्वरेभ्यः समाजनसभासमवेतेभ्य आसादितानि। तानि चैतावन्तं कालममुद्रितानि साम्प्रतं शिष्यजनानुरोधात् प्राकाश्यं नीयन्ते। इति

कलकत्ता, महानगर्य्याम्
सं० १९८१
मार्गशीर्ष पूर्णिमा

विदुषां विधेयस्य
आयुर्वेदविशारदोपाधिक—
श्रीचारुचन्द्रदाश शर्म्मणः

[ Address Presented by the Rishikul, Hardwar, in appreciation of services done to Ayurveda, 30th march, 1912. ]

( श्रीहरिद्वारस्थ ऋषिकुल-वार्षिकोत्सवे खी० १९१२तमे वर्षे मार्चमासे समवेतानां विद्वद्वराणां सदसि प्रदत्तमिदमभिनन्दनपत्रम् । )

# प्रशस्तिपत्रम् ।

अविकलेन्दुकलामलनिजयशःपटलप्रसरविमलीकृतदशदिगन्तराणाम्, अनवरताभिनवविविधशास्त्राभ्याससमुल्लासमानदिव्यप्रतिभाविलोचनपरःशतानाम्, आयुर्वेदादिशास्त्रावलोकनविघटितबाह्याभ्यन्तरमलनिर्मलमानसानाम्, अगणितगुणपुञ्जरञ्जिताखिलजनताचेतसाम्, अज्ञानान्धतमसपाटनपटीयसां श्रीमतां वैद्यावतंस-कविराज-श्रीगणनाथ-सेन-विद्यानिधि-कविभूषण एम् ए, एल् एम् एस् महोदयानां करकमलयुगले षट्पदभावं भजतां सस्नेहपूर्वकं समर्पितमिदमभिनन्दनम् ।

अद्य भगवतस्तरुणेन्दुशेखरस्य शुभासीमकृपाकटाक्षपयःप्रक्षालितान्तरात्मनाम्, अस्माकं मानसभूमावानन्दकन्दमुद्भावयताम्,—आयुर्वेदोन्नमनविहितैकसाहसानाम्, असाधारणानुभवविराजमानमानसानाम्,—ससम्भ्रमविद्वन्मण्डलनीराजितपादयुगलानाम् श्रीमतां शुभसंदर्शनेन परमपुण्यैकलभ्येन—आत्मानं कृतकृत्यं मन्यमाना वयं नितरामानन्दसागरे निमग्नाः स्मः ।

अनन्यगम्येन सन्दर्शनसुखेन धन्यंमन्याः श्रीमद्भिः सम्पादिता वयमानन्दसन्ततिसन्ततपरिपूर्यमाणकण्ठगद्गदा न किमप्यभिधातुं गुणगणानां शक्नुमः । देशहितप्रवणैर्भवद्भिरनुकम्पिता जनता नितरां निरन्तरं धन्यवादपरःसहस्रैरभिनन्दयति श्रीमतः, प्रयागीयायुर्वेदसम्मेलनसंस्थायां परिभूषितसभापतिपदैः, श्रीमद्भिरनुरञ्जिता लोकाः, किमन्यद्ब्रूमः ? प्रत्यक्षशारीराद्यसाधारणग्रन्थरचनाश्चर्यितजनमनःकदम्बकानाम्, भवतां गुणगणाकृष्टा भारती नैव ननु प्रसरति विह्वला समुपवर्णयितुं गुणगणानाम् । कियतीं वा शक्तिमावहेद् वराकी वाक् ?, केवलमानन्दनन्दनविलासविस्मृतान्यकार्या धन्यवादपरःसहस्रैरभिनन्दयति श्रीमतः ।

पाश्चात्यायुर्वैदिकवैदुषीविभवावलम्बाकृष्टलोकानां लोकानां समक्षमुपदर्शितः श्रीमताऽऽयुर्वेदरहस्यैकविदा प्राचीनार्षायुर्वेदशास्त्रगरिमा, अनुपलपरिहीयमानाऽऽर्षायुर्वेदविद्यायै समर्पितो भुजावलम्बः । समुद्घाटितानि चक्षूंषि लोकानामार्षायुर्वेदप्रबोधशून्यचक्षुषामायुर्वेदमहत्त्वविदा, किंवा प्राचीनार्षायुर्वेदविद्यारहस्यप्रबोधपटीयसा न सम्पादितं भारतीगोचरातिक्रान्तमियत्तापरिमाणरहितम् । आशास्महे प्रतिदिनमार्षायुर्वेदमुपचिन्वन्तो भवन्त आर्षायुर्वेदप्रचारपरिपूर्णं भूमण्डलं विधास्यन्तीति । शुभं भूयात् ॥

श्रीमतां कृपाकांक्षी

हरिद्वार ऋषिकुल महोत्सवस्थो वैद्यगणः ।

(Address Presented by the Vidwat Sabha, Muttra, in appreciation of services to Ayurveda, on the 24th December, 1913.)

[ १९७०-तमे विक्रमसंवत्सरे मथुरापुर्य्यां निखिलभारतीय-वैद्यसम्मेलनस्य वार्षिकोत्सवकाले माथुरविद्वत्समिति-प्रदत्तं प्रशस्तिपत्रमेतत् । ]

॥ श्रीः ॥

# प्रशस्तिपत्रम् ।

अस्तीह खलु भराक्रान्तधरोद्धरणशील-जगदाधार-जगन्मङ्गलपादपद्मविचरणपवित्री-भूतेऽचलामूर्द्ध मुकुटस्वरूपेऽस्मिन् भारते वर्षे नगरत्नहिमविन्ध्याचलान्तरालवर्तिन्यतिपुण्य-प्रतिष्ठास्पद आर्यावर्ते गृहीतशक्तित्रितयात्मपूर्णषोड़शकलावतारे श्रीमन्नन्दनन्दनावतरण-स्थले व्रजमण्डले शेषैनोऽपनोदिन्या सत्कृष्णरुचिं दधानया तरणितनुजया श्रीयमुनया पावितायां तत्प्रतीच्यां वेलायां श्रीमद्रमारमण-गोविन्द-श्रीकृष्णचन्द्रजनुः पुरी सप्तपुरी-मुख्या सर्वगुणगुम्फितेयं श्रीमथुरा व्रजराजधानी। तत्रेयं सम्पादिता गुणगण-गुम्फितैरिहस्थैस्सुधीभिर्विविधविद्योन्नतिकारिणी पुरातनागमोपदिष्टधर्माचरणप्रचारिणी श्रीविद्वत्सभा-नाम्नी परिषत् ।

सैवेदानीं वैद्यवंशावतंस-विद्यानिधि एम० ए०, एल० एम० एस० इत्याद्युपाधि-वतां राजलब्धप्रतिष्ठानां चिकित्साशास्त्रोद्धरणशीलानां आयुर्वेदमहामण्डलस्य भूतपूर्वा-धिपतीनां नानाप्रान्तीयभिषग्वरैस्सह समागतानां श्रीमतां श्रीगणनाथसेनकविराजानां दर्शनेनात्युत्फुल्लास्फुटितपुष्पवाटिकेव भासमाना विद्वत्समितिस्तत्रभवत्सु समर्प्यैतत् प्रशस्तिपत्रमेवमाशास्ते ॥

जितामहन्निन्दकवैरिसेन-<br>
श्चिकित्सिताधःस्थितितामसेनः ॥<br>
सुसत्कृतो विज्ञनमानसेन<br>
जीयाच्चिरं श्रीगणनाथसेनः ॥१॥

आयुर्वेदस्वरूपो निखिलगुणवतामग्रणीर्वैद्यवर्यः<br>
कर्तव्ये दत्तचित्तः प्रवचनकुशलो वैद्यवंशावतंसः ॥<br>
आर्षग्रन्थप्रवीणो भरतभुवि भवान् वैद्यसंसत्प्रधानः<br>
आयुर्वेदप्रचारे प्रभवतु कृपया श्रीहरेर्लब्धशक्तिः ॥२॥

इति—प्रार्थयते श्रीमाथुरविद्वत्सभा

पौषे कृष्णे १२बुधे, सम्वत् १९७० ।

( Address Presented by the Ayurveda Pracharini Sabha, Moradabad, in appreciation of services done to Ayurveda, The 1st June, 1912. )

# आयुर्वेदप्रचारिणी सभा,

मुरादाबाद।

## श्रीमान् वैद्यावतंस कविराज श्रीगणनाथसेन—

विद्यानिधि कविभूषण एम. ए., एल. एम. एस. महोदय,

श्रीमान् ने हमारी प्रार्थना पर मुरादाबाद में पदार्पण कर हमको विशेषतः और मुरादाबाद के जनसाधारणको साधारणतः अत्यंत उपकृत किया है, तदर्थ हम श्रीमान् का हृदय से धन्यवाद करते हैं। श्रीमान् ने इस समय, जब कि भारतवर्ष की सब प्राचीन विद्या लुप्तप्राय होचुकी हैं, उसके एक विशेष अंग अर्थात् आयुर्वेदका जीर्णोद्धार करके हमारा और सारे भारतवर्ष का मुख उज्ज्वल किया है उसके लिये श्रीमान् की धवल यशःपताका यावत् चन्द्रसूर्य विद्यमान हैं तावत् भारतवर्षमें फ़हराती रहैगी। श्रीमान् जिसप्रकार पाश्चात्यविद्याके आचार्य्य हैं उसीप्रकार प्राच्यविद्या के महार्णव हैं, पूर्व और पश्चिमको एक करके अपने सुविशाल अनुभवद्वारा आयुर्वेदका उपकार किया है, उसके लिये भारतसन्तान आपकी सदा बाधित रहेगी। आपने गवेषणापूर्ण ग्रंथ लिखकर आयुर्वेदके अनुसार चिकित्सा करनेवाले हमलोगोंके लिये विशाल और सर्वांगपूर्ण अनुभव का जो पथ खोल दिया है, उसके लिये कौन वैद्य आपकी कृपाका धन्यवाद नहीं करेगा। अन्तमें हम "मुरादाबाद आयुर्वेदप्रचारिणी सभा"के सभासद्-लोग श्रीमान् का हृदय से स्वागत करते हैं॥

प० घनानन्द पन्त विद्यार्णव-

प्रमुख वैद्यवर्य्याणाम्।

(Address Presented by Bharat Dharma Mahamandal, Benares, in appreciation of services to Ayurveda, December, 1915.)

महतस्तमसः पारे पुरुषं ह्यतितेजसम् ।
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः ॥

# विद्यासंमानपत्रम् ।

## श्रीयुक्त गणनाथ सेन एम. ए., एल. एम. एस.

महाशय, कलकत्ता ।

ज्ञानस्य जननी विद्या। अविद्यारूपं तमो यया निरस्यते सा विद्या। पारमार्थिकं च तस्या विद्यायाः स्वरूपं संस्कृतां देवगिरं द्वारीकृत्यैव जगति प्राकाश्यत। साम्प्रतमधःपतितायामार्य्यजातौ सद्विद्यां पुनः प्रचार्य्याऽज्ञानोद्यमराहित्यादिदोषजातं च दूरीकृत्य यावदस्यां धर्म्मशक्तिर्न पुनराविर्भाव्यते तावदस्या जीवनरक्षा कर्त्तुं न शक्यते। आदिशिक्षितायामादिमननशीलायामादिज्ञानविदि जगद्गुरुत्वेन अभिमतायामार्य्यजातौ सद्विद्यायाः पुनर्विकाशार्थं सनातनधर्म्मस्य पुनरभ्युदयसाधनपुरस्सरं जगत्कल्याणकारिण्या धर्म्मशक्तेराविर्भावार्थं च सकलधर्म्मसभाधर्म्मालयानां समष्टिरूपायाः श्रीभारतधर्म्ममहामण्डलाख्याया विराड्धर्म्मसभायाः स्थापनमभूत्।

यत्र ये केचित् श्रीसरस्वतीदेव्याः कृपास्पदीभूताः विद्वांसो विद्योन्नतौ रतास्ते सर्व्वेऽप्यस्याः स्वजातीयविराड्धर्म्मसभायाः प्रेमभाजनानीति भवतो विविधविद्यायोग्यतया प्रसन्नेयं स्वजातीयधर्म्ममहासभा सद्विद्यायाः सम्मानवृद्ध्यर्थं भवन्तं "विद्यासरस्वती" विद्योपाधिरूपाऽलंकारेणाऽलंकृत्य परमं प्रमोदमश्नुते। सर्व्वज्ञानमयस्य सर्व्वशक्तिमतः परमेश्वरस्य चरणकमलयोः सविनयं प्रार्थयते च भवत आध्यात्मिक्युन्नतिर्भूयादिति शम्।

श्रीकाशीधाम्नि
श्रीभारतधर्ममहामण्डलप्रधानकार्य्यालयः।
अष्टमी तिथौ कृष्णपक्ष पौषमासे १९७२ वर्षे
(स्वा०) श्रीरामचंद्र नायक कालिया
प्रधानाध्यक्षः।

(स्वा०) श्रीरामेश्वर सिंहः
( मिथिलाधिपतिःमहाराज दर्भङ्गा
जी. सी. आई. ई. )
श्रीभारतधर्म्ममहामण्डलस्य सभापतिः।

( Address Presented by the Sahitya Sabha, Calcutta, at a Vast Congratulatory Evening party held on the 6th August, 1916. )

श्रीनारायणो जयति ।

अशेषशास्त्राध्यापक-वैद्यावतंस-महामहोपाध्याय—श्रीगणनाथ सेन एम्-ए, एल्-एम्-एस्, विद्यानिधि-विद्यासरस्वती-महोदयस्य सम्माननार्थं वङ्गीय"साहित्यसभा"प्रदत्तम्

## अभिनन्दनपत्रम् ।

वाराणसीभूषणविश्वनाथा-
द्वाप्तजन्मा गणनाथ एषः ।
सिद्धया महिम्नाऽद्य गतोऽग्रभूमिं
गणेषु नैतत् खलु विस्मयाय ।

शास्त्रं "प्रत्यक्षशारीर"मिह विजयते यस्य लोकातिशायि
ह्रीणो वाचस्पतिर्यद्वचनविलसितैः प्रौढगम्भीरबन्धैः ।
क्षीणायुर्वेदविद्या तरुणिमनि पुनर्येन दत्तास्पदाऽभूत्
स त्वं जीयाः शतायुर्विमलगुणगणैर्भासयन्नार्य्यभूमिम् ॥

त्वं 'साहित्यसभा'-सदस्य इति ते सम्माननैषा नृपा-
दस्माकं हृदि सन्तनोति परमानन्दाब्धिमुद्वेलितम् ।
तेन प्रीत्यभिनन्दनं सदसि ते यद्दीयते गौरवात्
तत् प्रीत्या परिगृह्यतां, ननु सतां प्रेमैव मूल्यातिगम् ॥

महामान्यः सम्राट्प्रतिनिधिरुपाधिं त्वयि दिशन्
गुणेष्वेव प्रीतिं परमकृत लोके प्रकटिताम् ।
हृतो दैवात् प्राप्तो मणिरिव पुनस्त्वत्प्रतिभया
महान् मानस्तोषं जनयतितरां सज्जनहृदि ॥

आयुर्वेदं दैन्यविघ्नादुद्धरन् सिद्धिसम्पदा ।
राजसे गणनाथ त्वं गणनाथ इवापरः ॥

कलिकाता महानगर्य्यां
श्रावणशुक्लसप्तम्यां
सं १९७३ ।

श्रीराजेन्द्रचन्द्र शास्त्रिणः
"साहित्य सभा" प्रतिनिधिभूतस्य सम्पादकस्य ।

(Address in Silver Casket Presented at a Congratulatory Meeting of the Citizens of Calcutta held on the 16th July, 1916.)

प्राच्यप्रतीच्यज्ञानविज्ञानैकनिधान—निखिलभारतीयबुधजनानेकसम्मानभाजन—

नानादिग्देशागतशिष्यवृन्दवन्दितचरणारविन्द—वैद्यावतंस—

**महामहोपाध्याय कविराज श्रीगणनाथ सेन एम्-ए, एल्-एम्-एस्,**

विद्यानिधि-कविभूषण-करकमलयोः—

कलिकातावास्तव्य-गुणमुग्धहृदय-समवेतसकलसामाजिकसज्जनानाम्

# अभिनन्दन-पत्रम् ।

प्राच्यप्रतीच्यविद्याब्धिलब्धचिन्तामणिर्भवान् ।

गुणानुरक्तसुहृदामद्य प्रेम्णैव तृप्यताम् ॥

राजार्त्तलोकपरिरक्षणदक्षकर्म्मा
धन्वन्तरिः समुदियाय यतो नगर्य्याः ।
तस्यां तथाप्तजनुषं वृणुते न कस्त्वाम्
श्रीविश्वनाथतनयं गणनाथमुच्चैः ॥

लब्ध्वा प्राक्तनसंस्कृतेः सुरगिरां सर्वस्वमाबाल्यतः
काव्यालंकृतिदर्शनाम्बुधिसुधामाकण्ठमाचामता ।
कैशोरे कवितामृतैर्बुधजनान् सन्तर्प्य लब्धश्रिया
आयुर्वेदपयोधिरप्यतितरां तीर्णस्त्वया लीलया ॥

दुर्दैवेन समस्तभारतभुवां सारं परं वैद्यकम्
ध्वस्तप्रायमतीतदीप्तमहिमश्रीसाक्षितामागतम् ।
अस्माभिः कटुफेरुशब्दमुखरे ध्वान्ते श्मशानेक्षितम्
तेजोभिः परिधूय सन्तततमस्त्वं शोभयन् शोभसे ॥

दिष्ट्याऽनन्तमचिन्त्यमद्भुतमिदं ज्ञानं त्वया बिभ्रता
भग्नस्तूपमिदं सुरम्यरचनं हर्म्यं पुनः कल्पितम् ।
यत् सम्प्रत्यधिगत्य गोपुरमिदं "प्रत्यक्षशारीरकम्"
"सिद्धान्ताख्यनिदान" दीपसहिताः शिष्या विशन्त्यञ्जसा ।

त्वं सत्यव्रतकोविदैरभिहितो "विद्यानिधि" गौरवात्
श्रीमद्भारतधर्म्ममण्डलबुधैः "विद्यासरस्वत्य" पि ।
गीतस्त्वं भिषजां गणैश्च निखिलै "र्वैद्यावतंस" श्च यत्
किंचित्, ननु भारते भुवि भवान् कस्यास्ति वा नाग्रणीः ॥

सोऽयं शास्त्रमहीरुहानिह नवीकुर्व्वन् सुधाशीकरै-
राकाश्मीरकुमारिकं निजयशोज्योत्स्नां तनोषि स्थिराम् ।
येनाद्वेलजलेन वारिनिधिना दूतेन पारेऽपरे
श्रीमद्भारतभूपतिस्तव गुणानित्यं मुहुः श्रावितः ॥

"प्राचीनामार्य्यविद्यां वितरति बहुधा, शिष्यवर्य्यास्तदीया-
स्तोर्थीभूताः परेषां, दिशि दिशि हि परे तेऽपि चाध्यापयन्ति ।
सोऽयं श्रीभारतेऽस्मिन् सकलबुभिषजां संसदीशो वरेण्यो-
ऽनेकग्रन्थप्रणेता प्रियगुण, भवता माननीयो यथार्हम् ॥"

**भूमण्डलार्द्धाधीशेन राजराजेश्वरेण तत् ।**
**महामहोपाध्याति कीर्त्तितः स्याः शतं समाः ॥**

इति कलिकाता महानगर्य्याम्
सम्वत् १६७३
श्रावण कृष्ण प्रतिपदि रविवासरे ।

**महामहोपाध्याय लक्ष्मण शास्त्रि—**
**सर् कैलासचन्द्र वसु प्रभृति-**
**प्रमुखैः सदस्यैः सादरमर्पितम् ।**

(Address in Silver Casket presented at a Congratulatory Evening Party by the Vidwat Sabha—Calcutta on the 18th June, 1916.)

अशेष-शास्त्रपारावार-पारंगत—दिगन्तविस्तारिकीर्त्ति-सन्तान—प्रपन्नार्त्तजन-रोगपरित्राणपरायण-महामहोपाध्याय-वैद्यावतंस—श्रीगणनाथसेन-विद्यानिधि-सरस्वती—एम्-ए, एल्-एम्-एस्—कविभूषण-

करकमलयोः—

विद्वत्सभासमवेतानां वैद्यबुधवृन्दानाम्

# अभिनन्दनपत्रम् ।

महात्मन् गणनाथ—

सद्वैद्यवंशपीयूषपाथोधेरमृतांशुवत् ।
दिष्ट्या समुदितं कस्त्वां सतृष्णो नाभिनन्दति ॥

२

आ बाल्यात् सुरभारतीमधुरिमास्वादोन्मदेन त्वया
वेल्लद्व्याकरणाम्बुधिश्च लुकितः, काव्यश्रियो लुण्ठिताः ।
तारुण्ये कवितारसैरतितरां धीमन्मनः प्लावितम्
शास्त्रार्थेषु च निर्ज्जितो बुधगणः,—किं किं न चित्रं कृतम् ॥

३

विद्याकल्पद्रुमाणां चरणपरिचरः स त्वमुच्चैः पितॄणाम्
सांख्यन्यायादिशास्त्रेष्ववहितसुमतिर्वेदवेदान्तनिष्ठः ।
श्रामं श्रामं प्रतीच्येष्वपि निखिलनयेष्वर्ज्जिताशेषरत्नः
शास्त्रे धान्वन्तरेऽपि प्रथयसि गुरुतां वैद्यकाम्भोधितीर्णः ॥

४

"प्रत्यक्षशारीर"मशेषवैद्य-
बोधाय वेधा इव यो व्यधत्त ।
"निदानसिद्धान्त" मनन्ततत्त्व-
रुद्धास्य भानोरिव यस्य तेजः ॥

५

तस्यानवद्याखिलभारतीय-
सद्वैद्यसंसत्पति-मानभाजः ।
भिषग्वर श्रीगणनाथसेन,—
धन्यास्तव स्मो गुणकीर्त्तनेन ॥

६

अध्यापितागणितशिष्यजनैः प्रवीणै-
र्व्याख्यामृतैश्च तव तृप्यति वैद्यलोके ।
आसेतुशीतगिरि धावति कीर्त्तिदूते
कस्त्वां न मानयति सर्वभिषग्वरेण्यम् ॥

७

यो "वैद्यष्ववतंस" इत्यभिहितः सद्वैद्यसम्मेलने,
श्रीमद्भारतधर्म्ममण्डलबुधै "र्विद्यासरस्वत्य"पि ।
तस्मै तुभ्यमशेषवित् प्रियगुणः श्रीभारताधीश्वरः
स्थाने कीर्त्तिमते "महोत्तरमहोपाध्याय"शोभामदात् ॥

८

वैद्याख्यब्राह्मणानां सुचिरपरिचितं रत्नमापत्तमिस्रा-
मग्नं तेजः प्रभावात् पुनरधिकुरुषे श्रीमुषां ग्रासतो यत् ।
अद्य त्वां वैद्यभास्वन्, बुधजननलिनश्रीसमुन्मीलनं तत्
सम्मानाशीर्भिरुच्चैरभिवदति मुदा वैद्यविद्वत्सभेयम् ॥

९

नारायणपदाम्भोजरजस्त्वामभिरक्षतु ।
ब्राह्मेण तेजसा युक्तः सुखं जीव शतं समाः ॥

इति—

कलिकाता महानगर्य्यां

( संवत् १९७३ वैद्याब्द १३२३ ) आषाढ़स्य चतुर्थवासरे

विद्वत्सभा-सभ्यवृन्दैः

प्रदत्तम् ।

( Address of Welcome Presented in Silver Casket by the Ayurvedic Physicians and General public assembled in a large Reception Meeting at Jubbulpore, 29th March, 1920. )

श्रीधन्वतरये नमः ।

# अभिनन्दनपत्रम्

श्रीमन्महामहोपाध्याय-वैद्यावतंस-विद्यानिधि-कविभूषण-सरस्वत्याद्यनेकोपाधि-समलंकृतानां श्रीगणनाथसेन कविराज, एम. ए., एल. एम. एस—महोदयानां करकमलेषु बहुमानपुरःसरमर्प्यतेऽभिनन्दनपत्रमिदम् ।

विहाय प्रयागस्थविद्वद्वराणां त्वया स्वीकृता प्रार्थनाऽहो मदीया ।
सभेयम्प्रहृष्टा सुधन्या ह्यतोऽद्य प्रहृष्येत्स्वसिद्ध्या कथं को न लोके ॥१॥

संदर्श्य मार्गम्भिषजां समुन्नतेः कृतोपकारा भवता यदन्वहम् ।
विस्मर्तुमेतन्न सुवैद्यसन्ततिः समाः सहस्रं क्षमते हि भारते ॥२॥

प्राचाम्प्रभावेण गता गुरुत्वं म्लानाधुना कालवशेन सेयम् ।
भवादृशां ज्ञानबलेन भूयो लब्धप्रतिष्ठा खलु वैद्यविद्या ॥३॥

वेदाद्यंगरहस्यवेदिनममुं सर्वाभिलाषप्रदम् ।
लोकाऽज्ञानहरं सदाशिवकरं श्रीविश्वनाथात्मजम् ।
प्रेम्णा श्रीगणनाथमेव सुधियः सम्प्राप्य लब्धास्पदाः
मोदन्ते हृदये विशीर्णहृदयं ह्यष्टांगमुज्जीवति ॥४॥

येनाखिलं योगिजनैकगम्यं प्रत्यक्षमेतद् बहुगूढतत्वम् ।
अकारि शारीरमहो स्वबुद्ध्या, स्तुत्यः कथं नो गणनाथसेनः ॥५॥

प्रत्यक्षशारीरमहो विलोक्य प्रेमात्मदेहप्रभवं त्यजद्भिः ।
शारीरकज्ञैः कृतमात्मनीनं, गुणेऽनुरागो गुणिनां न वस्तुनि ॥६॥

इत्येव याचे गणनाथतोऽद्य, भूयाच्छतायुर्गणनाथसेनः ।
कालः समेयाच्च शुभः स शीघ्रं, कीर्तिः स्थिरा सद्भिषजां यतः स्यात् ॥७॥

चैत्र शुक्ल दशम्यां
चन्द्रवारे सं० १९७७

भवदीयचरणसरोरुहरजःकांक्षिणी
**जबलपुरीया—वैद्यसभा ।**
( श्रीमद्गोविन्दशास्त्रि प्रमुखा )

〈Complimentary Address Presented in Public meeting of Ayurvedic Physicians of Cochin State, S. India, the 18th Oct. 1923.〉

[ कोचीन राजधान्यां त्रिचूड़ाख्य (शिवपुर) नगर्यां समवेतानाम्
'अष्टवैद्य'प्रमुखानां विद्वद्वर्याणां सदसि प्रदत्ता । ]

## महामहोपाध्याय कविराज श्रीगणनाथसेन-सरस्वतीमहाशयानां

पादमूले श्रीशिवपुरवासिभिरायुर्वेदप्रणयिभिः सबहुमानादरमुपह्रियमाणेयं

# स्वागतपत्रिका ।

अयि भो आयुर्वेदपारावारपारीणा महाशयाः !

तत्रभवत्सु निरतिशयां बहुमतिं प्रणयातिरेकञ्च धारयतामेतद्देशवासिनामस्माकमतिचिराभिलषितमिदं तत्रभवतां सन्दर्शनभागधेयमनुकूलेन विधिनाद्य समपादीति सर्वे वयमिदानीं परामानन्दकाष्ठामधितिष्ठामः । प्रमोदभरपरवशैः कतिपयैरक्षरैरकैतवानुरागावेदकं स्वागतञ्च वो व्याहरामः ।

पौरस्त्य-पाश्चात्यवैद्यविज्ञानयोः स्पृहणीयां वैशारदीमधिजग्मुषां भवतां, धनुष्मतामिव सव्यसाचिनः, भिषग्वराणामग्रेसरभूयमनितरसाधारणं विलसतीतीदमत्रत्यैरिव पाश्चात्यैरपि सुतरामभिनन्द्यत एव । अमुमेवार्थं द्रढ़यति तत्रभवद्भिरनायाससम्पादिता सर्वकलाशालाविरुदावलिरिव सार्वभौमसम्मानिता साधारणसुदुर्लभा महामहोपाध्यायपदवी ।

भवतां पाण्डित्यप्रकर्षस्य विज्ञापकं 'प्रत्यक्षशारीरं' नाम ग्रन्थरत्नं यस्मिन्नेवानेहसि केरलदेशे प्रथमप्रवेशमलभत, ततःप्रभृति निरर्गलमिह विसृत्वरी श्रीमतां यशस्सन्ततिः केरलीयानां श्रीमत्सु महीयसीं बहुमतिमकैतवञ्चानुरागमनुदिनमादधातीति प्रमोदभरिताः प्रस्तुवीमः ।

साम्प्रतं विधिवैपरीत्येन शोचनीयां दशामापन्नाया आयुर्वेदसरणेः पुनरुद्दिधीर्षया वितन्यमानोऽयं राजकीयोद्यमो यथा नाम नचिरेण फलेग्रहितामासादयेत्तथा तस्य समीचीनपथप्रणयनं भवादृशेष्वायत्तमिति सविनयं स्मारयामः । गुरुतरे चात्र विषये चिरन्तनादारभ्य कालादायुर्वेदप्रचारेणे कामपि प्रथामधिगतस्यास्य केरलदेशस्यापि गणनीयता भवद्भिराकलितेति,—धन्यानस्मान् मन्यामहे । अपिच, समुचितस्य साहाय्यस्याधाने वयमिमे बद्धश्रद्धा इति च बोधयामः ।

तत्रभवतामिदं प्रथममेतद्देशसन्दर्शनं परस्परप्रणयस्येवोभयेषामप्यभ्युदयपरम्पराया नान्दीभावमालम्बतामिति सर्वान्तर्यामिणं प्रार्थयमाना व्याहृतपूर्वमेव स्वागतं सकृदप्यावर्तयमानास्सम्प्रति विरमामः ॥ शुभं भूयात् ॥

श्रीशिवपुरात्
18th Oct. 1923.

इति विनयावनतकन्धराः
आयुर्वेदप्रणयिनः

[ स्वा० ए. कृष्णन् नायर. के. नारायण मेनोन्, कृष्णन्, टी. वासुदेवन् मूस, पी. के. नारायणन् नम्बीशन्, इळ्याणत् कृष्ण मेनोन्, के. वासुदेवन् मूस् नीलकण्ठन्, पी. वासुदेव नम्बीशन्, एस. रामन् ब्यारियर, पी. जोसेफ़-प्रमुखा विद्वांसः । ]

